॥ श्रीरघुनाथोजयति ॥

# ॥ श्रीहर्षचरित्रकाव्यप्रारम्भः

श्रीमन्महाराजाधिरा
ज जम्बूकाश्मीरति
ब्बताद्यनेकादेशाधी
श प्रभुवरश्रीमहारा
जरणवीरसिंहवहादु
रजीकीआज्ञानुसारय
हहर्षचरित्रकाव्य वि
द्याविलासनामकमुद्रा
यंत्रालयमे शिवरामभट्ट
के अधिकारसे मुद्रित
भयासंवत् १९ ३६
ज्येष्ठ प्र० ६

ॐश्रीसरस्वत्यैनमः ॐइच्छादिशक्तिनिचयप्रचयक्रमेणविश्वावभासनविधौप्रथितप्रभावा याध्यायिनांहृदयकोकनदप्रतिष्ठारूपंप्रकाशयतिनौमिसरस्वतींताम् १

ॐस्वस्तिश्रीगणेशायनमः ॥ ॐश्च्योतन्मदांबुभरनिर्भरचण्डगण्डशुण्डाग्रशोण्डपरिमंडितभूरिभृंगान् विघ्नानिवानवरतंचलगण्डतालैरुत्सारयन्जयतिजातघृणोगणेशः १ शंकरनामकश्चिरञ्जीमत्पुण्याकरात्मजोऽव्यालिखत् शिष्टोपरोधवशतः संकेतंहर्षचरितस्य सर्वकर्माणिकुर्वीतप्रणिपत्येष्टदेवतामिति शिष्टाचारमत्रपालयन् अपारेकाव्यसंसारेकविरेवप्रजापतिः यथास्मैरोचतेविश्वंतथेदंपरिवर्त्तते इतिकाव्यलक्षणामपूर्वांसृष्टिरचितां प्रवर्त्तयन्नेष कविः शिवंबहुशक्तियुतमपि नियतःशक्त्यात्मकमेव स्तौति १

नमस्तुंगशिरश्चुंबिचंद्रचामरचारवे त्रैलोक्यनगरारं
भमूलस्तंभायशंभवे२हरकंठग्रहानंदमीलिताक्षीन
माम्युमां कालकूटविषस्पर्शजातमूर्च्छागमामिव३

नमस्तुंगेत्यादिना नकाचित्प्रणतेयोमूर्धातत्स्पर्शीचन्द्रएवसि
तवालतुल्यप्रभाप्रसरतया स्वेदादिविनाशाद्विशिष्टस्थानस्थि
तश्चचामरं त्रैलोक्यमेव नानाभंगिशोभित्वान्नगरं तदारंभे
मूलस्तंभः नगरारंभेहि मूलस्तंभोभवति तत्रच षट्टबंधा
दिवदुत्प्रेक्षणानंतरमुन्नते पृष्ठदेशेचन्द्रतुल्यं श्वेतंचामरांकियत
इतिस्थितिः केचित्पुनस्त्रैलोक्यनगरस्यारंभमूलंमूलकारणंपर
माणवस्तेषामुपाश्रयेणमूलकारणत्वात्स्तंभइव तेहि तद्दशा
त्कार्यमारभन्ते तस्यनिमित्तकारणत्वादित्याहुः स्वयंभूःशंभु
रादित्यइतिनामसहस्रेदृष्टत्वाद्धरेः शंभूब्रह्मत्रिलोचनावित्यभि
धाकोशदर्शनाच्च ब्रह्मणोपिनमस्कारोयमित्यन्येवदंति व्याकु
र्वतेच हरिपक्षे त्रैलोक्याक्रमणकाले यद्दा यस्याग्निरास्यंद्यौर्मूर्धा
खंनाभिश्चरणौमही इत्यभिप्रायेण तुंगमुच्छ्रितंद्युलक्षणंयच्छिरः
तच्चुंबिचंद्रएवचामरंतेनचारवे ब्रह्मपक्षे चंद्रःस्वर्णतन्मयंचामर
मिवचामरंकेशकलापः हिरण्यकेशोहिब्रह्मा त्रैलोक्यादीनिस्प
ष्टतुल्यमिति २ हरेत्यादिना प्रियंप्रतिगाढस्नेहादिसौकुमार्यं
चोमयोच्यते कालकूटविषेतिप्रशंसार्थः सामान्यपदप्रयोगे मे
रुमहीधरचूतवृक्षादिवत् आगमःप्रारंभः ३

नमःसर्वविदेतस्मैव्यासायकविवेधसे चक्रेपु
ण्यंसरस्वत्यायोवर्षमिवभारतम् ॥ ४ ॥

संप्रत्युत्कृष्टकवित्वाभिमानेन तादृशमेव कविवरंस्तौति नमः सर्वेत्यादिना सर्वावेदाधिकाविद्यागीतादिकलाश्च वेत्तियः तस्मै तदुक्तं नासौशब्दोनतद्वाच्यंनसाविद्यानसाकला जायते यन्नकाव्यांगमहोभारोमहाकवेरिति कविरेववेधाः उक्तंच अपारे काव्यसंसारे कविरेवप्रजापतिः कवीनांवेधाः कविशब्दोत्रोपचारात् कविबुद्धिषु वर्त्तते तेन कविबुद्धीनां श्रेष्ठ इत्यर्थः तथाचाहमुनिः इतिहासोत्तमादस्माज्जायंते कविबुद्धय इति यद्वा व्युत्पत्त्युत्पादनद्वारेण कवयएवंभूताः संतःक्रियंते मुख्यएव कविशब्दस्यार्थः यदुक्तं इदंकविवरैः सर्वैराख्यानमुपजीव्यत इति पुण्यं पावनं यदुक्तं भारताध्ययनात्पुण्यादपिपादमधीयतः श्रद्दधानस्यपूयंते सर्वपापानि देहिन इति सरस्वतीवाणी तस्यालतायाइव पुष्पादिहेतुत्वात् वर्षं वृष्टिमिव वर्षं वा स्थानविशेषः यतोसौ तत्रास्ते यदुक्तं यदिहास्तितदन्यत्र यन्नेहास्तिनतत्क्वाचित् भारतानधिकृत्यकृतोग्रंथो भारतस्तं यद्वाभारतंवर्षमिव भरतः कश्चिद्राजा तस्यनिवासं भारतं वर्षं भूभागैकदेशस्तदिव उक्तंच स्याद्वृष्टयांलोकधात्र्यंशेवत्सरेवर्षमस्त्रियामिति यद्वा भारतवर्षान्तरस्थाभावा मनुष्येषु सुलभास्तद्वन्महाभारतस्था सरस्वती एतदपि सरस्वत्याख्यया नद्या पुण्यमेवं सर्वज्ञतागुणकथनेन कविप्रशंसांकृत्वा काव्यप्रशंसामाह प्रायइत्यादिना ॥ ४ ॥

प्रायःकुकवयोलोकेरागाधिष्ठितदृष्टयः को
किलाइवजायन्तेवाचालाःकामचारिणः ॥ ५ ॥

काव्यमेवं नाम स्वभावसुभगं येनेदृशा अपि कवयःप्रायः प्राचुर्ये
णकोकिला इवजायंते वल्गुवाचः संपद्यन्ते किंपुनःसंविशि
ष्टा नजायेरन् केचित्पुनर्भूयसा कुत्सिताः कवयो जायंतइति
कुकविनिन्दैवेयमिति व्याख्यातवंतः रागोद्वेषपूर्वकोनर्था
भिनिवेशः तेनाधिष्ठिता दृष्टि र्बुद्धिर्येषां वाचाला असंबद्धप्रला
पिनः कामेन स्वेच्छया नत्वलंकारकृद्दर्शितनीत्या कुर्वंतिये
ते कोकिलपक्षे कुकंतिगृह्णंति चेतांसि इति कुकाः तेच
तेवयो मयूरप्रवराः पक्षिणो रागोलौहित्यं दृष्टिश्चक्षुः वा
चा भारत्या आलाः आसमंताल्लांति आवर्जयंति यतस्ता
दृशाः संतः कामं व्यसनं कुर्वंति तच्छीलाः कामोद्दीपन
विभावतां यांतीत्यर्थः यद्वा अवाचालाः अकारप्रश्लेषोत्र॥ ५

संतिश्वानइवासंख्याजातिभाजोगृहेगृहे उत्पा
दकानवहवःकवयःशरभाइव ॥ ६ ॥ अन्य
वर्णपरावृत्त्यावन्धचिन्हनिगूहनैः अना
ख्यातःसतांमध्येकविश्चौरोविभाव्यते॥७ ॥

संतीत्यादि असंख्या अगणनार्हाः जातिंस्वरूपवर्णना
मात्ररूपां वक्रोक्तिशून्यां भजन्ते गतोऽस्तमर्को भातीन्दुर्या
ति वासाय पक्षिण इत्यादिवत् श्वानोप्यसंख्या नास्तिसंख्य
संग्रामोयेषांते जातिशब्देनात्र श्वजातिसमवेता अमेध्य
भक्षणादयोगृहीताः॥यद्वाश्वत्वंनामजातिः तत्प्रतिपादनंप्रयो
जनांतरशून्यतामावेदयति उत्पादका नवनिर्माणकारिणः
ऊर्ध्वपादाश्च शरभाहिप्राणिभेदा अष्टपादाएते श्वजातीया
इति केचित् ॥ ६ ॥ अन्येति कविश्चौरः सहृदयानांमध्ये ना
ख्यातः कथितोपि नज्ञायते नुआसमंतात् ख्यातोपितु किंचि
त्प्रथितोवा अन्ये पूर्वकविनिवद्धविलक्षणाये वर्णा अक्षरा
णि तेषांरचनेन वंधचिंह्न श्रीलक्ष्मीप्रभृतिरचनालिंगं अन्येतु
भाषालंकारप्रभृतिवंधचिन्हमाहुः अथच सतां साधूनां म
ध्ये चौरो लक्ष्यते कीदृक् नना अना कापुरुषः अख्यातो
ऽप्रसिद्धः केन अन्यः प्राक्तनच्छायाव्यतिरिक्तस्त्रासकृतः पा
ण्डिमादिर्वर्णः मुखरागविशेषस्तत्परिवर्त्तनेन यद्वा शूद्रत्वेस
तिद्विजादिवर्णाश्रयेण स्वजात्युचितस्य स्वभावस्य त्यक्तुमश
क्यत्वाद्भावप्रकटनमवश्यमेव भवति यतोवंधः शृंखलादि
कृतोग्रंथि स्ताच्चिन्हत्वं त्वगूदूषणादि ॥ ७ ॥

श्लेषप्रायमुदीच्येषुप्रतीच्येष्वर्थमात्रकं उ
त्प्रेक्षा दाक्षिणात्येषु गौडेष्वक्षरडंबरः॥ ८॥
नवोर्थोजातिरग्राम्या श्लेषोक्लिष्टःस्फुटोरसः
विकटाक्षरबंधश्चकृत्स्नमेकत्रदुष्करम् ॥९॥

श्लेषेत्यादि मात्रकपदेन श्लेषयमकाद्यलंकारशून्यत्वंदर्शयति अक्षरेत्यादिना अर्थविशेषाभावं प्रसादादिगुणागुंफनाभावं चाख्याति एतदुक्तं भवति क्वचित्कश्चिद्गुणोपि भवति सच भवन्नपि न सहृदयजनावर्जकइति अमुनैवाभिप्रायेण नव इत्यादीनि प्रत्येकं विशेषणपदानिवक्ष्यति ८॥ नवइत्यादि नव आद्यैः कविभिः अनिबद्धः चमत्कारीचजातिःस्वभावोक्तिः अग्राम्येति नतु गतोऽस्तमर्क इत्यादिरूपा सधर्मेषु तंत्रप्रयोगः श्लेषः आश्लिष्टः सम्यगनेकार्थप्रतिपादनक्षमः स्फुटो दुर्बोधभंग्यादिभिः अदूषितः रसः शृंगारादिः विकटः उदारतालक्षणबंधगुणयुक्तः यत्रसति नृत्यंतीव पदानि प्रति भासंते ॥ ९ ॥

किंकवेस्तस्यकाव्येनसर्ववृत्तांतगामिनी क
थेवभारतीयस्यनप्राप्नोतिदिगंतरम् १०उच्छ्वा
सांतेप्यखिन्नास्तेयेषांवक्रेसरस्वती कथमा
ख्यायिकाकारानतेवंद्याःकवीश्वराः ॥ ११ ॥

किमित्यादि वृत्तानिवर्णमात्रागणसमार्थसमविषमरूपाणि त
दंतगमनंतद्विरचनक्षमत्वंभारतीवाणीनप्राप्नोति अदृष्टमपिदृष्ट
मिव जगत्रयंप्रतिभानवशाद्व्युत्पत्तेश्च तथात्वेन प्रकाशयति
यद्वाजगत्रयप्रथिताभवतीतिस्फुटएवार्थः भरतानधिकृत्यग्रथिता
भारती कथैव सापिसर्वे येवृत्तांताः सत्पुरुषचरितान्युपाख्या
नानिचतान्गमयति बोधयति तथासर्वत्रज्ञेयाभवति तथाच ना
रदोश्रावयद्देवानासितोदेवलःपितॄन् गंधर्वयक्षरक्षांसिश्राव
यामासवैशुक इत्युक्तं १० अधुनास्वगुरुतः स्वप्रभृतिभिः कृ
तानाख्यायिकादीन् काव्यभेदान् स्तुवन्ननौद्धत्यार्थं सर्वत्र नम
स्कारमाह उच्छ्वासांतइतिउच्छ्वासइवोच्छ्वासोविश्रांति
स्थानं सर्गादिवत्कथासंधिस्तस्यांतेप्यखिन्ना उच्छ्वासांतरक
रणक्षमा अविच्छिन्नप्रतिभाना इतियावत् गुरुत्वाद्बहुवचनं
नाद्यांतोह्यंत्रुधेवंक्रमितिवक्रलक्षणं वक्रे सरस्वती वृत्तविशेषयो
गिनीत्यर्थः एतस्मिन्नाख्यायिकाकाङ्क्षिभाविवस्तुसंसूचनाय वा
ख्विरच्यते तथाचाहभामहः

कवीनामगलद्दर्पोनूनंवासवदत्तया शक्त्येव पांडुपुत्राणांगतयाकर्णगोचरम् ॥१२ ॥ पदबंधोज्ज्वलोहारीकृतवर्णक्रमास्थितिः भट्टारहरिचंद्रस्यगद्यबंधोनृपायते ॥ १३ ॥

वक्त्रंचापरवक्त्रंच काव्येभाव्यार्थशंसिनीति आख्यायिकाःकुर्वंतीत्याख्यायिकाकाराः यद्वा आख्यायिकेवाकारोयेषां अथक विपुराणमितिन्यायेनकवयश्चते ईश्वराहारिहरब्रह्माणः उच्छ्वसंति भूतान्यस्मिन्नित्युच्छ्वासःकल्पःतदंतसंहारेपि तेअखिन्नाः कल्पांतरजननोद्योगिनः तेषांमुखे वागीशी उक्तंच सरस्वती वाग्बलमुत्तमोनिल इत्यादि आख्यायिकाभिराख्यानैराकारोयेषां सर्वस्यहि शास्त्रागमसमधिगम्याः नपुनः प्रत्यक्षलक्ष्याः तेचवंद्याः सर्वस्य ॥ ११ ॥ कवीनामिति वासवदत्ता कथा वासवेन शक्रेण दत्ताच कर्णः श्रवणंराधेयश्च कवीनां काव्यकर्तॄणां द्रोणादीनांच १२ पदेत्यादि पदानां सुप्तिङंतानांबंधः प्रकृष्टा रचना रीतिरित्यर्थः स्वमंडलावष्टंबश्च हारीहृद्योहारयुक्तश्च अहारीतिवा नकस्यचिदपि यो हरति कृता वर्णानामक्षराणां क्रमेण भामहादिप्रदर्शितनीत्या स्थितिरवस्थानं यत्र कृतयुगवद्वर्णानां द्विजादीनां क्रमेण मन्वादिस्मृतिकारप्रकाशितमार्गेण स्थितिः पालनं यस्मिन् सतीतिच भट्टारेति पूजावचनम् ॥ १३ ॥

अविनाशिनमग्राम्यमकरोत्सातवाहनः वि
शुद्धजातिभिः कोशंरत्नैरिवसुभाषितैः ॥
१४ कीर्त्तिःप्रवरसेनस्यप्रयाताकुमुदोज्ज्व
ला सागरस्यपरंपारंकपिसेनेवसेतुना ॥
१५ ॥ सूत्रधारकृतारंभैर्नाटकैर्बहुभूमिकैः
सपताकैर्यशोलेभेभासोदेवकुलैरिव ॥१६ ॥

अविनाशिनमित्यादि अविनाशिनं प्रसिद्धमनश्वरंच अग्राम्यं वैदग्ध्ययुक्तं अग्राम्यभवंच जातिःस्वभावोक्तिरूपोलंकारः कोशः समुच्चयो गंजश्च सुभाषितैः सूक्तिभिः शोभनंच भाषितं प्रभावर्णनं येषांतैः ॥ १४ ॥ कीर्त्तिरित्यादि प्रवरसेनः कश्चित्कविः प्रवे कुले रसोयेषां ते प्रवरसाः वानराः तेषामिनः स्वामी प्रवराचसेना यस्यस सुग्रीवश्च कुमुदवत् कैरववत् यद्वा कुः भूमिः तस्यामुत्प्रहर्षः तयेति कुमुदेन वानरसेनापतिनाच सेतुः प्राकृतकाव्यग्रंथः सेतुश्च ॥ १५ ॥ सूत्रेत्यादि सूत्रधारः पूर्वरंगस्य प्रवक्तास्थापकः स्थपतिश्च भूमिकाः पात्राणि रामाद्यनुकार्यावस्थाभूमयः उपभोगनिमित्तान्युत्पत्तिस्थानानि पताका अर्थप्रकृतिः उक्तंच बीजंबिन्दुः पताकाच प्रकरीकार्यमेवच अर्थप्रकृतयोह्येताःपंचसर्वप्रयोगगाइति यद्वृत्तंतुपरार्थंस्यात्प्रधानस्योपकारकं प्रधानवच्च कल्प्येतसापताकेतिकीर्त्यंते वैजयंतीच पताका ॥ १६ ॥

निर्गतासुनवाकस्यकालिदासस्यसूक्तिषु प्री
तिर्मधुरसांद्रासुमंजरीष्विवजायते ॥१७॥

निर्गतास्विति निर्गता उच्चारितमात्राः आस्तां तावदर्थावग
तिः आपातएव गीतध्वनिवत् किमपि श्रोत्रहारिण्यः यदुक्तं
अपर्यालोचितेऽप्यर्थे वन्धसौन्दर्यसंपदा गीतवद्धृदयाल्हा
दंतद्विदांविदधातियत् तत्काव्यमित्यादि तथा निर्गताःसर्व
देशप्रतीताः अन्यत्र निर्गताः अभिनवोद्भिन्नाः नवाकस्येत्य
नेनैतदुक्तं आसतां तावत्काव्यतत्त्वविदः सहृदया विवेकारो
येपि शास्त्रप्रहितबुद्धयोदुर्दुरूढा मत्सरप्रायाः तेषामपि या
हृदयमाल्हादयंति तथाचोक्तं असुणि अफर मंथाण विहरेइवा
आमणंकइन्माणण आणाणजकुवल अवणं अलद्द गंधाण
विसुहाइ इति मधुराश्चताः सान्द्राः सरसाः अन्यत्र मधुनाम
करंदेन किंजल्केन रसेनचांद्राः सुगंधयः ॥ १७ ॥

समुद्दीपितकन्दर्पाकृतगौरीप्रसाधना हरली
लेवनोकस्यविस्मयायबृहत्कथा ॥ १८ ॥
आढ्यराजकृतोत्साहैर्हृदयस्थैः स्मृतैरपि
जिह्वांतः कृष्यमाणेवनकवित्वेप्रवर्त्तते१९॥

समुद्दित्यादि बृहत्कथा कस्यन विस्मयायापितु सर्वस्यैव गर्वनि
नाशायभवतीत्यर्थः अद्भुतकथावर्णनाद्वा आश्चर्याय समुद्दीपिता
वृद्धिनीतः कंदर्पोयस्यां कामजनानां वहूनांवृत्तांतानांवर्णनात्
उद्बोधितः स्मरोययेतिवा काव्यसेवयाहि शृंगाररसः समुद्भव
ति तथाचोक्तं ऋतुमाल्यालंकारप्रियजनगांधर्वकाव्यसेवाभिः उ
पवनगमनविहारैः शृंगाररसः समुद्भवति यद्वा समुद्दीपितः
प्रकाशितः ख्यातिंनीतः कंदर्पोनरवाहनदत्तोयस्यामिति सहि
कामांशइत्यागमः कृतंगौर्य्याविद्याभेदस्याराधनंयस्यां सहि नर
वाहनदत्तेनेशारूपाराधितेति तत्रोक्तं यद्वा गौरींप्रातिपूरयति
गौरीप्रसाधनंपरिकरवंधः यथाप्रस्तावोयस्यांगौरीप्रेरितेनहिहरेण
तथातस्यांपरिकरवंधः कृतोयथासातीवपिप्रिये हरलीलापि समु
त् सहर्षादग्धकामाच कृतंगौर्याःप्रसाधनंमंडनंयस्यां कामंप्र
तिताद्दग्द्वेषःकचकांतांप्रतिप्रसाधनामितिकृत्वाविस्मयमाश्चर्यम्
१८ ॥ आढ्येति आढ्यराजःकश्चित्कविः उत्साहोनृत्तेताल
विशेषः उदीर्यमाणगीत्याधारभूतपदेप्रचारात्काव्यमप्युत्साह
इतिकोचित् यत्रपूर्वश्लोकेनार्थउपक्षिप्यते पश्चात्सएवगद्येनावि
तन्यते मध्ये वृत्तनिवंधश्चभवति सपारिसमाप्तार्थं उत्साहउच्यते
इत्यन्ये अपिःसमुच्चये यद्वा आढ्यराजहृदयस्था अप्यंतर्जिह्वां
नाकर्षयंति तत्कथंतएवस्मृताइत्यपिशब्दार्थः ॥ १९ ॥

तथापिनृपतेर्भक्त्याभीतोनिर्वहणाकुलः करो
म्याख्यायिकांभोधौजिह्वाप्लवनचापलम् ॥
२०॥सुखप्रबोधललितासुवर्णघटनोज्ज्वलैः
शब्दैराख्यायिकाभाति शय्येवप्रतिपादकैः
॥ २१ ॥

एवमनौद्धत्यमुक्त्वाह तथेत्यादि तथापीत्थं जानन्नपि जिह्वाप्लवनलक्षणं चापलं करोमि यतोनृपतेर्भक्त्याअहमाभिइतःसमंतायुक्तःनिर्वहणे समाप्तावाकुलःजिह्वाच अब्धावकालवातः तत्रवहंत्यांकश्चिद्यथाप्लवनरूपंचापलंकरोति अत्रपक्षे अभीतोऽत्रस्तः निर्वहणंपारप्राप्तिः कृत्यचइतिणत्वं ॥ २० ॥ सुखेत्यादि सुखेनजायासाम्मितत्वेन हृदयाल्हादनपूर्वं नतु वेदेतिहासादिवद्यः प्रबोधः प्रकृष्टंबोधनं धर्मादिसाधनव्युत्पत्तिःउक्तंच कटुकौषधिवत्काव्यमविद्याव्याधिभेषजं आल्हाद्यमृतवत्काव्यमविवेकगदापहमिति सुवर्णरचनाशोभनाक्षरघटना प्रतिपादकैर्विवक्षिताभिधायकैःशय्यापक्षे सुखंयःप्रबोधःस्वापादुत्थानं सुवर्णघटना हेमयोजना प्रतिपादकैः खट्वायाउन्नामकैःतदापादानां प्रतिच्छन्दाः प्रतिपादकाः पुरुषा यत्रोत्थापिताः पादमुद्रास्तैः अत्रच शोभनोवर्णोलकादिकृतः ॥ २१ ॥

जयतिज्वलत्प्रतापज्वलनप्राकारकृतजगद्र
क्षः सकलप्रणयिमनोरथसिद्धिश्रीपर्वतो
हर्षः ॥ २२ ॥

इदानीं यमुद्दिश्येयमाख्यायिका क्रियते तस्य तथापिनृपतेर्भक्त्ये
ति अनेननृपतिशब्देनसामान्येननिर्देशंकृत्वाविशेषेणाह जय
तीत्यादि ज्वलन्दीप्ततयाप्रसरन् प्रतापएवज्वलनः तंप्राति पूरय
ति यःप्राकारःतेनकृताजगतिरक्षायेनसः सकलानांप्रणयिनां ये
मनोरथास्तत्सिद्धौ श्रियांपर्वतोगिरिः श्रियस्तत्र कूटीभूताइव
स्थिता इतियावत् यद्वा यथा पर्वतस्थः कश्चिदुराभिभवः तद्वर्ष
स्थाश्रीरिति अथच श्रीपर्वताख्योगिरिरीदृगेव तथाच ज्वलत्प्र
कृष्टतापोयोज्वलनः जठराग्निःसएवनिषेधकत्वात्प्राकारः सा
लस्तेनकृतामुक्तोर्विघ्नहेतुतया जगतोभूलोकस्यरक्षायेनसः अन्य
त्रोत्साहनंतद्यावत् अन्येतुत्रिपुरदाहे योविघ्नमकरोद्गणेशस्तदाह
रेणज्वलत्प्रकृष्टतापो ज्वलनप्राकारोनिर्मितः तेनच तत्ररक्षावि
धीयतेत्याहुः ज्वलत्प्रतापोज्वलनप्राकारश्चद्वौमुद्रारूपौमंत्रविशे
षौस्तः ताभ्यांकृतजगद्रक्ष इतिकेचित् प्रणयिनः सिद्धिकामाः
हर्षः कथानायकः इतरत्रहर्षकारितया हर्षः सर्वत्रच परमार्थं
तोहर्ष एवजयति तस्यैवाभिलषणीयत्वात् सएवकाव्येनक्रियते
इतिध्वनति ॥ २२ ॥

एवमनुश्रूयते पुरा किलभगवान्स्वर्लोकमधि तिष्ठन्परमेष्ठी विकासिनि पद्मविष्टरे समुप विष्टः शुनासीरप्रमुखैर्गीर्वाणैः परिवृतोब्र ह्मोद्याः कथाःकुर्वन्नन्याश्च निरवद्याविद्या गोष्ठीर्भावयन् कदाचिदासांचक्रे ॥

एवमिति अनुश्रूयते पारंपर्येणाकर्ण्यते ॥ किलेत्यतएवागमसू चनाय भगवानिति केवलनिर्देश उल्लंठनपरिहारार्थं ब्रह्मलो कमित्युक्ते सत्युत्कर्षदायिन्यात्मीयता प्रतिपत्ति र्न स्यादिति स्वग्रहणं साभिप्रायं अधितिष्ठन्बहुमानेन तद्योगक्षेमादिक मुद्वहन् परमे पदे तिष्ठतीति परमेष्ठी विकासिनीति नित्ययोगे इनिः विष्टरमासनं शुनासीर इन्द्रः गिरःस्तुतिरूपा वर्णं ति भजंतीतिगीर्वाणा देवाः गीरेववाणः शरोयेषामिति प रिवृतः चतुर्दिक्कृतः परिवलितः तस्यचतुर्मुखत्वात् ब्रह्मवदं तीतिब्रह्मोद्याः वदः स्वापिक्यप्च ब्रह्मणावेदेन ब्रह्मणिपरमात्म नि वा वेदितव्या ब्रह्मोद्याः उक्तंच ब्रह्मोद्यासाकथायस्यामुच्य तेब्रह्मशाश्वतमिति सामान्यविशेषभावेन उष्ट्रासिकांआसतेइ तिवत् ब्रह्मवदनरूपावा कथास्तासांवक्ष्यमाणगोष्ठ्यभिप्रायेण प्राधान्यात्स्वयंकरणंनिरवद्यादोषरहिताः तथाच वात्स्याय नःयागोष्ठीलोकविद्विष्टायाचस्वैरविसर्पिणी परहिंसात्मिकाया च नतामवतरेद्बुधः लोकचित्तानुवर्तिन्याक्रीडामात्रैककार्यया गोष्ठ्यासहचरन्विद्वांल्लोकसिद्धिं नियच्छतीति समानाविद्यावित्त शीलबुद्धिवयसामनुरूपैरालापैः एकत्रासनबंधोगोष्ठी ॥

तथासीनंच त्रिभुवनप्रतीक्ष्यं मनुदक्षचाक्षुषप्रभृतयः प्रजापतयः सर्वेच सप्तर्षिपुरःसरामहर्षयः सिषेविरे केचिदृचः स्तुतिचराःसमुदचारयन् केचिदपचितिभाजि यजूंष्यपठन् केचित्प्रशंसासामानिजगुः अपरेविवृतक्रतुक्रियातंत्राण्व्याचचक्षिरे विद्याविसंवादकृताश्च तत्र तेषामन्योन्यस्य विद्याविवादाःप्रादुरभवन् अथातिरोषणःप्रकृत्यामहातपामुनिरत्रेस्तनयस्तारापतेर्भ्राताृनाम्ना दुर्वासाद्वितीयेन मंदपालनाम्ना मुनिनासह कलहायमानः सामगायन्क्रोधांधोविस्वरमकरोत्

प्रतीक्ष्यः पूज्यः सम्यगुदात्तादिस्वरादिप्राधान्यादुदचारयन् जगुः अपचितिः पूजा सामानिजगुरिति साम्नां गानमेवोचितं विद्याविसंवादकृताइति नतु मात्सर्यादिना प्रादुरभवन्निति अनौचित्यशंकया तत्कर्तृत्वपरिहारः प्रकृत्येत्यन्यथा ब्रह्मसन्निधानेन कथमीदृगाक्षेपः कथमीदृशोवकाशइत्याह महातपाइति मुनिरित्यनेनास्य ज्ञानप्राधान्याचुल्यतोज्ञासन्नमतीवापकारः अत्रेस्तनयइति नकेवलं महातपस्त्वेन यावदत्रितनयत्वेनब्रह्मलोकप्राप्तिरस्य अतस्तारापतेरित्यादिना तथाभूतपरमप्रजापतिसंबंधयोग्यत्वमस्याख्यायते द्वितीयेनेति तत्समत्वमुच्यते कथं सामगानेप्यनवहित इत्याह क्रोधांधइति ॥

सर्वेषु च शापभयप्रतिपन्नमौनेषु मुनिष्वन्यालापलीलयाऽवधारयतिकमलसंभवे भगवती कुमारी किंचिदन्मुक्तबालभावे भूषितनवयौवने नवे वयसि वर्त्तमाना गृहीतचामरप्रचलद्भुजलता पितामह मपवीजयंती निर्भर्त्सनताडनजातरागाभ्यामिव स्वभावारुणाभ्यां पादपल्लवाभ्यां समुद्भासमाना शिष्यद्वयेनेव पदक्रममुखरेण नूपुरयुगलेन वाचालितचरणा मदननगरस्तोरणस्तंभविभ्रमं बिभ्राणा जंघाद्वितयं ॥

सर्वेष्वित्यादौ देवी सरस्वतीश्रुत्वाजहासेति क्रिया अप्रतिपत्तिरस्य माभूदित्युत्तमप्रकृतित्वादन्येत्याद्युक्तं अन्येनसहालापली लाक्रया क्रीडया कुमारीति कुमारीत्वेन।स्याहास्यादिकंनानुचितमितिदर्शयति भूषितेत्यनेन दर्शनीयत्वमाह पितामहमितिसर्वप्राधान्यमनेनोक्तं निर्भर्त्सनताडनं तेन तदर्थं वा यत्ताडनं रोषाद्भूमिहननं तद्वशाच्च जातरागाभ्यामिव पादपल्लवाभ्यामित्यनेनारुणत्वंसौकुमार्यंचाह अतएव गाढताडनेन रक्तत्वमुत्प्रेक्षितं ताडितौवा अयंताडितस्तत्तुल्योरागोजातो ययोरिति व्याख्येयं पदक्रमंपादन्यासं परिपाटी अन्यत्रच पदानिचक्रमश्चतत्पदक्रमं चरणौ पादौ चरणाश्च विशिष्टशाखापाठकता वाचालिताः क्षोभिता यस्येति ॥

सलीलमुत्ककलहंसकुलकलापप्रलापिनिमे
खलाधाम्नि विन्यस्तवामहस्तकिसलयावि
द्वन्मानसानिवासलग्ननगुणकलापेनेवांसाव
लंबिनाब्रह्मसूत्रेणपवित्रीकृतकायाभास्वन्म
ध्यनायकमनेकमुक्तायातमपवर्गमार्गमिवहा
रमुद्वहंती वदनप्रविष्टसर्वविद्याचरणालक्त
करसपाटलेनेवचस्फुरतादशनच्छदेनविराज
मानासंक्रातकमलासनकृष्णाजिनप्रातिमां
मधुरगीताकर्णनावतीर्णशशिहरिणामिव

उत्का उत्सुका मेखलाधाम्नि रशनागुणे मानसं चित्तं सरो
विशेषश्च गुणाश्रपि भास्वानूदीप्तोमध्यनायकः पदकं यत्र तत्
अथच भास्वतोमध्यंतेन नयति स यदुक्तं परिव्राड्योगयुक्त
श्चशूरश्चाभिमुखंहतः द्वाविमौपुरुषौलोके सूर्यमंडलभेदि
नाविति मुक्ता मौक्तिकानि मोक्षगामिनश्च हारं मुक्ताकला
पश्च अपवर्गमपि हारं हरसंबंधिनं तत्प्रसादप्राप्यत्वात्
अलक्तकरसेनेव पाटलेनेतिवापाठः स्फुरतेतिरोषात् भगवतीक
पोले शशिहरिणस्यैवावतारः संभाव्यतइति शशिपदं अत्रहि
कपोले ब्रह्मकृष्णाजिनसंक्रांतिस्तत्र कामसंभावना सामान्य
हरिणस्यावतरणे ॥

कपोलस्थलीं दधाना तिर्यक्सावज्ञमुन्नमि तैकभ्रूलता श्रोत्रमेकं विस्वरश्रवणकलु षितं प्रक्षालयंतीवापांगनिर्गतेन लोचना स्रुजलप्रवाहेण इतरश्रवणेनच विकसित सितसिंधुवारमंजरीजुषा हसतेव प्रकटितवि द्यामदा श्रुतिप्रणयिभिः प्रणवैरिवच कर्णा वतंसकुसुममधुकरकुलैरुपास्यमाना सू क्ष्मविमलेन प्रज्ञाप्रतानेनेवांशुकेनाच्छादि तशशिरा वाङ्मयमिवनिर्मलं दिक्षु दशन ज्योत्स्नालोकं विकिरंती देवी सरस्वतीश्रु त्वा जहास ॥

कलुषितंप्रक्षालयंतीवेति सलिलस्यक्षालनमेव युक्तमितिसमुचि तेयमुक्तिःश्रुतिप्रणयिभिरिति श्रूयतेइतिश्रुतिःध्वनितयाप्रणयः प्रशंसातिशयोयेषांतैःयद्वाश्रुतीश्रोत्रेतत्कर्तृकः प्रणयःप्रार्थनामधु रध्वनित्वाद्येषां तैःकर्णसंबंधैरितितु व्याख्याने कर्णावतंसेत्यादि ना पौनरुक्त्यमपरिहार्यं श्रुतिर्वेदोपिसूक्ष्मार्थदर्शितत्वात् सूक्ष्म स्तीक्ष्णोविमलस्तत्त्वग्राही अन्यत्र सूक्ष्मं तनु विमलं शुक्लंप्रतानः प्रसरः ॥

दृष्ट्वाचतातथाहसंतींसमुनिःआः पापकारिणि दुर्गृहीतविद्यालवावलेपदुर्विदग्धे मामुपहससीत्युक्त्वाशिरः कंपशीर्यमाणवंधविशरारोरुन्मिषत्पिंगालिम्नोजटाकलापस्य शोचिषा सिंचन्निव रोषदहनद्रवेण दशादिशःकृतकालसन्निधानामिव अंधकारितललाटपट्टाष्टापदामंतकांतःपुरमंडनपत्रभंगमकरिकां भृकुटिमावध्नन्नतिलोहितेन चक्षुषाऽमर्षदेवतायै स्वरुधिरोपहारमिव प्रयच्छन् निर्दयदष्टदशनच्छदभयपलायमानामिव वाचं रुन्धन्दंतांशुच्छलेन ॥

दृष्ट्वेत्यादौ समुनिस्तां तथा हसंतींदृष्ट्वा शापजल्पं जग्राहेति संवंधः तथेति पादताडनभ्रूक्षेपादिपूर्वंसमुनिरितिप्राग्वर्णितस्वरूपः आःइत्यक्षमायां मामिति योहंत्रैलोक्यप्रख्यातरोषणस्त्वःतवेति समीपएव विशीर्यते तच्छीलोविशरारुरितश्चामुत्यश्चअतएवोन्मिषत्पिंगलिमारोचिषादीप्त्यारोषदहनोद्भवोरसइवद्रवस्त्वंच यद्यपि विशिष्टस्यैव तेजसः सुवर्णादिसंभवति तथाप्यत्रोपचारात्सादृश्यंकालःकृष्णोगुणोयमश्च अंधकारितं संकुचितत्वात् अदर्शनीयमेवचकितंललाटपट्टमेवाष्टापदं यथा प्रतिपंक्ति अष्टौ पदान्यस्येत्यष्टापदं चतुरंगफलकं अतएवानेनभ्रूसमुन्नमनमव्यक्तीकृतरेखवत्तया विस्पष्टव्यलीकमेतत् ललाट मुपगीयते भ्रुवोर्मूलसमुत्क्षेपाभ्रुकुटिं परिचक्षते सुशब्दःसुतरां नैरपेक्ष्यसूचनाय वाचोभयसंवंधः ॥

अंसावस्रंसिनः शापशासनपट्टस्येवग्रथ्नन् ग्रंथिं अन्यथा कृष्णाजिनस्य स्वेदकणप्रतिबिंबितैः शापशंकाशरणागतैरिव सुरासुरमुनिभिः प्रतिपन्नसर्वावयवः कोपकंपतरलितांगुलिना करेण प्रसादनलग्ना मक्षरमालामिवाक्षमालामाक्षिप्य कामंडलवेन वारिणा ससमुपस्पृश्य शापजलं जग्राह ॥

अंसावस्रंसिनइति संरंभात् शासनपट्टः शुक्लत्वात् लिपिकाष्ण्यां च सितासितवर्णसंवलितमध्यः पर्यंतशुक्लश्च भवति अतएव तेन बिन्दुचित्रत्वादुपांतशुक्लत्वाच्च कृष्णाजिनमुत्प्रेक्षते यथाशासनपट्टे सति क्वचिद्ग्रामादावधिकारोभवति तद्वच्च जनसमूहः प्रार्थनां करोति सहस्तपादादिके सर्वस्मिन्नंगे गलति कोपेत्यादौ कंपग्रहणं रोषः शरीरं बाधत इतियावत् सन्निवेशस धर्म्यादुक्तं अक्षरमालामिवेति सरस्वतीसंबंधतया चोक्तं प्रसादनलग्नामिवेति विक्षिप्यते यश्चाविरुद्धपक्षः प्रसादयतिसविक्षिप्यते तिरस्क्रियते कामण्डलवेन मुनिकरकभवेन समुपस्पृश्याचम्य ॥

अत्रांतरे स्वयंभुवोऽभ्याशे समुपविष्टा देवी मूर्त्तिमती पीयूषफेनपटलपांडुरं कल्पद्रुमदुकूलवल्कलं वसाना विसतंतुमयेनांशुकेनोन्नतस्तनमध्यबद्धगात्रिकाग्रंथिस्तपोवलनिर्जितत्रिभुवनजयपताकाभिरिव तिसृभिर्भस्मपुंड्रकराजिभिर्विराजितललाटाजिरा स्कंधावलंबिना सुधाफेनधवलेन तपःप्रभावकुंडलीकृतेन गंगास्रोतसेव योगपट्टकेन विरचितवैकक्ष्यका सव्येन ब्रह्मोत्पत्तिपुंडरीकमुकुलमिव स्फटिककमंडलुं करेण कलयंती दक्षिणमक्षमालाकृतपरिक्षेपं कंबुनिर्मितोर्मिकादंतुरितं

अत्रांतर इत्यादौ मूर्त्तैश्चतुर्भिर्वेदैः सह सावित्री समुत्तस्थाविति संबंधः अभ्याशे समीपे गात्रिकाग्रंथिर्ग्रंथिविशेषः स्वस्तिकाकारः स्त्रीणामुत्तरीयस्य स्तनोद्देशे भवति तिलकं पुंड्रकं स्कंधावंसौ वायुस्थानानि च स्कंधाः फेनस्तद्वच्च धवलेन तिर्यग्वक्षसि विक्षिप्तं वैकक्ष्यकमुदाहृतं सव्येन वामेन पुंडरीकमुकुलं मुकुलितं पद्मं कलयंती क्षिपंती धारयंती वा परिक्षेपः परिवलनं कंबुः शंखः ऊर्मिका वालयिका दंतुर इव दंतुरो व्याप्तस्तं ॥

तर्जनतरंगिततर्जनीकमुत्क्षिपंती करं आः पापक्रोधोपहतदुरात्मन्नज्ञानात्मज्ञ ब्रह्मबंधो मुनिखेटापसदनिराकृत कथमात्मस्खलित विलक्षःसुरासुरमुनिमनुजवृंदवंदनीयां त्रिभुवनमातरं भगवतीं सरस्वतीं शप्तुमभिलषसिइत्यभिदधाना रोषाविमुक्तवेत्रासनैरोंकारमुखरितमुखैरुत्क्षेपदोलायमानजटाभरभरितादिग्भिः ॥

तर्जनंनिर्भर्त्सनं तरंगिता तर्जिता चलिता तर्जनीप्रदेशिनी अंगुष्ठनिकटांगुलिः क्रोधोपहतेत्यात्मविनाशायैव ते क्रोध इत्युक्तं भवति ब्रह्मबंधो निकृष्टब्राह्मण अपसदोनीचः निराकृतोऽस्वाध्यायः विलक्षो लज्जितः सुरासुरमनुजाश्च परस्परविरुद्धानुष्ठाना अत्र पुनरीदृशामपि न विप्रतिपत्तिरितिभावः अभिलषसीति इच्छामात्रकमपीदं महत्साहसमित्यर्थः ओंकार एव मुखरितंमुखंयेषांतैः ॥

परिकरवंधभ्रमितकृष्णाजिनाटोपच्छायाश्या मायमाणदिवसैः अमर्षनिःश्वासदोलाप्रे खोलितब्रह्मलोकैः संभ्रमरसभिवस्वेदाविसर व्याजेनस्रवद्भिः अग्निहोत्रपवित्रभस्मस्मेर ललाटैःकुशतंतुचारुचामरचीरचीवरिभिरा षाढिभिः प्रहरणीकृतकमंडलुमंडलैर्मूर्त्तैश्च तुर्भिर्वेदैः सह वृसीमपहाय सावित्री समु त्तस्थौ ततोमर्षयभगवन्नभूमिरेषाशापस्य त्यनुनाथ्यमानोपि विबुधैः उपाध्यायस्ख लितमेकंक्षमस्वेति वद्धांजलिपुटैः प्रसाद्यमा नोपि स्वशिष्यैः पुत्र माकुथास्तपसः प्रत्यू हमितिनिवार्यमाणोपिअत्रिणा रोषावेशवि वशोदुर्वासा दुर्विनीते व्यपनयामि ते विद्या जनितामुन्नतिमिमाम्

परिकरवंधः पर्यंकवंधः सचोत्थितस्यापि संरभभाजो भवति आटोपोवक्षःप्रदेशश्यामायमानोरात्रिरिवाचरत् दिवसायैर्हे तुभिरित्यर्थः अमर्षनिःश्वासैर्दोलावत्प्रेंखोलितश्चालितोब्रह्मलो कोयैः कुशतंतूनांचामरमिवचामरं गुच्छः कुशतंतुचामरं दर्भ पिंजूरं चीरचीवरं वृक्षत्वग्वस्त्रंतेविद्येते येषांतैः आषाढसंज्ञोदं डस्तुपालाशोव्रतचारिणां ततइत्यादौ शापोदकंजग्राहेति विस सर्जेतिसंवंधः मर्षयक्षमस्वअनुनाथ्यमानः प्रार्थ्यमानः प्रत्यूहंवि घ्नं उन्नातिमिति

अधस्ताद्गच्छ मर्त्यलोकमित्युक्त्वा तच्छापोदकं विससर्ज प्रतिशापोद्यतां सावित्रीं सखि संहर रोषमसंस्कृतमतयोपि जात्यैव द्विजन्मानो माननीया इत्यभिदधाना सरस्वत्येवन्यवारयत् अथ तां तथा शप्तां सरस्वतीं दृष्ट्वा पितामहो भगवान् कमलोत्पत्तिलग्नमृणालसूत्रामिव धवलयज्ञोपवीतिनीं तनुमुद्वहन् उद्गच्छदच्छांगुलीयकमरकतमयूखलताकलापेन त्रिभुवनोपप्लवप्रशमकुशापीडधारिणेव दक्षिणेन करेण निवार्य शापकलकलमतिविमलदीर्घैर्भाविकृतयुगारंभसूत्रपातमिव दिक्षु पातयन्दशनकिरणैः

उच्चदेशस्थश्चाधस्तान्नीयते इति समुचितेयमुक्तिः असंस्कृतमतयः संस्काररहिताः अथेत्यादौ भगवान्पितामहः सुधीरं वाचेति संबंधः तथेति तेन प्रकारेण निरपराधां सरस्वतीमित्यर्थः धवलयज्ञोपवीतिनीमिति प्रशंसायां नित्ययोगे वा मत्वर्थीयः बिसकिसलयच्छेदपाथेयवंत इतिवत् अन्यथा कर्मधारये कृते मत्वर्थीयः एकवृद्ध्यनुमितो बहुव्रीहौ प्रतिपत्तिर्भवतीति इतरत्र तु वृद्धिद्वयमिति लघुत्वात्प्रक्रमस्येत्युक्तं उद्गच्छदच्छांगुलीयमरकतस्य मयूखलताकलापो यस्य तेन करेण आपीडः समूहः पातं विन्यासं पातयन् कुर्वन् अत्र हि धात्वर्थगतानुष्ठानमात्रवृत्तिः क्रिया यथा संवस्ते क्षालिते वस्त्रे इति

सरस्वतीप्रस्थानमंगलपटहेनेव पूर्यरन्ध्राशाःस्वरेणसुधीरमुवाच ब्रह्मन्खलुसाधुसेवितोयंपंथायेनासिप्रवृत्तोनिहंत्येषपुरस्तात उद्दामप्रसृतेन्द्रियाश्वसमुत्थापितंहिरजः कलुषयति दृष्टिमनक्षजितां कियद्दूरंवाचक्षुरीक्षते विशुद्धयाहिधियापश्यंति कृतबुद्धयः सर्वानर्थानसतः सतोवा निसर्गविरोधिनीचेयंपयःपावकयोरिव धर्मक्रोधयोरेकत्रवृत्तिः आलोकमपहायकथंतमसिनिमज्जसि क्षमाहिमूलंसर्वतपसांपरदोषदर्शनदक्षा दृष्टिरिवकुपिताबुद्धिर्नते आत्मरागदोषं पश्यति

पंथाव्यवहारोमार्गश्च निहंतिपातयति प्रसृतानिर्गंतुंप्रवृत्तानि प्रसृताचजंघारजोरागोधूलिश्च कलुषयति कार्याकार्यदर्शनासमर्थां करोतिचदृष्टिं बुद्धिं नेत्रंच अक्षाणीन्द्रियाणि रथांगं चाक्षस्तेनच रथोलक्ष्यते कृतबुद्धयः संस्कृतमतयः असद्विद्यमानं निसर्गःस्वभावः आलोकोविवेकः प्रकाशश्च तमः अज्ञानमपि दोषाः सम्मण्डलत्वादीनिच कुपिता क्रुद्धा धातुवैषम्यदूषिताच आत्मरागदोषमिति

क्क महातपोभारवैवधिकता क्क पुरोभागित्वं
अतिरोषणश्चक्षुष्मानंध एव जनः नहिको
पकलुषिता विमृपति मतिः कर्त्तव्यमकर्त्त
व्यं वा कुपितस्यप्रथममंधकारीभवति वि
द्यातताभ्रुकुटिः आदाविन्द्रियाणि रागःसमा
स्कंदतिचरमंचक्षुः आरंभेतपोगलतिपश्चात्स्वेदस
लिलंपूर्वमयशःस्फुरति अनंतरमधरः कथं
लोकावनाशाय ते विषपादपस्येव जटाव
ल्कलानिजातानि अनुचिताखल्वस्य मुनि
वेशस्यहारयष्टिरिव वृत्तमुक्ता चित्तवृत्तिःशैलू
षइव वृथा वहसि कृत्रिमनमुपशमशून्येनचेत
सा तापसाकल्पं अल्पमापि नते पश्यामि
कुशलजातं ॥

आत्मभूतगुणदर्शनं लोहित्यलक्षणंच विकारं वोढाभारस्य
धौमद्भिर्जनैर्वैवधिकःस्मृतः दोषैकदृग्घिहृदयःपुरोभागीनि
गद्यते॥रागः अभूतगुणादिनन्दनं रक्तताच जटाःशिखाः मूला
निच वल्कलानि मुनिवस्त्राणित्वचश्च वृत्तमुक्ता शीलेन त्यक्ता
परिवर्तुलमौक्तिकाच जायोपजीवीहिजनः शैलूषः कथितो
बुधैः आकल्पोवेषः जातप्रकारः ॥

अनेनाऽतिलघिम्नाऽद्याप्युपर्येवल्लवसेज्ज्ञानो दन्वतः न खल्वनेलमूकाएडाजडावासर्वएते महर्षयो रोषदोषनिषद्ये स्वहृदयेनिग्राह्ये किमर्थमासि निगृहीतवाननागसंसरस्वतीं एतानि तानि आत्मप्रमादस्खलितवैलक्ष्या णिधैर्याप्यतांयातिअविदग्धोजनइत्युक्त्वापु नराहवत्से सरस्वति विषादंमागाः एषात्वा मनुयास्यतिसावित्रींविनोदयिष्यतिचास्म द्विरहदुःखितां आत्मजमुखकमलावलोक नावधिश्चतेशापोयंभविष्यतीत्येतावदभिधा यविसर्जितसुरासुरमुनिमनुजमंडलः ससंभ्र मोपगतनारदस्कंधविन्यस्तहस्तःसमुचिता ह्निककरणायोदतिष्ठत्

लघिमानुपादेयतातुच्छतमं उपर्येवेत्यंतः प्रवेशाभावात् लघुश्च जलोपरि प्लवते कथिता अनेलमूकाः श्रोतुंवक्तुंच खलु येन श काः एडास्तुश्रुतिहीना जडामूर्खाबुधैः प्रोक्ताःरोषएवदोषः त स्यनिषद्या नियमेनावस्थितिर्यत्र तस्मिन् स्वहृदये ते यद्वा रोष दोषस्य निषद्या आपणस्तंवतस्यामंत्रणं हेरोषदोषनिषद्ये इति व्याख्येयं निगृहीतवान् प्राप्तवान् आगः पापापराधयोः वैलक्ष्यं लज्जितं याप्योगर्ह्यः पुनराहेति अविश्रांतेप्युक्तिक्रमेपुनरित्युपा दानं वाच्यतापरिहाराय वत्से इति प्रसादाविष्करणार्थं एषेति या तवैवस्निग्धा विनोदयिष्यति सुखयिष्यति

सरस्वत्यपि शप्ता किंचिदधोमुखी धवलकृष्णशारां कृष्णाजिनलेखामिव तपसे दृष्टिमुरसि पातयंती सुरभिनिःश्वासपरिमललग्नैर्मूर्तैः शापाक्षरैरिव षट्चरणचक्रैराकृष्यमाणा शापशोकशिथिलितहस्ता ऽधोमुखीभूतेनोपदिश्यमानमर्त्यलोकावतरणमार्गेव नखमयूखजालकेन नूपुरव्याहाराहूतैर्भुवनकलहंसकुलैर्ब्रह्मलोकनिवासिहृदयैरिवाऽनुगम्यमाना समं सावित्र्या गृहमगात् ॥

सरस्वतीत्यादौ सरस्वत्यपि शप्ता गृहमगादिति संबंधः शारशबलांधवलकृष्णामित्येववक्तव्ये शारग्रहणं संवलितवर्णद्वयप्रतीत्यर्थं अधोमुखीभूतेनेति योऽधिकरणवशादनिष्टमुपदिशति सलज्जादिनावश्यमधोमुखीभवति जालकं समूहः व्याहारउक्तिः

अत्रांतरे सरस्वत्यवतरणवार्त्तामिवकथयितुं मध्यमंलोकमवततार। शुमाली क्रमेणच मंदायमाने मुकुलितविसिनी विसरव्यसनविषण्ण सरसिवासरे मधुमदमुदितकामिनीकोपकुटिलकटाक्षक्षिप्यमाणइव क्षेपीयःक्षितिधरशिखरमवतरतितरुणतरकपिलपललोहिते लोकैकचक्षुषिभगवति प्रस्रुतमुखमाहेयीपयःक्षरत्क्षीरधवलितेष्वासन्नचन्द्रोदयोद्दामक्षीरोदलहरीक्षालितेष्विव दिव्याश्रमोपशल्येषु अपराह्णप्रचारचलितेचामरिणि चामीकरतटताडनरणितरदने रटति ॥

मध्यमंलोकंभूमिंअंशुमालीरविः क्रमेणेत्यादौ अस्मिन्सति सावित्री सरस्वतीमवादीदितिसंबंधः विसरशब्दउणादिकः षण्डपर्यायः मुदिताःसंजातमन्मथाःकामिन्यः शृंगारिण्यः संभोगांतरायकारी कथमयमद्यापि नास्तमेतीत्यतःकोपः क्षिप्यमानश्चातित्वरितंपतति क्षेपीयस्तूर्णतरं लपनंवदनंलोकेत्यादिना संभोगविघ्नकारित्वमेव प्रकाश्यते माहेयीगौः उद्दामःप्रवृद्धिगतःउपशल्यंसमीपं चामीकरं सुवर्णं रदनादंताःरदतिविलिखति ॥

 

सुरस्रवंतीरोधांसिस्वैरमैरावतेप्रसृतानेकवि
द्याधराभिसारिकासहस्रचरणालक्तकरसा
नुलिप्तइवप्रकटयतिचतारापथेपाटलतां ता
रापथप्रस्थितासिद्धदत्तदिनकरास्तमयार्घ्या
वार्जिते रंजितककुभि कुसुंभभासि स्रवतिपि
नाकिप्रणतिमुदितसंध्यास्वेदसलिलइवर
क्तचंदनद्रवे वंदारुमुनिवृन्दारकवृन्दवंद्यमा
नसंध्यांजलिवने ब्रह्मोत्पत्तिकमलसेव्रागत
सकलकमलाकरइवराजतिब्रह्मलोकेसमुच्चा
रिततृतीयसवनब्रह्माणि ब्रह्माणि

सुरस्रवंती गंगा रोधस्तटंस्वैरं स्वेच्छं १० यादूतिकागमनकाल
मपाहरन्तीसोढुस्मरज्वरभराचिंपिपासितेव नियातिवल्लभज
नाधरपानलोभात्सा कथ्यते कविवरैरभिसारिकेति तारापं
थोनभः आवार्जिते प्रकीर्णे ककुभोदिशः कुसुंभपद्मकं रक्तच
दनद्रवे स्रवति सतीति योजना वंदारु वंदनशीलं वृन्दारकश
ब्दः प्रशंसायां सवनं प्रातर्मध्यान्हे सायंच सोमयागेकदेशः
स्नानमित्यन्ये ब्रह्मवेदः ॥

ज्वलितवैतानज्वलनज्वालाजटालाजिरेष्वा रब्धधर्मसाधनाशिविरनीराजनेष्विव सप्तर्षि मंदिरेषु अघमर्षणमुषिताकिल्बिषविषगदोल्लाघ लघुषु यतिषु संध्योपासनासीनतपस्विपंक्ति पूर्त्तपुलिने प्लवमाननलिनयोनियानहंसहा सदंतुरितोर्मिणि मंदाकिनीजले जलदे वतातपत्रे पत्ररथकुलकलत्रांतःपुरसौधे नि जमधुमदिरामोदिनि कृतमधुपमुदि मुमु दिषमाणे कुमुदवने।

वैतानोयज्ञभवः जटालानि व्याप्तानि अजिराण्यंगनानि आरब्धे धर्मसाधनेशिविरे पुण्योपकरणस्कंदावारे नीराज नारूयंशांतिकर्मयेषु धर्मोपकरणविषये मादोषाः प्रादुरभवान्निति शमनंसर्वपापानांजप्यंत्रिस्त्वघमर्षणं गदोरोगः उल्लाघं स्वस्थी करणंयतयश्चतुर्थाश्रमिणः सद्योजलत्यक्तं तटं पुलिनं नलिनयो निर्ब्रह्मा हंसानांहासः शोक्लंधहंसाएववाशुक्लतयाहासः दंतुराए वदंतुरिताः येच सहासास्तेचलक्ष्यमाणदंतद्वयादंतुराइवदृश्यंते आतपंछत्रं पत्ररथाः पक्षिणः कलत्रंदाराः मधु मकरंदः मद्यं च मधुपाभ्रमरामद्यपाश्च मुमुदिषमाणे विचिकीसिषति अन्यत्र मोदितुमिच्छति प्रारिप्स्यमानगीतादिगोष्ठीवंधद्वातियावत् मंचाः क्रोशंतीतिवत्

दिवसावसानताम्यत्तामरसमधुरमधुसपीति
पीते सुषुप्सति मृदुमृणालकांडकंडूयनकुं
डलितकंधरे धुतपक्षिराजिवीजितराजीवस
रसि राजहंसयूथे तटलताकुसुमधूलिधूसरि
तसारिति सिद्धपुरपुरंध्रिधम्मिलमल्लिका
गंधग्राहिणि सायंतने तनीयसि निशानिः
श्वासनिभे नभस्वति ॥

ताम्यदिति ताम्यन्ति नतु तांतानि प्रदोषस्य न तावत्प्रवृत्तत्वात् मधुमद्यमपि सपीतिस्तु सहपानं अनेनतु प्रेमातिशयत्रावेद्यते सुषुप्सति निद्रासति॥मृद्विति कंडूयनंविक्रियाविशेषणं कुंडलिताचक्रीकताराजींविपद्मं राजहंसाइत्यत्रैकशेषःतटशब्दः प्रत्यासत्त्युपलक्षणार्थः पुरंध्रिरुत्तममहिला धम्मिलाः संयताः कचाः मल्लिका भूपदी एषाच सायमेवोन्मिषतिसायंतने दिनांतभवे ॥

संकोचोदंचद्दुग्धकेसरकोटिसंकटकुशेशयकोट
रकुटीशायिनि षट्चरणचक्रे नृत्तोद्धूतधूर्जटि
जटाटवीकुटजकुड्मलनिकरनिभे नभस्तलं
स्तवकयतितारागणे संध्यानुवंधताम्रे परिण
मत्तालफलत्वक्त्विषि कालमेघमेदुरमेदिनीं
मीलयतिनववयसि तमासि तरुणतरतिमिर
पटलपाटनपटीयसिसमुन्मिषतियामिनीका
मिनीकर्णपूरचम्पककलिकाकदंवके प्रदीपप्र
करेप्रतनुतुहिनकिरणलावण्यालोकपाण्डुनि
आश्यानलीलनीरमुक्तकालिन्दीकूलवालपु
लिनायमाने प्रातकृतवे कृशयति

कोशः कुड्मलं कोटरमभ्यंतरंकुटीगेहं शयनमत्र विश्रमणं
तुस्वापः पौनरुक्त्यापत्तेः अटवीतिविवक्षितं तत्रैवाकृत्रिमकुसु
मसंवंधात् कुटजंगिरिमल्लिका कुड्मलंकलिका निकरः समूह
अनुबंधः संस्कारः परिणमज्जरठीभवत् तालस्तृणराजः मेदुरं
घनंमीलयतिस्थगयति नववयसि प्रत्यग्रे चंपकोहेमपुष्पकः
आश्यानमीषच्छुष्कं नीरंजलं कालिंदीयमुना नीलिमाभिप्रा
येणैतत्पदं यस्तटभागो वारिणात्यक्तस्तत्पुलिनं कूलंततोन्य
त् कृशयति तनूकुर्वंति

तिमिरमाशामुखेखमुचिमेचकितविकाचितकु
वलयसरसिशशधरकरनिकरकचग्रहाविले
विलीयमानेमानिनीमनसीवशवरीचिकुरच
येचाषपक्षत्विषि तमासि उदिते भगवतिउद
यगिरिशिखरकटककुहरहरिखरनखरानिव
हहेतिनिहतनिजहरिणगळितरुधिरनिचय
निचितमिवलोहितं वपुरुदयरागधरमधर
मिव विभावरीवध्वा धारयति श्वेतभानौ

खमुचित्यक्ताकाशे भूभागमवलंवमानइत्यर्थः मेचकितं निर्वि
भागतांनीतं शशधरकरैः स्वीकरेणकरंविते ऽत एवक्षयंगच्छति
अन्यत्रचंद्ररश्मीनांधारणेनसेवनेंनाकिंकर्त्तव्यतामूढएवमधिगल
त्यार्द्रतां भजमाने केशपाशपक्षेतु विस्रंसमाने चाषः किकीदि
विः पक्षी हरिः सिंहःनखरानखाः हेतिरायुधं विभावरी रात्रिः
श्वेतभानुश्चंद्रः

अचलच्युतचंद्रकांतजलधाराधौतइव ध्वस्ते ध्वांतेगोलोकगलितदुग्धविसरवाहिनि दंतमयमकरमुखमहाप्रणालइवापूरयितुं प्रवृत्ते पयोधिमिन्दुमंडलेरूपष्टेप्रदोषसमयेसावित्री शून्यहृदयामिवकिमपिध्यायंतीं सास्रांसरस्वतीमवादीत् सखि त्रिभुवनोपदेशदानदक्षायास्तेपुरोजिव्हाजिह्रेति मे नलंपती जानास्येव यादृश्योविसंस्थुलाः गुणवत्यपि जने दुर्जनवन्निर्दाक्षिण्याः क्षणभंगिन्योदुरतिक्रमणीया न रमणीयादैवस्यवामावृत्तयः निष्कारणाचनिकारकणिकाऽपिकलुषयति मनस्विनोपिमानसमसदृशजनादापतंतीअनवरतनयनजलासिच्यमानश्च ॥

अचलोथोदुदयाचलः गोलोकोरश्मिसमूहोवा मकरमुखमिव मुखमग्रमस्येतिसमासः विसंस्थुलानिर्मर्यादाःदुर्जनवन्निर्दाक्षिण्याःक्रूराःक्षणभंगिन्यइति आश्वासनगर्भयमुक्तिः वामाश्वास्त्रियः ईदृश्यएव निकारःपरिभवः कणिकालेशः शर्करिकाच कलुषयतिदूषयति कालुष्यंनयतिच मानसंचेतः सरश्च अनवरतंअस्रुणासिच्यमानः अनवरतंघटसारणीप्रणालादिना नयनंप्रापणं यस्य तादृशा जलेनोक्ष्यमाणश्च विपल्लवः आपल्लेशः

तरुरिवविपल्लवोपि सहस्रधाप्ररोहति अति
सुकुमारं च जनं संतापपरमाणवोमालतीकु
सुममिव म्लानिमानयंति महतांचोपरिनिप
तन्नणुरपि सृणिरिव करिणांक्लेशः कदर्थना
यालं सहजस्नेहपाशग्रंथिबंधनाश्च बान्धवभू
तादुस्त्यजा जन्मभूमयः दारयति दारुणः
क्रकचपात इव हृदयं संस्तुतजनविरहः
सा नार्हस्यवंभवितुं अभूमिः खल्वासि दुःख
क्ष्वेडांकुरभूमयः अपिच

विगतपल्लवश्चप्ररोहति स्थिरीभवति तरुपक्षे प्ररोहाविद्यंते यस्य
सप्ररोहः सइवाचरतिप्ररोहतीति व्याख्या संतापः खेदउष्माच
मालतीकुसुमं सुमनःपुष्पं अतिसुकुमारं १३ महातः उत्तमाः
श्लाघीयांसश्च सृणिरंकुशः मातरोपि जन्मभूमयः दारुणोविषमः
काष्ठस्यचक्रकचः करपत्रंहृदयंचित्तं मध्यंचसंस्तुतः परिचितःसे
तिसर्वनामपदं जानासीत्यादि पूर्वोक्तार्थगर्भीकारेण अभूमिरस्था
नंप्रक्षेत्रंच क्ष्वेडोविषं

पुराकृतेकर्मणिबलवति शुभेऽशुभेवा फलकृतितिष्ठति अधिष्ठातरिप्रष्ठेपृष्ठतश्चकोवसरो विदुषि शुचां इदंच ते त्रिभुवनमंगलैकक मलममंगलभूताः कथमिव मुखमपवित्रयंति अस्त्रुविंदवः तदलमधुना कथय कतमंभुवो भागमलंकर्त्तुमिच्छसिकस्मिन्नवतितीर्षतिते पुण्यभाजि प्रदेशे हृदयं कानि वा तीर्थान्यनुग्रहीतुमभिलषसिकेषु वा धन्येषुतपोवनधामसुतपस्यंतीस्थातुमिच्छसिसज्जोऽयमुपचरणचतुरः सहपांसुक्रीडापरिचयपेशलः प्रेयान् सखीजनः क्षितितलावतरणायानन्यशरणाचाद्यैव प्रभृति प्रतिपद्यस्व मनसा वाचा क्रियया च

शुभेऽशुभेवेत्यादि सप्रातिपक्षालोकोक्तिरियंअव्युत्पन्नमतिः कृतैः ननसतानैवासताप्याकुलः गतासूनगतासूंश्चनानुशोचंतिपंडिताइत्यादिवत् अधिष्ठातरिस्वामिनि प्रष्ठेऽग्रगामिनि अपवित्रतां नयंति नतुशोभांत्याजयंति धामसुस्थानेषु तपस्यंती तपश्चरंती सज्जःप्रगुणः आज्ञाकारी अयमितिदृष्टस्वरूपः निःसामान्यविस्रंभभाजनतामभिव्यनक्ति सखीजनशब्दः

सर्वविद्याविधातारंदातारंचश्वःश्रेयसस्य चरणरजःपवित्रितात्रिदशासुरं सुधासूतिकलिकाकल्पितकर्णावतंसंदेवदेवं त्रिभुवनगुरुं त्र्यंवकं अल्पीयसैव कालेन सेते । शापशोकविरतिं वितरिष्यतिइत्येवमुक्त्वा मुक्तमुक्ताधवललोचनजललवा सरस्वती प्रत्यवादीत् प्रियसखि त्वयासह विचरंत्यानमे कांचिदपिपीडामुत्पादयिष्यति ब्रह्मलोकविरहः शापशोकोवा केवलंकमलासनसेवासुखमार्द्रयति मे हृदयंअपिचत्वमेववेत्सिमे भुवि धर्मधामानि समाधिसाधनानियोगयोग्यानिच स्थानानि स्थातुमित्येवमभिधायवि रराम

श्वःश्रेयसस्य कल्याणस्य दातारं सुधासूतिश्चंद्रः कलिका तरिकाशापविरतिर्ब्रह्मणैवोक्ता ॥ १९ ॥ अतस्तत्रकिमन्यापेक्षयेत्याशंक्याहअल्पीयसैव कालेनेति आर्द्रयतिस्नेहयति धर्मधामानिमध्यदेशादीनि समाधिः चित्तैकाग्र्यं योगेहितदुक्तं आदौ समाधिमासीतपश्चाद्योगमुपाचरेदिति ॥

रणरणकोपनीतप्रजागरशचाऽनिमीलितलो चनैवतांनिशामनयत् अपरेद्युरुदितेभगव तित्रिभुवनशेखरेखनखनायमानस्खलत्ख लीनक्षतनिजतुरगमुखाक्षिप्तेन क्षतजेनेव पाटलितवपुषिउदयाचलचूडामणौ जरत्कृ कवाकुचूडारुणारुणपुरःसरे विरोचने नाति दूरवर्त्तीविविच्यपितामहवाहनहंसकुलपालः पर्यटन्नपरवक्रमुच्चैरगायत्

रणरणकोदुःखमरतिकृतं अपरेद्युरपरस्मिन्नहानि एतेचकालाः संख्यादयः व्यवहाराइहत्याः ब्रह्मलोके उपचरिताः शेखरइव शेखरोमुण्डमालकः खलीनंकविका क्षतजंरक्तं कृकवा कुःकुक्कुटःचूडामांसमयीशेखरिका विविच्य बिचार्य्यविमाम पालः स्वप्रस्तावे हंसी यदाह तेन सरस्वती पर्य्यनुयोजिते वाभूत् अपर वक्राख्यं वृत्तमाख्यायिकासु प्रयोज्यं तथाचाह भामहः वक्त्रंचापरवक्त्रंचकाव्येकाव्यार्थशंसिनीति तरलय सित्यादि

तरलयसि दृशं किमुत्सुकामकलुषमानसवा
सलालिते अवतर कलहंसिवापिकां पुनरपि
यास्यसिपंकजालयम्। तच्छ्रुत्वासरस्वती
पुनरचिंतयत् अहमिवानेन पर्यनुयुक्ता भवतु
मुनेर्वचनंमानयामीत्युक्त्वाऽद्याय कृतमहीत
लावतरणसंकल्पा परित्यज्यवियोगविक्ल
वं स्वपरिजनं ज्ञातिवर्गमवगणय्यावगणा
त्रिःप्रदक्षिणीकृत्य चतुर्मुखं कथमप्यनुनय
निवर्तितानुयायिव्रतिव्राता ब्रह्मलोकतः
सावित्रीद्वितीया निर्जगाम ततःक्रमेण ॥



अकलुषंमानसंयस्यसः निर्मलचेता ब्रह्मा मानसाख्यंच सरः
लालिता शालिता वापिका पुष्करिणी उच्यंतेऽस्यां तानि क
र्माणीति वापिका मर्त्यभूमिरपि पंकजमालयं।यद्वयस ब्रह्मा
णश्च पर्यनुयुक्ता उपपत्त्याबोधिता अवगणय्य केवला सावित्री
व्यतिरेकेण नान्यपरिवारा कथमपीति नभस्यादिवत् व्रतिव्रातः
ऋषिसमूहः॥ततइत्यादौ इदृशांमंदाकिनीमनुस्मरंती सरस्वती
मर्त्यलोकमवततारेतिसंबंधः

ध्रुवप्रवृत्तां धर्मधेनुमिव अधोधावमानधवल पयोधरामुद्धुरध्वनि मंधकमथनमौलिमाल तीमालिका मालीयमानवालखिल्यरुद्धरो धस मरुंधतीधौततारवल्वचं स्वगत्तुंगतरंग तरत्तरलतरतारतारकां तापसवितीर्णतरल तिलोदकपुलकितपुलिना माप्लवनपूतपि तामहपातितपितृपिंडपांडुरितपारां पर्यंत सुप्तसप्तर्षिकुशशयनसूचितसूर्यग्रहसूतको पवासामाचमनशुचिशचीपातिमुच्यमानार्च नकुसुमानिकरशारांशिवपुरपातितानिर्माल्यमं दारदामकामनादरदारितमंदरदरीदृषदम नेकनाकनायकनिकायकामिनी

ध्रुवंनित्यंवियत् तस्मात्प्रवृत्तां ध्रुवस्तारकविशेषःध्रुवान्नित्यस्था नाद्वा विष्णोर्वाध्रुवावूरूपश्चाद्भागो सक्थिनी ध्रुवेवा तयोः प्रक र्षेण वृत्तां परिवर्त्तुलांवा अधइतिपदेन धावनक्रियासहत्वाज्जल स्यग्रहणं सूच्यते अतएव धवलाः शुक्लाः पयोधरामेघा यस्यास्तां इतरत्राधोधावमानाः पयः पूर्णत्वाल्लंबमानाः क्षीरस्रुतेश्च धवलाः स्तनायस्याः अधोधावमानं वेगेन प्रसरद्धवलंपयोधारयति या तांअधोधावमानोधवलोयः पयोधोवत्सः तं राति ददाति या तां धवलोवृषस्तस्मैपयोधारयति या तां वेत्यादिकाः कुल्याख्याएव उद्धुरः उद्भटः अंधकमथनः शिवः आलीयमानाः श्लिष्यंतो वालखिल्यामुनिभेदाः

कुचकलशविलुलितविग्रहां ग्राहग्रावग्राम स्खलनमुखरितस्त्रोतसं सुषुम्णास्रुतशशिसुधाशीकरस्तवकतारकिततीरां धिषणाग्नि कार्यधूमधूसरितसैकतां सिद्धविरचितवालुकालिंगलंघनत्रासविद्रुतविद्याधरां निर्मोकमुक्तिमिव गगनोरगस्य लीलाललाटिकामिव त्रिविष्टपविटस्य विक्रयवीथीमिवपुण्यपण्यस्य दत्तार्गलामिव नरकनगरद्वारस्य

रोधस्तटं त्वंगच्चरत् आप्लवनंस्नानंपितरोदेवविशेषाः आज्यपाः सोमपाबर्हिषदश्च आचमनेत्यादिना पितामहवन्नस्नानादिनिष्ठात्वमस्योच्यते अतएव शचीपदेन संभोगासक्तत्वमिव पोषितं निकायः समूहः सुषुम्णाख्यो ऽमृतमयोरविरश्मिःधिषणो बृहस्पतिः सिद्धकृतत्वेन लिंगेषुभगवत्सन्निधानमावेद्यते निर्मोकः सर्पकंचुकः विस्रंसतयाशुक्लत्वेन लहरिकावलीत्वेन च निर्मोकमुक्तिमिवेत्युत्प्रेक्षा गगनमिवोरगः कृष्णतया ललाटिकाललाटालंकारः

अंशुकोष्णीषपट्टिकामिव सुमेरुनृपस्य दुगूल कदलिकामिव कैलासकुंजरस्य पद्धतिमिवापव र्गस्य नेमिमिवकृतयुगस्य सप्तसागरराजम हिषींमंदाकिनीमनुसरंती मर्त्यलोकमवतता र अपश्यच्चांबरतलास्थितैव हारमिव वरुण स्य अमृतनिर्झरमिवचंद्राचलस्य शशिमणि निःष्पन्दमिवविंध्यस्य कर्पूरद्रुमद्रवप्रवाह मिव दंडकारण्यस्य लावण्यरसप्रस्रवणमि वदिशांस्फाटिकशिलापट्टशयनमिवांबरःश्रि यः स्वच्छशिशिरसुरसवारिपूर्णंभगवतः

विटोभुजंगः उष्णीषशिरोवेष्टनं दिक्षु प्रसिद्धं दुगूलशब्दोदुकू लसमानार्थः पद्धतिर्मार्गः अपवर्गोमोक्षः कृतयुगस्य रचितयु गकाष्ठस्यरथस्येत्यर्थः यथा नेमिवशाद्रथग्रहणं तथा तद्वशात्क ताख्यस्य युगस्य सप्तसागरराजः क्षीरसमुद्रः चंद्राख्यः पर्वत इति केचित् शशिमणिश्चन्द्रकांतः

पितामहस्यापत्यंहिरण्यवाहनामानं महानदं यंजनाः शोणइति कथयंति दृष्ट्वाचतंरामणीयकहृतहृदयातस्यैवतीरेवासमरचयत् उवाचच सावित्रींसखिमधुरमयूरविरुतयः कुसुमपांसुपटलसिकतिलतरुतलाः परिमलमत्तमधुपवेणीवीणारणितरमणीयारमयंतिमां मंदीकृतमंदाकिनीद्युतेरस्य महानदस्योपकंठभूमयः पक्षपाति च हृदयमत्रैव स्थातुंमे इत्यभिनंदितवचनाच तथेतितयातस्य पश्चिमेतीरेसमवातरत् एकस्मिंश्चशुचौ शिलातलसनाथेतटलतामंडपे गृहबुद्धिंबबंध विश्रांताच नातिचिरादुत्थाय सावित्र्या सार्धमुचितार्चनकुसुमा सस्नौ ॥

पितामहस्येति तद्धन्यता तदाश्रयणं सिकतायिद्यंते यस्यस सिकतिलः मत्तशब्देन सशब्दत्वंवेणीपदेनच तत्रसाम्निवेशसादृश्यमाह वेणीपंक्तिः ॥

पुलिनपृष्ठप्रतिष्ठितसैकतशिवलिंगाचभक्त्या परमयापंचब्रह्मपुरःसरां सम्यङ्मुद्राबंधवि हितपरिकरांध्रुवागीतिगर्भा मवनिपवनवन गगनदहनतपनतुहिनकिरणयजमानमयी मूर्त्तीरष्टावपिध्यायंतीसुचिरमष्टपुष्पिकामदा त्त्रयत्नोपनतेनफलमूलेनामृतरसमप्यति शिशयिषमाणेन च स्वादिम्ना शिशिरेण शोणवारिणा शरीरस्थितिमकरोत् अति वाहितदिवसाच तास्मिंल्लतामंडपशिलातले कल्पितपल्लवशयनासुष्वाप

लिंग्यतेनेनेति लिंगमाकारः पंचब्रह्माणिसद्योजातः वामदेवः अघोरः तत्पुरुषः ईशानश्चेति मुद्राबंधः विशिष्टः करांगुलि सन्निवेशः ध्रुवाख्याविशिष्टागीतिः वनं तोयं यजमानउग्रः अष्टोपुष्पाण्येवाष्टपुष्पिका तत्रप्रभृतिगंधप्रधानं पार्थिवमर्घस्ना नादिकंरसप्रधानमाप्यंप्रदीपाभरणप्रभादिरूपप्रधानंतैजसंअनु लेपनप्रभृतिस्पर्शप्रधानंवायवीयं सुषिरातोद्यगीतादिकंशब्दप्र धानमाकाशीयंअनुध्यानंमानसं अस्तिसर्वत्रेवेश्वरइति निश्च यो वौद्धं अहमेवेश्वर इत्याहंकारिकं

अन्येद्युरपिअनेनैवक्रमेणनक्तंदिनमत्यवाहयत् एवमतिक्रामत्सु दिवसेषु गच्छतिच काले याममात्रोद्भूतेचरवौउत्तरस्यांककुभि प्रतिशब्दपूरितवनगह्वरंगंभीरतारतरं तुरंगहेषितह्रादमशृणोत् उपजातकुतूहलाच निर्गत्यलतामंडपाद्विलोकयंतीविकचकेतकीगर्भपत्रपांडुरं रजःसंघातंनातिदवीयसि संमुखमापतंतमपश्यत् क्रमेणच सामीप्योपजायमानाभिव्यक्ति

यद्वा आसनवर्गप्रभृतिष्वष्टसुप्रत्येकमष्टपुष्पिका अतिशेतुमभिभवितुमिच्छता अतिशिशयिषमाणेन स्वादिम्ना मृष्टत्वेन शरीरस्थितिमिति नत्वातृप्तिभोजनं अन्येद्युरन्यस्मिन्नहनि यामःप्रहरः नक्तन्दिनशब्देनतत्कालानिवर्त्तनीयंकर्मैवलक्ष्यतेगंभीरश्चिरकालस्थितस्तारतरोदूरदेशश्रूयमाणः हेषितमश्वशब्दः तद्रूपोह्रादोध्वनिस्तम् क्रमेणेत्यादावश्ववृंदंसददर्शेतिसम्बंधः

तस्मिन्महतिशफरोदरधूसरेरजासिपयसीव मकरचक्रंप्लवमानं पुरःप्रधावमानेन प्रलंब कुटिलकचपल्लवघटितललाटलटजूटकेन धवलदंतपत्रिकाद्युतिहासितकपोलभित्तिनापि नद्धकृष्णागुरुपंककल्कच्छुरणकृष्णशवलक षायकंचुकेन उत्तरीयकृतशिरोवेष्टनेन वाम प्रकोष्ठनिविष्टरुपष्टहाटककटकेन द्विगुणपट्टप ट्टिकागाढग्रंथिग्रथितासिधेनुना अनवरत व्यायामकृशकर्कशशरीरेण वातहरिणयूथे नेव मुहुर्मुहुः खमुड्डीयमाणेनलंघितसमविष मावटविटपेन कोणधारिणा

शफरामत्स्याः तदुदरवत्तेश्चधूसरे प्रलंबेत्यादिना सज्जत्वमुक्तं च्चाः केशाः सौकुमार्यात्पल्लवानीव घटितललाटजूटता दाक्षिणात्येषुवेशः दंतपत्रिका कर्णाभरणभेदः पिनद्धोवद्धःकृष्णागुरुणः पंकोनिघृष्टकृष्णागुरु तस्य शुष्कस्य सतः कल्कः चूर्णःतच्छुरणात्कृष्णेनगुणेनशवलं कषायंसाधिवासितं कंचुकं वारवाणं यस्य उत्तरीयेत्यादिना सन्नद्धतां वर्मादिप्रसंगंचाह वामेत्यनेनाश्रमित्वभाववर्णना शृंगारिताचोक्ता प्रकोष्ठमंतरंविद्या द्दरहिनमाणिवंधयोः हाटकं स्वर्णं यदेव द्विगुणाऽतएवगाढग्रंथिसहत्वं ग्रथिता अविश्वासिनो असिधेनुः छुरिका वातहरिणो योवातािभमुखं धावति अवट उन्मार्गः कोणोलगुडः

कृपाणपाणिना सेवागृहीतविविधवनकुसुमफलमूलपर्णेन चल चल याहियाहि अपसर्पापसर्प पुरःप्रयच्छ पंथानमित्यनवरतकृतकलकलेन युवप्रायेण सहस्रमात्रेण पदातिबलेन सनाथमश्ववृंदं ददर्श मध्ये च तस्य सार्धचंद्रेण मुक्ताफलजालमालिना विविधरत्नखंडखचितेन शंखक्षीरफेनपांडुरेण क्षीरोदेनेव स्वयंलक्ष्मीं दातुमागतेन गगनगतेनातपत्रेण कृतच्छायमच्छिन्नाभरणद्युतीनां निवहेन दिशामिव दर्शनानुरागलग्नेन चक्रवालेनानुगम्यमानमानितंबावलंबिन्या ॥

मध्यइत्यादौ तस्यच मध्येऽष्टादशवर्षदेशीयं युवानमद्राक्षीदिति संबंधः क्षीरोदस्याप्यर्धचंद्रादि सर्वं योज्यं छायाकांतिरपि चक्रवालेनसमूहेन नितंबश्चन्दोमुख्यार्थः पश्चान्नितंबः श्लोकटूयाद्यप्यर्थः

मालतीशेखरस्रजा सकलभुवनविजयार्जि
तया रूपपताकयेव विराजमानमुत्सर्पिभिः
शिखंडखंडिकापद्मरागमणेररुणैरंशुकजालै
रदृश्यमानवनदेवताविधृतैः बालपल्लवैरिव
प्रमृज्यमानमार्गरेणुपरुषवपुषं वकुलकुड्म
लमंडलीमुंडमालामंडनमनोहरेण कुटि
लकुंतलस्तवकमालिना मालितातपमिवं
तामिवदिवसं पशुपतिजटामुकुटमृगांकद्विती
यशकलघटितस्येव सहजलक्ष्मीसमालिं
गितस्य ललाटपट्टस्य मनःशिलापंकपिंग
लेन लावण्येन लिंपंतमिवांतरिक्षमभिनव
यौवनारंभावष्टंभप्रगल्भदृष्टिपाततृणीकृत
त्रिभुवनस्य चक्षुषः प्रथिम्ना विकचकुमुद
कुवलयकमलसरःसहस्रसंछादितदशदिशं
शरदमिवप्रवर्त्तयंतमायतनयननदीसीमांत
सेतुबंधेन ललाटतटशशिमणिशिलातल
गलितेन कांतिसलिलस्रोतसेव

शिखंडखंडिका चूडाभरणं प्रमृज्यमानेतिवर्त्तमानकालोत्रविव
क्षितः बकुलेत्यादिना निपीयमानातपतुल्यवस्तुनिर्देशः कुं
तलः केशहस्तः सएव स्तवकः पुष्पस्तबकः पुष्पसंघातः सह
जाश्चकृत्रिमासहोत्पन्नाचलक्ष्मीः शोभना श्रीश्च लावण्यमत्रकां
तिः अवष्टंभोगर्वः २०

द्राघीयसा घोणावंशेन शोभमानमतिसुरभि सहकारकर्पूरकक्कोलवंगपारिजातकपरिमलमुचा मत्तमधुकरकुलकोलाहलमुखरेण मुखेन सनंदनवनं वसंतमिववमंतं आसन्नसुहृत्परिहासभावनोत्तानितमुखमुग्धहासितैर्दशनज्योत्स्नास्नापितादिङ्मुखैः पुनःपुनर्नभासि संचारिणं चंद्रालोकमिव कल्पयंतं कदंबमुकुलस्थूलमुक्ताफलयुगलमध्याध्यासितमरकतस्य त्रिकंटककर्णाभरणस्य प्रेंखतः ॥

द्राघीयसा दीर्घतरेण सहकारः सुगंधद्रव्यभेदः सहकारफलेनैवक्रियते पारिजातकोनेकद्रव्यसंस्कृतः मुखवासविशेषः देववृक्षश्च वसंतश्चैवंविधेनैव मुखेन प्रारंभेनोपलक्षितोभवति रत्नत्रितयेन कृतं त्रिकोणकंटकाख्यकर्णाभरणं ॥

प्रभयासमुत्सर्पंत्या कृतसकुसुमहारितकुंदपल्लवकर्णावतंसमिवोपलक्ष्यमाणमामोदितमृगमदपंकलिखितपत्रभंगभास्वरंभुजयुगलमुद्दाममकराक्रांतशिखरामिव मकरकेतुकेतुदंडद्वयं दधानं धवलब्रह्मसूत्रसीमंतितं सागरमथनसामर्षगंगास्रोतः संदानितामिव मंदरं देहमुद्वहंतं कर्पूरक्षोदच्छुरणपांसुलेनेव कांतोच्चकुचचक्रवाकयुगलविपुलपुलिनेनोरःस्थलेन स्थूलभुजायामपुंजितं पुरो विस्तारयंतमिवादिक्चक्रंपुरस्तादीपद्धोनाभिनिहितैककोणकमनीयेन पृष्ठतः कक्ष्याधिकक्षिप्तपल्लवेनोभयतः

मृगमदः कस्तूरिका संदानितं बद्धवेष्टितमित्यर्थः कुचावत्रकांतासंबाधेनावेव चक्रवाकयुगलतस्यकृते पुलिनसदृशं कोणः पल्लवःपृष्ठतः पश्चाद्भागेकक्ष्यायाः परिवलनादधिक श्रुतिरित्युक्तः क्षिप्तोलंबमानःपल्लवोयस्यतत्

संवलनप्रकटितोरुत्रिभागेन हारीतहरिता निबिडनिपीडितेनाधरवाससा विभज्यमान तनुतरमध्यभागमनवरतश्रमोपचितमांस कठिनविकटमकरमुखसंलग्नजानुभ्यां विशालवक्षःस्थलोपलवेदिकोत्तंभनशिलास्तंभाभ्यां चारुचंदनस्थासकस्थूलकांतिभ्यामूरुदंडाभ्या मुपहसंतमिवैरावतकरायाममतिभरितोरुभागभरवहनखेदेनेव तनुतरजंघाकांडंकल्पपादपपल्लवद्वयस्येव पाटलस्योभय पार्श्वावलंबिनः पादद्वयस्य दोलायमानैर्नख मयूखैरश्वमंडनचामरमालामिव रचयंतम भिमुखमुच्चैरुदंचाद्भिः

संवलनंसंकोचनंहारीतःपक्षिभेदः हरितानीलेन मकरमुखंजानुनोरुपरिभागः उत्तंभनंधारणं स्थासकश्चंद्रकः आयामोदैर्घ्यं न केवलमायामं शुक्लत्वमप्युपहसंतं धर्मयोरेकानिर्देशोन्यसंविरसाहचर्यात् अतिभरितोरुभारवहनेनेतिपाठः ऊरूएवभारः प्रशस्ता जंघा जंघाकांडं कल्पपादपसंबंधितया न केवलं लौहित्यं सौकुमार्यादुच्यते यावत्सकलसंपत्फलप्रदत्वादिप्रकर्षांतरम्

अतिचिरमुपरिविश्राम्यद्भिरिव्रवलितविकटं पतद्भिः खुरैःखंडितभुविप्रतिक्षणदशनविमुक्तखणखणायितखरखलीने दीर्घघ्राणलीनलालिकललाटलुलितचारुचामीकरचक्रके शिंजानशातकौंभजयनशोभिनि मनोरंहसि गोलांगूलकपोलकालकायलोम्नि नीलसिंधुवारवर्णे वाजिनि महति समारूढमुभयतः पर्याणपट्टाश्लिष्टहस्ताभ्यामासन्नपरिचारकाभ्यांदोधूयमानधवलचामरिकायुगलमग्रतः पठतोवंदिनः सुभाषितमुत्कंटकितकपोलफलकेनलग्नकर्णोत्पलकेसरपक्ष्मशकलेनेव मुखशशिनाभावयंतमनंगयुगावतारमिवदर्शयंतं

अतिचिरमित्यादिनानाकुलत्वमुच्यतेयदुक्तंआवृताकुंचिताःस्थूलदलपाल्यग्रसंस्थिताः विवर्ज्याश्चाकुलपदन्यासैंनगमनेनचेति विकटाचित्रखुरैरिति तद्व्यापारवैचित्र्याद्बहुत्वमग्रिमयोरेव एवंविधसन्निवेशसंभवात् खलीनं कविका लालिका कविका शेखरंआयानंहयमंडनमाला गोलांगूलः कृष्णमुखो वानरः नीलेत्यादौ कुमुदकुंदमृणालगौरइत्यादिवन्नपौनरुक्त्यं महतीति उक्तंच सर्वलक्षणहीनोपिमहाकायःप्रशस्यतइति आसन्नेत्यनेनविश्वसनीयत्वमुक्तं अनंगजन्मना यदुपलक्षितं युगं कालविशेषः तस्यनूतनमदनसादृश्यात् यद्वा अनंगयोर्युगंतदवतारमिव द्वित्वसंख्यापूर्वकत्वात्

चंद्रमयीमिवसृष्टिमुत्पादयंतंविलासप्रायमि वजीवलोकंजनयंतमनुरागमयमिवचक्षुषो वशीकरणमंत्रमिव मनसः स्वस्थावेशचूर्ण मिवेंद्रियाणामसंतोषमिव कौतुकस्यासिद्धयो गमिवसौभाग्यस्यपुनर्जन्मादिवसमिव मन्म थस्यरसायनमिवयौवनस्यऐकराज्यमिव रामणीयकस्यकीर्त्तिस्तंभमिव रूपस्य मूल कोशमिवलावण्यस्य पुण्यकर्मपरिणाममि व संसारस्य प्रथमांकुरमिव कांतिलतायाः

चंद्रमयीमिवेति कांतिमयत्वेन आकर्षणांजनं वशीकरणार्थं कज्जलंअसंतोषमिवेति यस्यैनंप्राप्यकौतुकननिवर्त्तते तस्यसं तोषएवनास्तिकेषांचिदेवद्रव्याणांसंबंधोयोनकदाचित्कार्यंव्य भिचरतिससिद्धयोगः सौभाग्यंतावत्सर्वंकिंचनवशीकुरुते एवं चास्य तदेव सिद्धयोगइव तदाश्रयणेन निःशेषलोकवशीकरण क्षमत्वं जन्मदिवसमिति तद्गोचरपतितानांकामोत्पत्तेः रसाय नमिवेतियथारसायनवशात्काश्चित्परिपूर्णश्च स्थिरश्च भवति तद्व देतदाश्रयेण यौवनं ॥

सर्गाभ्यासफलमिवप्रजापतेः प्रतापमिववि धमस्य यशःप्रवाहमिव वैदग्ध्यस्यअष्टाद शवर्षदेशीयंयुवानमद्राक्षीत् पार्श्वेचतस्यद्वि तीयमपरसंसक्ततुरंगंप्रांशुमुत्तप्ततपनीयस्तं भाकारं परिणतवयसमपि व्यायामकठिन कायं नीचनखश्मश्रुकचंशुक्तिखलतिमीषत्तुं दिलं रोमशोरःस्थलमनुल्वणोदारवेशतया जरामिवविनयमिवशिक्षयंतंगुणानपि गरि माणमिवानयंतं महानुभावतामपि शिष्य तामिवानयंतं आचारस्याचार्यकमिव कुर्वा णं वलक्षवारवाणधारिणं धौतदुगूलपट्टिका परिवेष्टितमौलिं पुरुषम्

इषदसमाप्तोष्टादशवर्षः अष्टादशवर्षदेशीयः तं नपरेणसंश्लिष्ट स्तुरंगोयस्यतंद्वयोश्चयतुपर्याणश्लिष्टायुक्तं परिणतवयस्त्वेनसत्य वादिना सावित्रीसरस्वत्यो प्रतिच विस्रंभकारित्वमुच्यते अन्यथो पक्रमएवसंभाषणमात्रं न प्रवर्तते शुक्तिखलतिं शुक्ताकारखल्वा टं तुंदिलंलंबोदरं अतएवास्य विकुक्षिरितिनाम अनुल्बणोनुद्धतः उदारः श्रेष्ठः जरामिति जरा किल सर्वंविनयंशिक्षयति महानुभा वता महाशयता अनुभावयतिकार्यमकार्यंवाबोधयतीति अनुभा वः शिष्यतामिति परशासनदक्षकर्मं महानुभावतया ततएवाच रमापतइत्युक्तंभवति आचारःशास्त्रकारप्रदर्शिताविशिष्टानीतिः सच सर्वस्मिन्नाचार्यकमवलंबते संस्कारातिशयमापादयतीत्य र्थः वलक्षः शुक्लः वारवाण कंचुकः मौलयःकेशाः

अथसयुवा पुरोयायिनांयथादर्शनंप्रतिनिवृत्य विस्मितमनसां कथयतां पदातीनांसकाशादुपलभ्य दिव्याकृति तत्कन्यायुगलमुपजातकुतूहलः प्रतूर्णतुरगोदिदृक्षुस्तंलतामंडपोद्देशमाजगाम दूरादेवच तुरगादवततार निवारितपरिजनश्चतेन द्वितीयेन साधुनासहचरणाभ्यामेव सविनयमुपससर्पकृतोपसंग्रहणौतौ सावित्री समंसरस्वत्या किसलयासनदानादिना सकुसुमफलार्घावसानेन वनवासोचितेनातिथ्येन यथाक्रममुपजग्राह आसीनयोस्तयोश्चासीना नातिचिरमिव स्थित्वातं द्वितीयंप्रवयसमुद्दिश्यावादीत्

अथेति नतुगतागतिकतयासर्वंचेतनाभिप्रायेण सौंदर्यमेतयोरभिव्यज्यते प्रतीत्यनपुनःप्रसंगत उपेत्य कन्याकात्वादेतन्नानुष्ठितं प्रतूर्णोवेगगामी साधुना विनीतेन उपसंग्रहणंधीराः कथयंत्यभिवादनं आतिथ्यसेवोपजग्राहापूजयत् प्रवयाः स्यात्परिणतः

आर्यसहजलज्जाधनस्यप्रमदाजनस्य प्रथ
माभिभाषणमशालीनता विशेषतोवनमृ
गीमुग्धस्यकुलकुमारीजनस्यकेवलमियमा
लोकनकृतार्थाय चक्षुषे स्पृहयंती प्रेरयंत्यु
दंतश्रवणकुतूहलिनी श्रोत्रवृत्तिः प्रथमद
र्शनेचोपायनमिवोपनयंति सज्जनाः प्रणयं
अप्रगल्भमपि जनं प्रभवता प्रश्रयेणार्पितं
मनोमध्विव वाचालयति

अशालीनता धृष्टता वनशब्देनमृगीसामान्येपि जनसंपर्काद्य
भावमाह उपायनंढौकनिका उपनयति ढौकयति अप्रगल्भमि
त्यादि मनः कर्त्तृ अप्रगल्भमपिजनं वाचालयति कीदृशंप्रभव
तास्वामिनाप्रश्रयेण प्रत्यर्पितं दत्तमेवंविधमस्मदीयं युष्मासुमनः
इति वहिःप्रकाशितं यश्च परतश्च केनापि प्रभावशालेनढौकि
तंमध्वप्रगल्भमपि जनं कुलयोषित्प्राय वाचालयति किंचन ज
ल्पयति

अयत्नेनैवचातिनम्रे साधौ धनुषीव गुणः प
रां कोटिमारोपयति विस्रंभः जनयंतिच
विस्मयमतिधीरधियामदृष्टपूर्वादृश्यमाना
जगति स्रष्टुःविसृष्ट्यतिशयाः यतस्त्रिभुवना
भिभावि रूपमिदमस्य महानुभावस्य सौ
जन्यपरतंत्रा चेयंदेवानांप्रियस्यातिभद्रता
कारयति कथां नतु युवतिजने सहोत्थात
रलता तत्कथया गमनेनापुण्यभाक्तमोवि
जृंभितविरहव्यथः शून्यतांनीतोदेशः क्वागं
तव्यं कस्यवायमपहृतहरहुंकाराहंकारोपरइ
वानन्यजो युवा किंनाम्नः समृद्धतपसःपितुरय
ममृतवर्षी कौस्तुभमणिरिव हरेर्हृदयमाल्हा
दयति काचास्य त्रिभुवननमस्या प्रभातसं
ध्येव महतस्तेजसो जननी कानिवास्यपुण्य
भांजि भजंत्यभिख्यामक्षराणि आर्यपरिज्ञा
नेप्ध्ययमेवक्रमः कौतुकानुरोधिनो हृदयस्य

अत्रापि प्रश्रयेणेति साभिप्रायं तथाच अन्ययान्यवनितागत
चित्तंचित्तनाथमभिशंकितवत्या पीतभूरिसुरयापिनमोदेनिर्वृति
र्हिमनसोमदहेतोरित्युक्तं नम्रेप्रव्हेकुब्जेच गुणोविनयादिः ज्या
चकोटिः प्रकर्षः धनुः शिखाच देवानांप्रियस्येति पूजावचनं
षष्ठ्या अलुगत्रागमनेत्यादिना ब्रह्मोक्तशापबुद्धया दधीचस्य
तद्भर्तृयोग्यतया कतमइतिदेशोत्कर्षकुलादिकं पृच्छति

इत्युक्तवत्यांतस्यांप्रकटितप्रश्रयोसौप्रतिव्या जहार आयुष्मति सतांहि प्रियंवदताकुलवि द्यान केवलमाननं हृदयमपि चतेचन्द्रमयामि वसुधाशीकरशीतलैरानंदयतिवचोभिःसौज न्यजन्मभूमयोभूयसा शुभेन सज्जननिर्माण शिल्पकलाभवादृश्योजायंते दूरे तावदन्यो न्यस्यालापनंअभिजातैः सहदृशोपि मिश्री भूतामहतींभूमिमारोपयंतिश्रूयतां अयंखलु भूषणंभार्गववंशस्यभगवतोभूर्भुवःस्वस्त्रितय तिलकस्यादभ्रप्रभावस्तंभितजंभारिभुजस्तं भस्यसुरासुरमुकुटमणिशिलाशयनदुर्ललि तपादपंकेरुहस्य निजतेजःप्रसरप्लुष्टपुलोम्नः

कस्येति देवस्य सिद्धा देवा अनन्यजःकामःमहसस्तेजसइतिमह श्चतेजःसूर्याख्यं अभिख्या नाम अयमेवक्रमइति यथास्योत्पत्त्या दिकं तद्भगवतोपीत्यर्थः कलाउपायः भूरितिरेफांतोभूवाची भुवइतिरेफांतः पातालवाची भूश्चभुवश्चस्वश्चभूर्भुवः स्वःएषांत्र यमितिसमासः अदभ्रोनल्पः जंभारिरिन्द्रः सह्याश्विभ्यां यज्ञ भागभुजो कुर्वावामितिचिरंप्रार्थितःतथेतिप्रतिपद्य ताभ्यांभागं ददर्दिंद्रेणोद्यतवज्रेण रोषितः ततस्तेनास्य सवज्रः स्तंभितोभुज इति दुर्ललितः अलभ्यविषयः प्लुष्टपुलोम्नइति ॥

च्यवनस्यबहिर्वृत्तिजीवितं दधीचोनाम तनयः जनन्यस्यजितजगतोनेकपार्थिवसहस्रानुयातस्यशर्यातस्यसुताराजपुत्रीत्रिभुवनकन्यारत्नं सुकन्यानाम तां खलु देवीमंतर्वत्नीं विदित्वावैजनने मासि प्रसवायपितापत्युःपार्श्वात्स्वगृहमनाययत् प्रसूतच सातत्रदेवी दीर्घायुषमेनंअवर्धतानेहसाचतत्रायमानंदितज्ञातिवर्गोबालस्तारकराजइव राजीवलोचनोराजगृहे भर्तृभवनमागच्छत्यामपिदुहितरि नासेचनकदर्शनामिममंमुंचन्मातामहोमनोविनोदनं नमारंअशिक्षतायं तत्रैवसर्वाविद्याः सकलाश्चकलाः कालेनचोपारूढयौवनमिममालोक्याहमिवासावप्यनुभवतुमुखकमलावलोकनानन्दमस्येतिमातामहः कथंकथमप्येनंपितुरंतिकमधुनाऽव्यसर्जयत्

अनवरतंरुदत्यां दुहितरिकोपान्मात्रागृहाणेमामिति पुलोम्नो राक्षसस्योक्तं ततस्तां प्रतिगृह्य तत्रैव स्थापयित्वाक्वापिगतेरक्षसि सा भृगुणा विवाहिता ततः सगर्भासतीपुलोम्नागत्यापह्रियमाणतया च्यवनंगर्भमस्याक्षोत् तेनचान्वर्थनाम्ना तद्रक्षो दृष्ट्वैवादह्यत अंतर्वत्नींगाभिणीं वैजनने मासि प्रसवमासे दीर्घायुषमिति साभिप्रायं रूपकुलाद्युत्कर्षं वर्णिते सत्येतदेववरगुणवर्णनमवाशिष्यते अनेहसापरिपूर्णेन कालेन नजायतेयत्रतृप्तिस्तदासेचनकंविदुः नमारंपोत्रम् ॥

मामपि तस्य देवस्यसुगृहीतनाम्नः अर्थात
स्याज्ञाकारिणं विकुक्षिनामा नं भृत्यपरमा
णुमवधारयतु भवती पितुः पादमूलमायांत
मयासाभिसारमकरोत्स्वामी तद्दिनः कुलक्र
मागतंराजकुलं उतमानांच चिरंतनताजनय
त्यनुजीविन्यपिजनेकियन्मात्रमपिमंदाक्षंश्र
क्षीणः खलु दाक्षिण्यकोशो महतां इतश्चग
व्यूतिमात्रमेव पारेशोणं तस्यभगवतश्च्यव
नस्यस्वनाम्नानिर्मितव्यपदेशंच्यावनंनाम
चैत्ररथकल्पंकाननंनिवासःतद्गवाधिश्चेयंनौ
यात्रा यदिच गृहीतक्षणंदाक्षिण्यमनवहेलं
वा हृदयमस्माकमुपरि भूमिर्वा प्रसादाना
मयं जनः

साभिसारं ससहायं मंदाक्षमुपरोधं गव्यूतिः क्रोशद्वयं यात्रा प्र
स्थानं गोत्रंवंशः समवायएकत्रस्थितिः वालेषुकेशेषु अंधकारं
तनइति यस्याः वालंप्रत्यग्रं भास्वती मूर्त्तिमती भास्वतआदि
त्यस्यचमूर्त्तिः न कदाचित्सन्निहितवालांधकारा भवतीतिविरो
धः पुंडरीकंपद्मंसिंहश्च यस्यामुखं तत्र कथं हरिणस्य विलोचने
स्तइतिविरोधः पयोधरौस्तनौ मेघाश्च पयोधराःकलहंसानां
स्वनोयस्यांसा सरित्कथं प्रावृड्भवतीतिविरोधः

श्रवणार्हौवा ततोनविमाननीयोयं नः प्रथमःप्रणयःकुतूहलस्य वयमपिशुश्रूषवो वृत्तांतमायुष्मत्योः नेयमाकृतिर्दिव्यतांव्यभिचरति गोत्रनामनीतु श्रोतुमभिलषति नौ हृदयं तत्कथय कतमोदेशः स्पृहणीयतांजन्मना नीतः काचेयमत्रभवतीभवत्याः समीपेसमवायइवविरोधिनांपदार्थानांतथाहि सन्निहितवालांधकारा भास्वन्मूर्त्तिश्च पुंडरीकमुखी हरिणलोचनाच वालातपप्रभाधराकुमुदहासिनी च कलहंसस्वना समुन्नतपयोधराच कमलकोमलकरा हिमगिरिशिलापृथुनितंवाच करभोरुर्विलंवितगमनाचअमुक्तकुमारभावा स्निग्धतारकाचेति ॥

करोहस्तोरश्मिश्चशिलावातःजूंभूतंहिमं यत्रच हिमगिरिशिलाभिः पृथुर्मध्यभागः तत्रकथंपद्मकोमलकांतिः हिमस्पर्शे पद्मनाशात् मणिवंधादाकनिष्ठं करस्यकरभोवहिः करभश्चोष्ट्रःविलंवितसविलासं ललितश्चकरभः यस्याः करभोरू ... यांविगतकरभगमनेतिविरोधः कुमारभावोबाल्यं कुमारेच भावोभक्तिः स्निग्धोरम्यः प्रतीतश्च तारकाक्ष्णोः कनीनिका दैत्यभेदश्च तारकः स्कन्दनयोहतः ॥

सात्ववादीत् आर्य श्रोष्यसि कालेनभूयसो दिवसानत्रस्थातुमभिलषतिनोहृदयं अल्पीयांश्चायमध्वा परिचयएव प्रकटीकरिष्यति आर्येणनविस्मरणीयोयमनुषंगदृष्टो जनइत्यभिधायतूष्णीमभूत् दधीचस्तुनवांभोभरगंभीरांभोधरध्वाननिभयाभारत्यानर्त्तयन्वनलताभवनभाजोभुजगभुजः सुधीरमुवाच आर्यकरिष्यति प्रसादमार्या आराध्यमाना पश्यामस्तावत्तातमुत्तिष्ठ व्रजामइति तथेति चतेनाभ्यनुज्ञातः शनकैरुत्थायकृतनमस्कृतिरुच्चचाल तुरगारूढंचतंप्रयांतंसरस्वतीसुचिरमुत्तंभितपक्ष्मणा निश्चलतारकेन लिखितेवचक्षुषाभ्यलोकयत् उत्तीर्यशोणमचिरेणैवकालेनदधीचःपितुराश्रमपदंजगामगतेचतस्मिन्सातामेवदिशमालोकयंती सुचिरमतिष्ठत् कृच्छ्रादिव च संजहार दृशं

परिचयः संस्तवः अनुषंगः प्रसंगः विकुक्षिप्रार्थितयापि सावित्र्या कौतुकनिवृत्तिर्माभूदिति आत्मस्वरूपंनोक्तम तएवोत्तरत्र तदनुबंध एवोक्तो भूयसोदिवसानित्यादिना स्वरूपोक्तौ च ज्ञातसरस्वतीकत्वेनापत्यजननकार्यभंगोभवेत् भारतीवाक् भुजगभुजो मयूरान् भुजगइव भुजावस्येतिच उच्चचाल गंतुंप्रवृत्तः उत्तंभितान्युत्क्षिप्तानि कुतोस्मि कस्मादपि न ज्ञातइत्यर्थः मनुष्यतस्तथाविधः तादृश्याः कथमनुरागइति

अथमुहूर्त्तमिवस्थित्वा स्मृत्वा च तां तस्य रूपसंपदं पुनःपुनर्व्यस्मयतास्याहृदयंभूयो पिचक्षुराचकांक्षतद्दर्शनमवशेवकेनाप्यनीयत तामेवदिशंदृष्टिः अप्रहितमपि मनस्तेनैव सार्धमगात् अजायतच नवपल्लवइववाल्लवनलतायाः कुतोप्यस्याअनुरागश्चेतसिसालसेव शून्येव सनिद्रेव दिवसमनयत्अस्तमुपयातिच प्रत्यकूपर्यस्तमंडले लांगलिकास्तवकताम्रत्विषि कमलिनीकामुके ॥

कथमेतदस्याउपपद्यतइति नवाच्यं यदाहमुनिः शापभ्रंशात्तु दिव्यानांतथाचापत्यलिप्सया कार्यमानुषसंयोगः शृंगाररससंश्रयइति अन्यत्रकुतः क्षिनेनेवपल्लवोनुरागहतो लतायां जायतेइति एवमभिलाषरूपं प्रथमंदशांतरमालभ्येत्यादिनाद्वितीयचिंतनरूपमाह अनयत्कष्टेनात्यवाहयत् अस्तमित्यादौ पल्लवशयने तस्याविति संबंधः प्रतीच्यांपाश्चिमायां लांगलिका फलिनी मयूरशिखा ओषधिरपरे रक्तिकेत्यन्ये कमलिनीकामुकइति सरस्वतीदयिताभिप्रायेणोक्तम् ॥

कठोरसारसशिरश्शोणशोचिषि सावित्री त्र यीमये तेजसि तरुणतरतमालश्यामले म लिनयति व्योम व्योमव्यापिनि तिमिरसं चये संचरत्सिद्धसुंदरीनूपुररवानुसारिणिच मन्दंमन्दंमंदाकिनीहंसइव समुत्सर्पति श शिनिचगगनतलं कृतसंध्याप्रणामा निशामु खएवनिपत्यविमुक्तांगी पल्लवशयने तस्थौ सावित्र्यपि कृत्वा यथाक्रियमाणं सायंतनंक्रि याकलापमुचिते शयनकाले किसलयश यनमभजत जातनिद्राच सुष्वाप इतरातुमु हुर्मुहुरंगवलनैर्विलुलितकिसलयशयनतला निमीलितलोचनापिनाभजतनिद्रां अचिंत यच्च

कठोरोजरढः सारसोलक्ष्मणः शोणोलोहितः शोचिर्दीप्तिः ऋग्यजुःसामनामानि त्रयोवेदास्त्रयी स्मृता वेदेचपठ्यते सैषा त्रय्येवविद्यातपतीति कृतेत्यादिना तस्थावित्यंतेन क्रियांतर त्यागेन वैमनस्यमावेद्यते वेपतेश्वसतेचैवमनोरथविचिंतनैः प्र द्वेषेणान्यकार्याणामनुस्मृतिरपीष्यते निशामुखएवेति न पुनरु चिते शयनकाले विमुक्तांगीत्यनेन निःसहांगत्वमस्यादर्श्यते तस्थाविति न पुनर्निद्रामलभत यथाक्रियमाणामित्यनेनचसर स्वतीतोस्याव्यतिरेकंदर्शयन्सरस्वत्या एवानंगावस्थामाह विलु लितंविपर्यासितं

मर्त्यलोकःखलुसर्वलोकानामुपरि यस्मिन्ने वंविधानिसंभवंतित्रिभुवनभूषणानिसकल गुणग्रामगुरूणि रत्नानि तथाहि तस्य मुखलावण्यप्रवाहस्य निःष्पंदविंदुरिंदुः त स्यच चक्षुषोविक्षेपा विकचकुमुदकुवलयक मलाकराःतस्यचाधरमणेर्दीधितयो विकसि तवंधूकवनराजयः तस्यचांगस्य परभागो पकरणमनंगः पुण्यभांजितानिचक्षूंषिचेतां सि यौवनानि वा स्त्रैणानि येषांविषयोऽसौ दर्शनस्य क्षणं दर्शयताचतमन्यजन्मजनि तेनैव मे फलितमधर्मेण का प्रतिपत्तिरिदा नीमिति चिंतयंत्येव॥

मर्त्यलोकइत्यादिना गुणकीर्त्तनं चतुर्थमवस्थाविशेषमाह तदुक्तं अंगप्रत्यंगलीलाभिर्वाक्चेष्टासहितेक्षणैःनास्त्यन्यः सदृशस्तेन तदेतद्गुणकीर्त्तनामिति गुणा वैदग्ध्यादयःसूत्राणिचत द्दशेनगुरूणि वहुमानभांजि इतरत्रतु तिष्ठतु तावदेकःगुणग्रा मस्यापि गुणिरूपितेनापिदुर्वहानीतियावत् तस्येति पूर्वानुभू तस्य विंदुरिति नकेवलं लावण्यप्रवाहाभिप्रायेण यावत्सन्निवेश सादृश्यात् विक्षेपाः परतःप्रेरणानि कुमुदेत्यात्युक्तं शुक्लकृष्ण रक्तरुचित्वाच्चक्षुषःदीधितयःइतिमणिशब्दाभिप्रायेण विकसित शब्देन लौहित्यातिशयमाह२०अंगानि विद्यंते यस्य तदंगं शरी रंपरभागोवर्ण्यस्य वर्णांतरेणशोभातिशयःस्त्रैणानिस्त्रीसंवंधीनि काप्रतिपत्तिः किमनुष्ठेयम् ॥

कथंकथमप्युपजातनिद्रा चिरात्क्षणमशेतसु
साचतंदीर्घलोचनंददर्श स्वप्नासादितद्वितीय
दर्शनाचाकर्णाकृष्टकार्मुकेन मनसि निर्दय
मताडयत मकरकेतुना प्रतिवुद्धायामदन
शराहतायाश्च तस्याचार्त्तामिवोपलब्धुम
रतिराजगाम तथाहि ततःप्रभृति कुसुमधू
लिधवलाभिर्वनलताभिरताडितापि वेदनाम
धत्तमंदमंदमारुतविधुतैः कुसुमरजोभिरदू
षितलोचनापि अस्रुजलं मुमोच हंसपक्षता
लवृंतव्रातवातविततैः शोणशीकरैरसिक्ता
प्यार्द्रतामगात् प्रेंखत्कादंवमिथुनैरनूढापि
अघूर्णत वनकमलिनीकल्लोलदोलाभिः
विघटमानचक्रवाकयुगलविसृष्टैरस्पृष्टापि

मदनैत्यादिनोद्वेगरूपंपंचममवस्थाभेदमाह यदुक्तं आसने शयने वापिनहृष्यतिनतुष्यति नित्यमेवोत्सुकाचस्यादुद्वेगस्थानमाश्रिता चिंतानिःश्वासखेदेन हृद्दाहाभिनयेनच कुर्यात्तदेवमस्यंतमुद्वेगाभिनयेनचेति दशाकिलकामावस्थाः तदुक्तं प्रथमेत्वभिलाषःस्याद्द्वितीयेचिंतनंभवेत् अनुस्मृतिस्तृतीयेतु चतुर्थेगुणकीर्तनं उद्वेगः पंचमे प्रोक्तःप्रलापः षष्ठउच्यते उन्मादः सप्तमश्चेवभवेद्व्याधिस्तथाष्टमे नवमेजडताप्रोक्ता दशमेमरणंभवेदिति अरतिर्दुःखासिका हि कामवधूप्रतिपक्षभूतेति तदागमनाभिधानं हंसपक्षा इव तालवृंतं व्यंजनं आर्द्रतां सस्नेहतां कूनतां च प्रेंखद्दोलायमानं कादंवाः कृष्णहंसाः

श्यामतामाससाद विरहनिःश्वासधूमैः पुष्पधूलिधूसरैरदष्टापि व्यचेष्टत मधुकरकुलैः अथ गणरात्रापगमे निवर्त्तमानस्तेनैव पथा तं देशमागत्य तथैव निवारितपरिजनःछत्रधारद्वितीयोविकुक्षिः डुढौके सरस्वती तु तद्दूरादेव संमुखमागच्छंतं प्रीत्यासम्यक्समुत्थाय वनमृगीवोद्ग्रीवा विलोकयंती मार्गपरिश्रांतमस्नपयदिव धवलितदशदिशा दृशा कृतासनपरिग्रहंतुतं प्रीत्या सावित्री पप्रच्छ ॥

श्यामता शृंगाररसाविष्कारिवैवर्ण्यं यदुक्तं शृंगारदेवोभगवान्मुरारिः संगीयतेश्यामवपुर्मुरारिः श्यामोमनाक्स्निग्धतरश्चतेनशृंगारशंसीमुखरागउक्तः अथश्यामता असधूमता सधूमता इतिविरोधाभासः २१गणरात्रंनिशावहव्यः तेनैववर्त्मनेति अनेनतस्य यदृच्छयातदाश्रयमागमनमिति दर्शयति प्रधानप्रकृतेःस्थवीयसः तथाविधव्यापारविनियोगादिनौचित्यात् अतएव वक्ष्यति यथाभिलषितं देशमयासीत् डुढौके इत्यनेन निमित्तपरतंत्रया सन्निकृष्टमेवैनमालुलोक इतिप्रदर्शितम् ॥

आर्यंकच्चित्कुशलीकुमार इतिसोब्रवीत् आ युष्मतिकुशलीस्मरतिच भवत्योः केवलम मीषुदिवसेषुतनीयसीमिवतनुंविभर्त्ति अवि ज्ञायमानांचानिमित्तां शून्यतामिवाधत्ते अ पिचान्वक्समागमिष्यत्येव मालतीतिनाम्ना वाणिनीवार्त्तां वोविज्ञातु मुच्छ्वसितं साकु मारस्येति तच्छ्रुत्वापुनरपि सावित्रीसमभ षतअतिमहानुभावः खलु कुमारोयेनैवमावि ज्ञायमाने क्षणदृष्टेपि जनेपरिचितिमनुवन्धा ति तस्य हि गच्छतोयदृच्छयाकथमपिअंशु कमिवमार्गलतासुमानसमस्मासु मुहूर्त्तमास क्तमासीत् अशून्यंहि सौजन्यमाभिजात्येन वःस्वामिसूनोःअलसःखलु लोको यदेवं सु लभसौहार्द्दानि येनकेनचिन्नक्रीणाति मह तांमनांसि सोयमौदार्यातिशयः

यदुक्तं पटुताधार्ष्ट्यंतामिंगिताकारज्ञानं प्रतारणे देशकालज्ञता कार्येषु विषह्यवुद्धित्वंलध्वीप्रातिपत्तिःसापायाचेतिदूतीगुणाः भ रतमुनिरपि विज्ञानगुणसंपन्नाकथिनीलिंगिनीतथा रंगोपजी विनीचापिप्रातिपत्तिविचक्षणा प्रोत्साहनैककुशलेत्यादिदूतीगु णैर्युतेति अतएवागूहणाच्चाकारतः प्रभृतीत्यादि वक्ष्यते अन्वक्षं प्रत्यक्षं वाणिनी उच्छ्वसितमित्यनेनेतिविस्रंभवत्ता ख्याताउ च्छ्वसितंप्राणइतिवा यदृच्छया यथाकथंचित् यश्च तथागच्छ तितस्यानिरवधानतया क्वचिदंशुकादि गलति आभिजन्यत्वेन महाकुलीनत्वेनोपकरणीकुर्वंति ३२ आयततां नयंति

कोपि महात्मनामितरजनदुर्लभः येनो पकरणीकुर्वं तित्रिभुवनमितिविकुक्षिरुच्चा वचै रालापैः सुचिरमिवास्थित्वा यथाभि लषितंदेशमयासीत् अपरेद्युरुदिते भगवति द्युमणावुद्दामद्युता वभिद्रुततारके तिरस्कृत तमसि तामरसिनीविकासव्यसनिनि सहस्र रश्मौशोणमुत्ती र्यायांती तरलदेहप्रभावितान च्छलेनअत्यच्छंसकलंशोणसलिलमिवानयं ती स्फुटितातिमुक्तककुसुमस्तवकसमत्विषि सटाले महति मृगपताविव गौरी तुरंगमे स्थिता ॥

उच्चावचैःप्रकृतवस्त्वचसंस्पार्शिभिः विचित्रैरितिवा अपरेद्युरि त्यादावीदृशी मालतीसमदृश्यतेतिसंबंधः दिविमणिरिव द्युम णिःवियद्भूषणंसूर्यः अभिद्रुता न्यक्कृता तामरसंपद्मं व्यासो विकासः अतिमुक्तकंपुष्पभेदःकेचिन्मालतीलताकुसुममाहुःस टास्तियस्येति प्राणिस्थादातोलजन्यतरस्यां गौरी गौरांगी पार्वतीच ॥ ॥

सलीलमुरोवध्रारोपितस्यतिर्यगुत्कर्णतुरगाकर्ण्यमाननूपुरपटुरणितस्यातिवहलेन पिंडालक्तकेन पल्लवितस्य कुंकुमपिंजरितपृष्ठस्य चरणयुगलस्य प्रसरद्भिरतिलोहितैः प्रभाप्रवाहैरुभयतः ताडनदोहदलोभागतानि किसलयितातिरक्ताशोकवनानीवाकर्षयंती सकलजीवलोकहृदयहठहरणघोषणयेव रशनया शिंजानजघनस्थला धौतधवलनेत्रनिर्मितेन निर्मोकलघुतरेणाप्रपदीनेन कंचुकेन तिरोहिततनुलता तनुकंचुकांतरदृश्यमानैराश्यानचंदनधवलैरवयवैःस्वच्छसलिलाभ्यंतरविभाव्यमानमृणालकांडेव सरसी कुसुंभरागपाटलं पुलकवंधचित्रं

सजलतुरंगांगस्पर्शपरिजिहीर्षया उरोवध्रस्यात्युक्तं प्रियमधुरशब्दत्वादश्वानामाकर्ण्यमानेत्युक्तं पिंडालक्तकः कथितोलक्तकरसः दोहदोभिलाषः वाद्यविशेषानुगता आंग्यघोषणा रशनामेखला शिंजानं शब्दायमानं निर्मोकः सर्पत्वक् आप्रपदं प्राप्नोत्याप्रपदीनः पादंयावत् ३ २ छातस्तनुः कुसुंभं पद्मकं नानावर्णबिंदुन्यासः पुलकवंधः मणिविशेषाश्चपुलकाः ॥

चंडातकमंतःस्फुटं स्फटिकभूमिरिवरत्ननिधानमादधाना हरिणामलकीफलनिस्तुलमुक्ताफलेन स्फुरितस्थूलग्रहगणशारा शारदीव श्वेतविरलजलधरपटलावृता द्यौःकुचपूर्णकलशयोरुपरिरत्नप्रालंवमालिकामरुणहरिताकिरणकिसलयिनीं कस्यापिपुण्यवतोहृदयप्रवेशवनमालिकामिव वद्धां धारयंती प्रकोष्ठनिविष्टस्यैकैकस्य हाटककटकस्य मरकतमकरवेदिकासनाथस्य हरिती कृतदिगंताभिर्मयूखसंततिभिः स्थलकमलिनीभिरिव लक्ष्मीशंकयानुगम्यमाना वहलतांवूलकृष्णिकांधकारितेनाधरसंपुटेन मुखशशिपीतंससंध्यारागं तिमिरमिव वमंती ॥

चंडातकमर्धोरुकं कुचावेवकस्यापि पुण्यवतइवेति वक्ष्यमाणाभिप्रायेण पूर्णकलशौ कस्यापीति अलौकिकस्य वनमालापत्रपुष्पयोजिता स्रक् सापि पूर्णकलशयोरुपरिवध्यते प्रकोष्ठः प्रकुंचनकः वेदिका रत्नप्रतिष्ठा पीठिका वहलं पीनःपुन्येन कृतं कृष्णिका कृष्णलेखा मुखमेव तमःपारप्रतिपिपादयिषया शशी तांवूलकारणत्वेन लौहित्यमेव संभवतीति ससंध्यारागमित्युक्तं ॥

विकचनयनकुवलयकुतूहलालीनया आलिकु
लसंहत्या नीलांशुकजालिकयेव निरुद्धार्धव
दना नीलीरागनिहितनीलिम्ना शितिगल
शितिनावामश्रवणाश्रयिणा दंतपत्रेणकाल
मेघपल्लवेनेवविद्युदिवद्योतमानावकुलफला
नुकारिणीभिस्तिसृभिर्मुक्ताभिः कल्पितेन
वालिकायुगलेनाधोमुखेनालोकजलवर्षिणा
सिंचंती वातिकोमले भुजलते दक्षिणक
र्णावतंसितया केतकीगर्भपलाशलेखयारज
निकरजिह्वालतयेव लावण्यलोभेन लिह्य
मानकपोलतला तमालश्यामलेनमृगमदा
मोदनिष्पन्दिना तिलकविंदुना मुद्रितमि
व मनोभवसर्वस्वं वदनमुद्वहंती

नीली ओषधिभेदः ३४ शितिर्नीलः पल्लवः पिंडः वालि
का कर्णोपवेधेऽलंकारः अधोमुखेन घटादिना जलवर्षिणा
लतासिच्यते मृगमदः कस्तूरिका तिलकविंदुः परिवर्त्तुलस्तिल
कः लासको नर्त्तकः सुवर्णशृंखलावद्धोनानारत्नौघमंडितः
ललाटलंव्यलंकराश्चटुलातिलकोमतः अवचूलं चिह्नं मक
रिका मकराकारं रूपं वेला यथा सागरं क्षोभयति तद्वदेव रागं
क्षोभेन यथासागरो दुरुत्तरमेवमेतयापि रागः यथाज्योत्स्नया
विना चंद्रोदयोभवन्नपि न क्वापि विलसन्विभाव्यते तथैतया
विना यौवनं सविलासमन्यत्र न दृश्यते

ललाटलासकस्य सीमंतचुंबिनश्चटुलाति लकमणेरुदंचता चटुलेनांशुजालेन रक्तांशुकेनेवकृतशिरोवगुंठना पृष्ठप्रेंखदनादरसंभ्रमनशिथिलजूटिकाबंधा नीलचामरावचूलिनीव चूडामणिमकरिकासनाथा मकरकेतुकेतुपताका कुलदेवतेव चन्द्रमसः पुनः संजीवनौषधिरिव पुष्पधनुषः वेलेव रागसागरस्य ज्योत्स्नेवयौवनचंद्रोदयस्य महानदीव रतिरसामृतस्यकुसुमोद्गतिरिव सुरततरोःबालविद्येववैदग्ध्यस्य कौमुदीवकांतेः धृतिरिव धैर्यस्य गुरुशालेवगौरवस्य बीजभूमिरिव विनयस्य गोष्ठीव गुणानाम् ।

रतिप्रधानोरसः शृंगारएव माधुर्यातिशययोगित्वात्प्रकृष्टत्वाच्च ह्लादनममृतं यदुक्तं शृंगारएवपरमःपरःप्रह्लादनोरस इति संप्रयोगोरतंरहःशयनंमोहनमितिपर्यायाः बालविद्यानकंचन मुंचति तद्वदेष वैदग्ध्यं ३५ कौमुदीति तथाविधकांत्यातिशय संभवात् ध्रियतेयेनधृतिः अस्यांतस्यां धैर्यमपि यद्वा धृतिः प्रवेशरक्षणं यथा प्रविशन्कश्चिद्राजनिकटंध्रियते केनचित्तथा धैर्यं तावत्प्रसरति यावदेषानदृष्टाएतस्यांदृष्टायांसर्वेधैर्यशून्याइति समानविद्यावित्तशीलबुद्धिवयसामनुरूपैरालापैरेकत्रासनबंधोगोष्ठी ॥

मनस्वितेव महानुभावतायाः तृप्तिरिवतारु
ण्यस्यकुवलयदलदामदीर्घलोचनयापाट
लाधरयाकुंदकुड्मलस्फुटदशनया शिरीष
मालासुकुमारभुजयुगलया कमलकोमलक
रयावकुलसुरभिनिःश्वसितया चंपकावदात
या कुसुममय्येव तांबूलकरंकवाहिन्या महा
प्रमाणाश्वतरारूढयाऽनुगम्यमाना कतिपय
परिचारकपरिकरा मालतीसमदृश्यत दूरा
देवच दधीचप्रेम्णा सरस्वत्यालुंठितेव

मनस्वितेत्यनेनैतस्यामहानुभावताया व्यभिचारित्वमुच्यते य
स्माद्यत्र मनस्विता तत्र महाशयत्वमेवावश्यंसंभावयतीतिस्थि
तमेव तृप्तिरिवेति यथा कश्चित्संजाततृप्तिर्नान्यत्किंचित्पुन
रपेक्षते तद्वदासादितमालतीकं तारुण्यं एतदाश्रयणेन परि
पूर्णवैषयिकोपभोगप्राप्तिस्तारुण्यस्येत्यर्थः कुसुममय्येवेति
कुवलयादिभिर्नयनादीनां विधानं तरुणोश्वोऽश्वतरःवत्सोक्षा
श्वर्षभेभ्यश्च तनुत्वइति तनुत्वेतरप् अत्रच व्याख्यातं तनुत्वंद्वि
तीयवयःप्राप्तिरिति अश्वतरोवागर्दभेनाश्वायांजातः मालती
ति एवंदधीचपरिवारभूतया मालत्या गुणवर्णनद्वारेण सरस्व
त्याएव निःसामान्यगुणातिशयोध्वन्यते

मनोरथैराकृष्टेव कुतूहलेन प्रत्युद्गतेवोत्कलिकाभिरालिंगितेवोत्कंठया अंतः प्रवेशितेव हृदयेन स्नापितेवानंदाश्रुभिः विलिप्तेव स्मितेन वीजितेवोच्छ्वसितैः आच्छादितेव चक्षुषा अभ्यर्चितेव वदनपुंडरीकेनसखीकृतेवाशया सविधमुपाययौ अवतीर्यच तुरगाद्दूरादेवावनतेन मूर्ध्नाप्रणाममकरोत् आलिंगिताच ताभ्यां सविनयमुपाविशत् सप्रश्रयं ताभ्यां संभाषिताच पुण्यभाजममन्यत अकथयच्च दधीचसंदिष्टं शिरसि विनिहितेनांजलिनानमस्कारं अगृह्णाच्चाकारतःप्रभृति अग्राम्यतया तैस्तैरतिपेशलैरालापैःसावित्रीसरस्वत्योर्मनसी क्रमेणच अतीते मध्यंदिनसमये शोणमवतीर्णायां सावित्र्यां स्नातुमुत्सारितपरिजना साकूता मालतीकुसुमप्रस्तरशायिनीं समुपसृत्य सरस्वतीमावभाषे ॥

लुंठितेवेति वक्ष्यमाणं प्रार्थनादि तयामनोरथैरुत्प्रेक्ष्य स्वीकृतमित्यतस्तैर्लुंठितेवेत्युक्तं लुंठनंचपाथेयाभिवितरणमेवमन्यत् उत्कलिकारुहरुहिका सविधंसमीपं अपिचयः स्निग्धोदूरात्सविधमायाति तस्यलुंठनादिसर्वमचंन।वसानंक्रियतइतिध्वनिः पेशलैः हृद्यैः आकृतमभिप्रायः ॥

देविविज्ञप्यं नः किंचिदस्ति रहसि यतो मुहूर्त्त मवधानदानेन प्रसादं क्रियमाणमिच्छामी ति सरस्वती तु दधीचसंदेशाशंकिनी किं वक्ष्यतीति स्तनविनिहितवामकरनखकिर णादंतुरितमुद्भिद्यमानकुतूहलांकुरनिकरमिव हृदयमुत्तरीयदुगूलवल्कलैकदेशेन संछाद यंती गलताऽवतंसपल्लवेन श्रोतुंश्रवणेनेव धावमानेन अनवरतश्वाससंदोहदोलायितां जीविताशामिव समासन्नलतामवलंवमाना समुत्फुल्लस्य मुखशशिनो लावण्यप्रवाहे शृं गाररसेनेव प्लावयंती जीवलोकं कुसुमपरि मललग्नैर्मधुकरकदंवकैर्मदनानलदाहश्या मलैर्मनोरथैरिव निर्गत्य मूर्त्तैरुत्क्षिप्यमा णा कुसुमशयनीयात्स्मरशरसंज्वरिणी मंदं मंदमुदगात्

रहस्येकांते सरस्वतीत्यादौ सरस्वती कुसुमशयनीयादुदगादुद तिष्ठदितिसंवंधः अवतंसपल्लवेन गलतेतीत्थंभूतलक्षणे तृती या संदोहः समूहः संज्वरः संतापः

उपांशुकथयेति कपोलतलप्रतिबिंबितालज्ज येव कर्णमूलं मालतीं प्रवेशयंती मधुरयागिरा सुधीरमुवाच सखि मालतिकिमर्थमेवमभिदधासि काहमवधानदानस्य शरीरस्य प्राणानांवासर्वस्थाप्रार्थितोपि प्रभवत्येवातिपेशलश्चक्षुष्योजनःसानकाचिद्या न भवसि मेस्वसासखीप्रणयिनीप्राणसमाच नियुज्य तां यावतः कार्यस्य क्षमं क्षोदीयसोगरीयसो वाशरीरकामिदंअनवस्करमाश्रवंमेत्वयिहृदयंप्रीत्याप्रतिसराविधेयास्मिते व्यावृणु वरवर्णिनिविवक्षितमिति सात्ववादीत् देविजानास्येवंमाधुर्यंविषयाणां लोलुपतां चेन्द्रियग्रामस्य ॥ उन्मादितांच नवयौवनस्य पारिप्लवतांचमनसः

उपांशु अनुक्तं अतिवेल मतिमात्रं अतिपेशल इति पाठे पेशलःसुंदरः चक्षुष्योनुकूलः त्वामिवव्यक्तं चक्षुष्यइति भंग्या दर्शीचइतिध्वनाति स्वसा भगिनी प्रणयिनी विश्वस्ता अतिशयेन क्षुद्रमल्पं क्षोदीयः ज्ञेयंगुह्यमवस्करं आश्रवं वचसिस्थितं प्रतिसरा अनुकूला विधेया वश्या व्यावृणु प्रकटय वरवर्णिनि वरारोहे लोलुपतां साभिलाषत्वम् । चलार्थकौनि गद्येतेपारिप्लवपारिप्लवौ वालिशोज्ञःचारणताधूर्त्तता

प्रस्यातैव मन्मथस्य दुर्निवारता अतोन मामुपालंभेनोपस्थातुमर्हसि नच वालिश ताचापलता चारणता वाचालतायाःकारणंन किंचिन्न कारयत्यसाधारणा स्वामिभक्तिःसा त्वंदेवियदैव दृष्टा देवेन तत एवारभ्यास्यका मोगुरुः चंद्रमाजीवितेशःमलयमरुदुच्छ्वा सहेतुः आधयोऽतरंगस्थानेषु संतापः परम सुहृत्प्रजागर आप्तः मनोरथाः सर्वगताः निः श्वासा विग्रहाग्रेसराः

असाधारणानन्यसदृशी देवी देवेनेति च परस्परसमगुणयोगि त्वमभिव्यनक्ति गुरुर्गरीयानुपदेष्टावा तद्वशवर्त्तित्वात् यश्च देव स्तस्य गुरुराचार्यः कश्चिदवश्यंसंभवति जीवितस्येश्वरः स्वामी जीवितेशः शिशिरतया मदनोदाहप्रशमनेहतुत्वात् अमृतमयत्वेनचजीवित संधारसक्तत्वात् अथच जीवितेशो मृत्युः चंद्रादयोह्यापाततएव तापंशमयंत्यनवरतंसेव्यमानाः पुनः कामोद्दीपकत्वेन मृत्युं दिशंति राजपक्षे जीवितेशः कश्चित्पुरोहितप्रायः३८ उच्छ्वसनमुच्छ्वासस्तत्रहेतुः अथच श्वासोत्क्रांतीकारणं इतरत्र सचिवप्रायाविश्वसनीयाःआध यश्चित्तपीडाःअतएवांतरंगमंतः शरीरं यानि स्थानानि ते ष्वितरत्रांतरंगअंतर्वंशिकःतत्स्थानेषु विश्वसनीयजनाधिका रेषुपरंप्रकृष्टमसुहृरःअमित्रोवा अन्यत्र परमसुहृत्परमित्रंच आप्तः प्राप्तोबांधवप्रायःकश्चित् सर्वगताश्चाराअपि संस्थाख्याविग्रहो विरोधोदेहश्च

मृत्युः पार्श्ववर्त्ती रणरणकः संचारकःसंक ल्पावुद्भयपदेशवृद्धाः किंवाविज्ञापयामिअनु रूपेदिस्याइत्यात्मसंभावनाशीलवानितिप्र क्रमविरुद्धंघोरइत्यवस्थाविपरीतंसुभगइति त्वदायत्तं स्थिरप्रीतिरितिनिपुणोपक्षेपः जा नातिसेवितुमित्यस्वामिभावोचितंइच्छतिदा सतामामरणात्कर्त्तुमितिधूर्त्तालापः भवनस्वा मिनीभवसीत्युपप्रलोभनंपुण्यभागिनी भज लिभर्त्तारंतादृशमितिस्वामिपक्षपातः त्वंत स्यमृत्युरित्याप्रियम् ॥

मृत्युरिति त्वदनंगीकारेणनिश्चितंम्रियते राज्ञोपि पार्श्वमृत्यु स्तिष्ठत्येव रणरणकोदुःख मरतिकृतं अतएवसंचारकः एकत्रनः रेसंभवतु इतरत्रसंचारयति चरितंवस्तुयः प्रापयतेसः द्विविधात द्विचाराःसंख्याः संचारकाश्च वृद्धामहांतः स्थविराश्च अनुरूपइ त्यादिना इदमिदं तत्रास्तीतिवक्रोक्त्यासातिशयं मालतीवेद ग्ध्येनाह प्रक्रमआरंभः निपुणो पक्षेपोबुद्धिमत्प्रक्रमःधूर्त्तालापः प्रतारणावचनम् ॥३९

अगुणज्ञासीत्याधिक्षेपः स्वप्नेस्यवहुशःकृत प्रसादासीत्यसाक्षिकं प्राणरक्षार्थमर्थयतेइ तिकातरता तत्रागगम्यतामित्याज्ञावारितो पिवलादागच्छतीतिपरिभवः तदेवमगोच रेगिरामसीतिश्रुत्वादेवीप्रमाणमित्यभिधाय तूष्णीमभूत् अथसरस्वतीप्रीतिविस्फारिते नचक्षुषोपलक्षिताप्रत्यवादीत् अयिनशक्नो मिवहुभाषितुं एषास्मितेस्मितवादिनिवच सिस्थितागृह्यंताममी प्राणाइतिमालतीतुय दा ज्ञापयसिअतिप्रसादायेतिव्याहृत्यहर्षप रवशा प्रणम्यप्रजविनातुरगेन ततारशोणं अगाच्चदधीचमानेतुं च्यवनाश्रमपदं इतरा तुसखीस्नेहेनसावित्रीमपिविदितवृत्तांतामक रोत् उत्कंठाभारभृताच ताम्यता चेतसाक ल्पायितंकथंकथमपिदिवसशेषमनैषीत् अ स्तमुपगतेचभगवतिगभास्तिमति स्तिमित तरमवतरतिचतिमिरेप्रहासितामिवसितांदि शंपौरंदरीं दरीमिवकेसरिण्युदंचति चंद्रम

वारितइति भवत्येवेत्यर्थात् प्रजाविनेतिसाभिप्रायं अस्तमित्या दौ सरस्वती प्रतिपालयामासेति संवंधः गभस्तिमान् रविः पौरंदरीऐंद्रीदरीखदा चोनेत्यादि सैकतविशेषणं उपमानस्यतु

सि सरस्वतीशुचिनिचीनांशुकसुकुमारतरे तरंगिणीदुगूलकोमलेशयनइवशोणसैकते समुपविष्टा स्वप्नकृतप्रार्थनापादपतनलग्नां दधीचचरणनखचंद्रिकामिवललाटिकांदधा ना गंडस्थलादर्शप्रतिबिंबितेन चारुहासि न्ययमसावाहतो हृदयदयितोजनइति श्र वणसमीपवर्तिना निवेद्यमानमदनसन्देशे वेन्दुना विकीर्यमाणनखकिरणचक्रवालेनवा लव्यजीनकृतचंद्रकलाकलापेनेवकरेण वीज यंतीस्वेदिनंकपोलपट्टमत्रदधीचादृतेनकेन चित्प्रवेष्टव्यामितितिरश्चीनंचित्तभुवापाति तां विलासवेत्रलतामिववालमृणालिकाम धिस्तनंस्तनयतीकथमपिहृदयेनवहंतीप्रति पालयामास ॥

दुगूलकोमलइत्युक्तं तरंगिणीप्रतिदिनंक्षीयमाणेनवारिणाकृ तलेखभंगियुक्तेच चंद्रिका कांतिरत्र ललाटालंकारोललाटिका चक्रवालंसमूहः वालव्यजनंचामरं ॥ ०स्तनमध्येप्रवेशाभावात्तिर श्चीनमित्युक्तं यश्चवेत्रीप्रवेशनिषधननिमित्तंवेत्रलतांपातयातिसाति रश्चीनं स्तनयोरधिस्तनंविभक्त्यर्थे व्ययीभावः कुचपृष्ठइत्यर्थः स्त नयंती कलयंतीस्तनिःशब्दार्थश्चौरादिकः स्तनंतीतिवापाठः ॥

आसीच्चास्यामनसिअहमपिनाम सरस्वती यत्रामुना मनोजन्मना जघन्येव परवशीकृता तत्रकागणनेतरासुतपस्विनीषु अतितरलासु तरुणीष्विति आजगामचमधुमास इव सुरभिगंधवहः हंसइव कृतमृणालधृतिः शिखंडीवघनप्रीत्युन्मुखः मलयानिल इवाहितसरसचंदनधवलिततनुलतोत्कम्पः कृष्यमाणइव कृतकरकचग्रहेण ग्रहपतिना प्रेर्यमाणइवकंदर्पोद्दीपनदक्षेणदक्षिणानिले

तपस्विनीषुवराकेषुआजगामेसादावाजगामेतिसंबंधःसुरभिगंधवहोवातःसुरभिगंधंच योवहति धृतिः धारणं प्राणयात्राचघनःसरसंसांद्रंयच्चंदनंतेनधवलयातनुलतयाआहितत्रप उत्कंपःकामधर्मोयस्य अन्यत्रचंदनांश्चधवांश्चलांतिश्रयंति यास्तन्व्योलतास्तासामाहितउत्कंपःकंपनं येनेति कृष्यमाणइत्युद्दीपनकारणत्वात्करारचमयोहस्तश्चकरःहस्तस्य कर्षणंसमुचितं ग्रहपतिश्चंद्रः

नउह्यमानइवोत्कलिकावहलेनरतिरसेनप
रिमलसंपातिनापधुपपटलेनपटेनेवनीलेना
च्छादितांगयष्टिःअतःस्फुरतामत्तमदनकरिक
र्णशंखायमानेन प्रातिमेन्दुना प्रथमसमागम
विलासविलक्षस्मितेनेवधवलीक्रियमाणैक
कपोलोदरोमालतीद्वितीयोदधीचः आगत्य
चहृदयगतदयितानूपुरश्वमिश्रयेव हंसगद्ग
दयागिरा कृतसंभाषणो यथामन्मथः समा
ज्ञापयतियथायौवनमुपदिशतियथानुरागः
शिक्षयतियथाविदग्धताध्यापयति तथाताम
भिरामांरामामरमयत्उपजातविस्त्रंभावात्मा
न मकथयदस्यसरस्वती तयातुसार्धमेकंदि
वसमिवानयत्संवत्सरमधिकं अथदेवयो
गात्सरस्वती वभारगर्भम् ॥

प्रेर्यमाणइतिअनिलस्योचितमेतत्कर्मउह्यमान इतिजलस्योचि
तमेतत् उत्कलिकारुहरुहिकाऊर्मयश्चरसोभिलाषोजलंचपरि
मलआमोदःपटलंसमूहःप्रतिमाप्रातिच्छंदकं ४१ यथामन्म
थइतिमन्मथस्यप्रभवनशीलत्वेनाज्ञादानमुचितं एवसर्वत्रोप
दिशतीतिइत्थमित्थंवर्त्तस्वेत्युपदेशः देवताविषयसंभोगशृंगा
रवर्णनमनुचितमितिनतत्रविस्तरःप्रवर्तते कुमारसंभवेचगांधर्वविं
वाहोविस्तरेण न तथा वर्णितःशापनिर्वाहणमात्रपरत्वादिति
वृत्तस्यान्यथानिजभर्त्तृत्यागोदोषावहःकिमर्थंकृतइत्यादिकाः
कुविकल्पाउत्पद्येरन्निति ॥

असूतचानेहसा सर्वलक्षणाभिरामं तनयं तस्मैचजातमात्रायैव सम्यक्सरहस्याः स वै वेदाः सर्वाणिच शास्त्राणि सकलाश्च कला विद्यामत्प्रसादात्स्वयमाविर्भविष्यंतीति वरमदात् सद्वृत्तंश्लाघया दर्शयितुमिवहृदयेनादाय दधीचं पितामहादेशात्समं सावित्र्या ब्रह्मलोकमारुरोहगतायांचतस्यां दधीचोपि हृदये ह्रादिन्येवाभिहतोभार्गव वंशसंभूतस्य भ्रातुर्ब्राह्मणस्य जायामक्षमालाभिधानां मुनिकन्यकामात्मसूनोः संवर्धनायनियुज्यविरहातुरस्तपसे वनमगात्

अनेहसा कालेन रहस्यज्ञानभाग ह्रादिनीवज्रं ४२ वाक्प्रस्तुता यत्रतद्वाङ्मयं आषाढसंज्ञो दंडः स्यात्पालाशोव्रतचारिणां वृक्षत्वङ्निर्मितंवस्त्रं वल्कलंसमुदाहृतं मेखलामुंजतृणादिरचितं कटिसूत्रं जटारूक्षसंहतकेशाः अथेत्यादौवत्सात्प्रावर्त्ततविपुलोवंश इतिसंबंधः प्रवर्धमानाःसंतानादिनावृद्धिंगच्छंतोये आदिपुरुषाः पूर्वबांधवाः शुक्राद्यास्तैः कृताः स्वेषांचरणानांकठादिशाखाध्यायिनामुन्नतिरुत्कर्षोयस्यसः अन्यत्रप्रवर्धमानस्तु वामनरूपोयआदिपुरुषोहरिस्तेन जनिता स्वपदोन्नतिर्माहात्म्यं यस्यसइति

यस्मिन्नेवावसरे सरस्वत्यसूत तनयंतस्मि न्नेवाक्षमालापिसुतंप्रसूतवतीतौतुसानिर्विशे षंसामान्यस्तन्या शनैः शनैः शिशूसमवर्ध यत् एकस्तयोः सारस्वत्याख्यएवाभ वत् द्वितीयोपि वत्सनामाभवत् आसीच्च त योः सोदर्ययोरि वरूपृहणीया प्रीतिः अथ सारस्वतोमातुर्महिम्ना यौवनारंभएवाविर्भू ताशेषविद्यासंभारस्तस्मिन्सवयसिभ्रातरि प्रेयसिप्राणसमे सुहृदिवत्सेवाङ्मयं समस्त मेव संचारयामास चकारच कृतदारपरिग्रह स्यास्यतस्मिन्नेव प्रदेशे प्रीत्या प्रीतिकूटना मानं निवासंआत्मनाप्याषाढी कृष्णाजिनी वल्कली अक्षवलयीमेखलीजटीचभूत्वातप स्यतो जनयितुरेव जगामांतिकं अथतस्मा त्प्रवर्धमानादिपुरुष जनितात्मचरणोन्नतिनि र्गतप्रघोषः परमेश्वरशिरोधृतः सकलकला गमगंभीरः महामुनिमान्योविपक्षक्षोभक्षमः॥

किलत्रैलोक्याक्रांतिकाले ब्रह्मलोकप्राप्ताद्विष्णुपदाद्ब्रह्मणाकमं डलुजलक्षालितादंगासमभवदितिवार्ताप्रघोषोयशःशब्दश्चपर मेश्वरोराजाहरश्च सकलानांकलानांवृत्ताद्यानामागमस्तेन सह कलकलेनच सकलकंल यदागमनं तु नचमहामुनिर्जह्नुरापि पक्षाः शत्रवःशैलाश्चवीनांपक्षिणांवापक्षच्छेदेषु सहिष्णुः ॥

क्षितितललब्धायति रस्खलितप्रवृत्तः भागीरथीप्रवाहइव पावनः प्रावर्ततविपुलोवंशः यस्मादजायंत वात्स्यायनानामगृहमुनयः आश्रितश्रौताअप्यनालंवितालीकवककाकवः कृतकुक्कुटव्रता अप्यवैडालवृत्तयः विवर्जितजनवृत्तयः परिहृतकपटकौरकुचीकूर्चाकृताः अगृहीतगव्हराः

आयतिः प्रतापोविस्तारश्च स्खलितस्वाचारच्युतिः प्रवृत्तः प्रकृष्टवृत्तः अस्खलितं असंरुद्धंरुत्वागतश्च श्रौतवेदभवंचिरवृत्तंच भिन्नोभयाद्वाशोकाद्वाध्वनिः काकुरुदाहृता अत्रचछद्मलक्ष्यते वकस्य काकुः वकच्छद्मैश्चचिरवृत्तमाश्रितं तेछद्मचारित्वादाश्रितवककाकवोभवंत्येवामी तुनतथेति विरोधः कुक्कुटवृत्तं नियमविशेषः यत्रकुक्कुटांडप्रमाणग्रासभोजनं नवैडालीहिंसावृत्तिर्येषांतैः विरोधेतुकुक्कुटानां व्रतंभक्षणं येनकृतं सकथंविडालवृत्तिर्नस्यात्, पंक्तिर्लोकप्रसिद्धो व्यवहारः पाकोवा कपटो व्याजवृत्तिः कूर्चाः स्फुटाः आत्ममहिम्नाव्यवहारः समूह इत्यन्ये एतेषु आकूतंपरिहृतंयैः गव्हरंपापं ॥ ४३ ॥

न्यक्कृतनिकृतयः प्रसन्नप्रकृतयोविगतविकृतयः परपरिवादपराचीनचेतसः वर्णत्रयव्यावृत्तिविशुद्धांधसः धीरधिषणावधूताध्येषणाअसंकसुकस्वभावाः प्रणतप्रणयिनः शमितसमस्तशास्त्रांतरसंशीतयः उद्घाटितसमग्रग्रंथार्थग्रंथयः कवयोवाग्मिनोविमत्सराः

निकृतिःशाठ्यं प्रकृतिःस्वभावः पराचीनंपराङ्मुखं अंधोन्नं धीरा स्थिराधिषणाबुद्धिः अध्येषणा याच्ञा असंकसुकः स्थिरोमृदुर्वा शास्त्राः कठाद्याः संशीतिः संशयः ग्रंथिर्दुर्बोधः प्रदेशः परिहासंविदंति नतु स्वयंकुर्वंति परिचयः संस्तवःसुकुमाराः अहंकूटाइत्यर्थः अवाह्याः नतुतदेकानिष्ठाः ऐति स्वमागमः अनुक्रोशोदया संमताइष्टाः सौंदर्यप्रीतिः सर्वेगुणा धैर्याद्याः राज्ञांसेनयाच अनभिभूतायेच सर्वैर्गुणैः सत्त्वरजास्तमोभिर्युक्तास्तैःकथंराजसेनगुणेनानभिभूताभवंतीतिविरोधः

सरसभाषितव्यसनिनोविदग्धपरिहासवेदि
नः परिचयपेशला नृत्तगीतवादित्रेष्ववाह्याः
ऐतिह्यस्यावितृष्णाः सानुक्रोशाः सत्यशुच
यः साधुसंमताः सर्वसत्त्वसौहार्दाद्रवार्द्रहृद
याः तथासर्वगुणोपेताराजसेनानभिभूताःक्ष
माभाजः आश्रितनंदना अनिस्त्रिंशाविद्या
धराअजडाः कलावंतः अदोषास्तारकाः ॥

एवमुत्तरत्र विरोधउद्भावनीयःक्षमाक्षांतिर्भूश्च आश्रितानांनंद
नाः नंदयितारः देवोद्यानं नंदनं च ननिस्त्रिंशा अक्रूराः विद्यां
धारयंतीति विद्याधराः पंडिता निस्त्रिंशाश्च खड्गाएव येच वि
द्याधरादेवभूतास्ते सखड्गाएव नत्वनिस्त्रिंशाइतिमालखड्ग
गुलिकांजनादिना भेदेन भिन्नानामपि विद्याधराणां खड्ग
हस्तत्वंनव्यभिचरति अजडाअमंदधियः अशीतांश्च कला
वंतो गीताभिज्ञाः कलावांश्चंद्रः सचाजडोशीतः इतिविरोधः
दोषाद्वेषाद्या रात्रिश्च तारयंतीति तारकाः आचार्यानक्षत्राणिच

अपरोपतापिनो भास्वंतः अनूष्माणोहुतभु
जःअकुसृतयोभोगिनः अस्तंभाः पुण्यालयाः
अलुप्तक्रतुक्रियादक्षाः अव्यालाः कामजितः
असाधारणा द्विजातयः तेषुचैवमुत्पद्यमाने
षु संसरति संसारेयात्सुयुगेषु अवतीर्णेकलौ
वहत्सु वत्सरेषु व्रजत्सु वासरेषु अतिक्राम
ति च काले प्रसवपरंपराभिरनवरतमापत
ति विकासिनि वात्स्यायनकुले क्रमेण कुबे
रनामा

तपस्तापः पीडाउष्णत्वंच भास्वंतस्तेजस्विनः आदित्याश्च ते
परांस्तापयंति ऊष्मास्मयोदाहिकाशक्तिश्च हुताशशब्देन हुताग्नि
ष्टमुच्यते हुतंभुजतिहुतभुजः आहिताग्नयोवन्हयश्च कुसृतिः शा
ठ्यंकौभूमौ सृतिः सरणंभोगिनः सुखिनःसर्पाश्च स्तंभःस्तब्धता
सात्विकोभावभेदश्चअप्रणतिर्वागृहधारणकष्टंचपुण्यालयाःसुकृ
तिनो मठादिस्थानानिच दक्षाश्चतुराःप्रजापतिभेदश्चदक्षःसच
लुप्तक्रतुक्रियो हररोषजेन वीरभद्रेण व्यालाः शठाः सर्पाश्च
कामजितः संतुष्टाः हरश्च कामजित् असाधारणाः सर्वोत्कृ
ष्टाद्विजातयोविप्रा येषांच द्वे जातीतेषांकथंनासादृश्यम्

वैनतेयइव गुरुपक्षपाती द्विजोजन्म लेभेत
स्याभवन्नच्युतः ईशनो हरः पाशुपत
श्चेति चत्वारोयुगारंभाइव व्राह्मतेजोजन्य
मानप्रजाविस्तारा नारायणवाहुदंडा इव
सच्चक्रनंदकास्तनयाः तत्र पाशुपतस्यै
कएवाभवद्भूभारइवाचलकुलस्थितिश्चतुरुद
धिगंभीरोर्थपतिरितिनाम्ना समग्राग्र्यज
न्मचक्रचूडामणिर्महात्मा सूनुः सोजनयद्भृ
गुं हंसं शुचिं कविं महीदत्तं धर्मंजातवेदसं
चित्रभानुं

कालइति पूर्वोक्ते अन्यथैतत्पुनरुक्तंस्यात् ४४ पक्षपातोभक्तिर्य
स्यास्तिसःपक्षैश्चयोयातिसःद्विजोविप्रःविधुःपक्षीच युगारंभात्र्प
पिचत्वारःवह्मवेदादिस्रष्टाच व्रह्मा सच्चक्रस्य साधुवृंदस्यनन्दका
स्तोषयितारः चक्रं सुदर्शनंचनन्दकःखड्गश्चवाहवोपिचत्वारः
अचलकुलस्थितिरभिन्नवर्षमर्यादः अचलानांगिरीणांकुलैर्वृदैः
स्थितिर्यस्य

त्र्यक्षमहिदत्तं विश्वरूपं चेत्येकादश रुद्रानि
वसोमामृतरसशीकरच्छुरितमुखान्पवित्रान्पु
त्रानलभत च चित्रभानुस्तेषांमध्येराजदेव्य
भिधानायांब्राह्मण्यां बाणमात्मजं सबालए
व विधेर्बलवतोवशादुपसंपन्नया ऽव्ययुज्यत
जनन्या जातस्नेहस्तु नितरांपितैवास्यमातृ
तामकरोत् अवर्धत चेतनाधिकतरमेधीयमा
नधृतिर्धाम्नि निजे कृतोपनयनादिक्रियाक
लापस्य समावृत्तस्य चतुर्दशवर्षदेशीयस्य
पितापि श्रुतिस्मृतिविहितंकृत्वा ॥

चतुरुदधिवृत्तेश्च गंभीरः अग्रयजन्मानो द्विजाः सोमस्तृ
णभेदः इन्दुश्च उपसंपन्ना मृता निजे धाम्निस्वेगृहेउपनयनं
मेखलादानंसमावृत्तोनिष्पादितवृत्तः स्नातकइत्यर्थः वेदवेदां
गपाठकः इत्यन्ये ईषदसमाप्तश्चतुर्दशवर्षश्चतुर्दशवर्षदेशीयः
श्रुतिस्तुवेदोविज्ञेयोधर्मशास्त्रंतुवैस्मृतिः ॥

द्विजजनोचितंनिखिलं पुण्यजातं कालेनाद
शमीस्थ एवास्तमगात् संस्थितेचपितरिम
हताशोकेनाभीलमनुप्राप्तो दिवानिशं दह्य
मानहृदयः कथंकथमपि कतिपयान्दिवसा
नात्मगृहे एवानैषीत् गतेचविरलतांशोकेश
नैःशनैरविनयनिदानतया स्वातंत्र्यस्य कु
तूहलबहुलतयाच बालभावस्य धैर्यप्रतिपक्ष
तयाचयौवनारंभस्यशैशवोचितान्यनेकानि
चापलानि आचरन्नित्वरोबभूव अभवंश्चास्य

दशामुपेतोदशमीस्थ उदाहृतः नदशमीस्थः अपूर्णायुरित्यर्थः
४५॥ संस्थितोमृतःआभीलं कष्टं इत्वरो गमनशालः अभव
श्चेत्यादिनात्मनस्तथाभूतकलावित्संपर्कमैश्वर्यातिशयं दर्शय
ति पारशवोद्विजःशूद्रायांजातः परस्त्रीपरश्वमिति विद्याद्यत्

वयसासमानाः सुहृदः सहायाश्च तथाच भ्रातरौ पारशवौ चंद्रसेनमातृषेणौभाषाकविरीशानः परंमित्रं प्रणयिनौ रुद्रनारायणौ विद्वांसौवारवाणवासवानौ कर्णकविर्वेणीभारतः प्राकृतकृत्कुलपुत्रोवायुविकारः वंदिनावनंगवाणसूचीबाणौ कात्यायनिका चक्रवाकिका जांगुलिकोमयूरकः तांवूलदायकश्चंडकःभिषक्पुत्रोमन्दारकः

परस्वादेशश्च भाषागेथवस्तुवाचस्तेषु कविर्गाथादिषु गीतिदइत्यर्थः अपभ्रष्टगातविद्याः पंचाशद्वर्षदेशीयां वीरांसंस्थितभर्तृकां वदंतिकात्यायनिकांधृतकाषायबाससं जांगुलिकोगारुडिकः भिषग्वैद्यःस्वर्णकारःकलादःस्यात्तदध्यक्षस्तुहैरिकः

पुस्तकवाचकः सुदृष्टिः कलादश्चामीकरः हैरिकः सिंधुषेणः लेखकोगोविंदकःचित्रकृद्वीरवर्मा पुस्तकृत्कुमारदत्तः मार्दंगिकोजीमूतः गायिनो सोमलग्रहादित्यौसैरंध्रीकुरंगिका वांशिकौ मधुकरपारावतौ गांधर्वोपायाध्यायोदुर्द्दुरकः सांवाहिका केरलिका लासकयुवातांडविकः आक्षिकआखंडलः कितवोभीमकः शैलालियुवा शिखंडकः नर्त्तकीहरिणिकापाराशरीसुमतिःक्षपणकोवीरदेवःकथको जयसेनः शैवोवक्रघोणः मंत्रसाधकः करालःअसुरविवरव्यसनीलोहिताक्षः धातुवादविद्विहंगमः दार्दुरिकोदामोदरः ऐंद्रजालिकःचकोराक्षः मस्करी ताम्रचूडः॥

पुस्तकृल्लेप्यकारः प्रसाधनोपचारज्ञासैरंध्रीस्ववशास्मृता ४६ संवाहिकायापादादिमर्दनंविधत्ते लासकोनर्त्ततियः युवेत्यादिना वयसः समानत्वमुच्यते अक्षैर्दीव्यतीत्याक्षिकोद्यूतकारः कितवोधूर्त्तः शैलाली स्वयंयोनृत्यतिनटः पाराशरीभिक्षुः असुरविवरव्यसनी पातालाभिलाषी धातुवादविद्रसवादज्ञः मस्करीपरिव्राट्

सएतैरन्यैरनुगम्यमानोबालतया निघ्नतामु
पगतोदेशांतरलोकनकौतुकाक्षिप्तहृदयः स
त्स्वपिपितृपितामहोपात्तेषु ब्राह्मणजनोचिते
षुविभवेषु सति चाविच्छिन्ने विद्याप्रसंगेगृहा
न्निरगात् अगाच्चनिरवग्रहोग्रहवानिव नव
यौवनेन स्वैरिणा मनसा महतामुपहास्य
तां अथशनैः शनैरत्युदारव्यवहृतिमतो हंति
हंति राजकुलानि वीक्षमाणो निरवद्य वि
द्याविद्योतितानि च गुरुकुलानि सेवमानोम
हार्हालापगंभीरगुणवद्गोष्ठीश्चोपतिष्ठमानःस्व
भावगंभीरधीधनानि विदग्धमंडलानिचगाह
मानः पुनरपि तामेव

निघ्नतामस्वातंत्र्यं कौतुकेति न पुनरर्थाभिलिप्सया एतदेवसत्स्व
पीत्यादिना प्रकाशयति निरवग्रहः स्वतंत्रः ग्रहवान् भूतगृही
तः स्वैरिणास्वतंत्रेण अत्युदारेत्यादिप्रकृतोपयोगी यस्मात् क
विना तथाविधवस्तुवेदिनावश्यमेव भवितव्यं वीक्षमाणइत्यने
नात्मनः किमपि प्रकृष्टमुत्कर्षातिशययोगित्वमाह अथचवीक्ष.
माणोनतुगुरुकुलवत्सेवमानः गाहमानइत्यनेन तेजस्वित्वमा
हात्मनः ॥

वैपश्चितीमात्मवंशोचितां प्रकृतिमभजत म
हतश्च कालात्तामेवभूयो वात्स्यायनवंशाश्र
यामात्मनोजन्मभुवं ब्राह्मणाधिवासमगम
त् तत्रच चिरदर्शनादभिनवीभूतस्नेहसद्भा
वैः ससंभ्रमप्रकटितज्ञातीयै राप्तैरुत्सवदि
वस इवानंदिताभिगमनोवालमित्रमंडलस्य
मध्यगतोमोक्षसुखमिवान्वभवादिति इति
श्रीमद्बाणकविविरचिते हर्षचरिते वात्स्याय
नवंशवर्णननाम प्रथमउच्छ्वासः ॥ १ ॥ ❀

वैपश्चितीविद्वज्जनोचितां ४७संस्तवः आदरः ज्ञातीनांकर्मज्ञातेयं
वंधुत्वं काविज्ञात्योष्ठक् आप्तैरिति वंधुभिर्योगिभिश्च योगिपक्षेवा
ल इववालोमित्रोरविर्निस्तेजस्त्वात् उक्तंच तपस्यंतंरविंदृष्ट्वानि
स्तेजाजायतेरविः मोक्षमार्गप्रयत्नेतु तेजोनैवास्यविद्यते इति
मित्रंसखासूर्यश्च मित्रः मंडलं समूहोविंबमोक्षसुखमपिसूर्याविंव
गतैरनुभूयत इति आख्यायिकासु कविभिर्निजवंशवर्णनंकान
ने तथावंशः ख्यापितःस्यादिति आत्मनश्चाविद्यवर्णनं सकलक
लाकौशलंममास्तीति हर्षस्य चरिते च वर्णयितव्ये नाम प्रस्तुतं
चैतादितिशिवम् इतिश्रीहर्षचरितसंकेते प्रथमउच्छ्वासः ॥ १

उँअतिगंभीरेभूपेकूपइवजनस्य निरवतार स्य दधातिसमीहितसिद्धिंगुणवंतः पार्थिवाघटकाः ॥ १ ॥ रागिणिनलिनेल क्ष्मीं दिवसोनिदधातिदिनकरप्रभवां अनपेक्षितगुणदोषः परोपकारः सतांव्यसनम्॥ २ ॥ अथतत्रानवरताध्ययनध्वनिमुखराणि भस्मपुंड्रकपांडुललाटैः कपिलशिखाजाल

उँअतोस्यादि यस्यक्रोधादिभावगणइंगितादिनापरेणनचेत्यते सगंभीरःउक्तंच यस्यप्रसादादाकाराक्रोधहर्षभयादयः भावस्था नोपलभ्यंतेतद्गांभीर्यमुदाहृतमिति अगाधश्चासौतरणमवतारःप्रवेशनं अवतरंतियेनेत्यवतारः सोपानादिश्चसमीहितासिद्धिंराजगृहे आत्मनः प्रवेशलक्षणंजलग्रहणलक्षणंच गुणाऔदार्यादयः आकर्षणरज्जवश्चपार्थिवाराजानः पृथ्वीविकाराश्चघटयंतिवांछितेनप्रयोजयंतीतिघटकाः कुंभाश्च अनेन तादृशे राज्ञि बाणस्य कृष्णएवसमीहितसिद्धेराध्यास्यतइतिसूचितं १ रागिणिरक्ते

जटिलैः कृशानुभिरिव क्रतुलोभागतैर्वटुभि
रध्यास्यमानानि सेकसुकुमारसोमकेदारि
काहरितायमानप्रघनानि कृष्णाजिनविकी
र्णशुष्यत्पुरोडाशीयश्यामाकतंडुलानि वा
लिकाविकीर्यमाणनीवारवलीनि शुचिशि
ष्यशतानीयमानहरितकुशपूलीपलाशसमि
धि इंधनगोमयपिंडकूटसंकटानि

विषयाभिष्वंगिनि चललक्ष्मीं शोभां मृगांश्च अत्र नलिनादिकमप्र
स्तुतं बाणाद्यास्तु प्रस्तुताः अनेन कृष्णेइंदृशे वा बाणो राजप्रभवां श्रियं
निधास्यतीत्युक्तं २ अर्थेत्यादि बाणो बांधवानां भवनानि पश्यन्सुखम
तिष्ठदिति संबंधः शिखा चूडा ज्वाला च सोमो यज्ञियद्रव्यं केदारिका
स्व स्वपंक्तेः प्रघटनेषु तथोचितत्वात् अहरिता हरिताः संपद्यमाना ह
रितायमाना लोहितादित्वात्क्यप् प्रघना न्यंगनानि उशंति प्रघ
नाभिरूयामेकदेशे तु वेश्मनः पुरोडाशीयेत्यादि सहितेर्थे ईयः वा
लिकाः कुमार्यः नीवारः अकृष्टपच्या व्रीहयः ४८ कूटाराशिः

आमिक्षीयक्षीरक्षारिणीना मग्निहोत्रधेनूनां खुरवलयैर्विलिखिताजिरवितर्दिकानि कामं डलव्यमृत्पिंडमर्दनव्यग्रयतिजनानि वैता नवेदीशंकव्यानामौडुंवरीणांशाखानांराशि भिः पवित्रितपर्यंतानि वैश्वदेवपिंडपंक्तिपां डुरितप्रदेशानि हविर्धूमधूसरितांगनविटपि किसलयानि वत्सीयवालकलालितलल तरलतर्णकानि क्रीडत्कृष्णशारच्छागशावक प्रकटितपशुवंधप्रवंधनानि ॥

आमिक्षीयमितितप्तेपयसिदध्यानयति सावैश्वदेव्यामिक्षा आमि क्षासाभृतोष्णेयाक्षीरंस्यादृधियोगतइति तस्यै हितमामिक्षीयं आमिक्षाप्रकृतित्वमस्यचयोग्यत्वात् अग्निहोत्रेषु तस्याअनाम्ना तत्वात् यद्वायदन्नस्यजुहुयादिति तस्याअपिहवनंसंभवत्येव व लयैःसमूहैःवितर्दिकावेदिकाकमंडलुर्मुनिकरकःतस्मैहिताः क मंडलव्यायदुगवादितोयत् यतीनांनिष्किंचनत्वादादरत्वाच्च स्व यंकरणं वितानोयज्ञःतत्रभवावैतानोयज्ञाग्निकार्यभूः शंकुः की लकः तस्मैहितः शंकव्यः औडुंवरीणामिति तासांयज्ञियत्वात् वत्सेभ्योहितः वत्सीयाः वत्सपरिचर्याचतुराः तर्णकाः सद्योजा तावत्साः कृष्णशारेतिछागाविशेषणं तदुक्तंलोहितसारंगःकृष्ण सारंगोवेतिसारंगशब्दः शवले वर्त्तते कृष्णश्चारामृगाइतिकेचि त् तन्नतेषांतदानुपयुक्तत्वात् पशुवंधायज्ञाः ॥

शुकशारिकारब्धाध्ययनदीयमानोपाध्याय विश्रांतिसुखानि साक्षात्त्रयीतपोवनानीव चिरदृष्टानांबांधवानां प्रीयमाणोभ्रमन्भवनानिसुखमतिष्ठत् तत्रस्थस्यचास्य कदाचित्कुसुमसमययुगमुपसंहरन्नजृंभत ग्रीष्माभिधानः संफुल्लमल्लिकाधवलाट्टहासो महाकालः प्रत्यग्रनिर्जितस्यास्तमुपगतवतोवसंतसामंतस्य वालापत्येष्विव पयःपायिषु नवोद्यानेषु दर्शितस्नेहोमृदुरभूत् ॥

कुसुमसमयोवसंतः सएव युगंकल्पस्तल्लक्षणं वा युगं मासद्वयं समुत्फुल्लमल्लिकाभिर्धवलात्त्र्यट्टाविक्रयस्थानानितेषां विकासो यत्र अन्यत्र तद्वदट्टहासउद्धतंहासितंयस्य शब्दशक्तिमूलानुरणनव्यंग्यरूपोध्वनिश्चप्रकृतवर्णनेह्यन्यदप्यत्रप्रतीयते नवाच्यतया तथाचमहाकालः साट्टहासः कल्पमुपसंहरन्नजृंभतेमुखंचविदारयतिमहान्कालोग्रीष्माख्योभैरवश्च पयोजलंक्षीरंच वालापत्यपक्षे नवमुद्यानमुद्गमनंयेषांतेषु इदंप्रथमतयागमनप्रवृत्तेष्वित्यर्थः दर्शितस्नेहइत्यनेनास्य विजिगीषुव्यवहार आरोपितः निर्जितस्यच पुनः प्रतिष्ठापनमेवयुक्तं स्नेहआर्द्रता प्रीतिश्च मृदुरकठोरः सदयश्च ॥

अभिनवोदितश्चसर्वस्यांपृथिव्यां सकलकु
सुमबंधनमोक्षमकरोत् प्रतपन्नुष्णसमयःस्व
यमृतुराजस्याभिषेकार्द्राश्चामरकलापाइवा
गृहीतकामिनीनां चिकुरचयाः कुसुमायुधेन
हिमदग्धसकलकमलिनीकोपनेवहिमालया
भिमुखींयात्रामदादंशुमाली अथललाटंतपे

अभिनवोदितइतिसाधरणंविशेषणं वासंतिकपुष्पाभिप्रायेण सकलपदबंधनत्वृतकारीच प्रतपन्प्रकर्षेण तपन् अन्यत्रशत्रुहृदये षुप्रतापंजनयन्अभिनवोदितश्च राजा बंधनमोक्षंकरोति उक्तंहि युवराजाभिषेकेवापरचक्रावरोपणे पुत्रजन्मनिवामोक्षोबंधनस्य विधीयतइति आदरप्रतिपादनायस्वयंशब्दः अभिषेकःस्नानं अन्यत्रमंगलजलपातनंतत्संपर्कवशाच्चार्द्रत्वम् ४९ चिकुराः केशाःतेहितदास्नानार्द्रतयासंयमनात्सुंदरतया विशेषतःशृंगार मुद्दीपयंतितथाचमहाकवेःकालिदासस्य स्नानार्द्रमुक्तेष्वनुधूप वासंविन्यस्तसायंतनमल्लिकेषु कामोवसंतात्ययमंदवीर्यःकेशेषु लेभेरतिमंगनानाम्

तपतितपने लिखितललाटिकापुंड्रकैः अल
कचीरचीवरसंवीतैः स्वेदोदबिंदुमुक्ताक्षव
लयवाहिभिर्दिनकरारधननियमाइवागृह्यंत
ललनाललाटेन्दुभिः चंदनधूसराभिरसूर्यंप
श्याभिः कुमुदिनीभिरिव दिवसमसुप्यतसुंद
रीभिः

यथावा राजशेखरस्य तदावेलातानां दरदालितमल्ली
मुकुरिणामित्यादि हिमाभिप्रायेच हिमालयग्रहणं अंशू
न्मलतिप्रारयतोस्यनेनहिमंप्रतिभवनशीलत्वमस्योच्यतेललाटंत
पतीतिललाटंतपइतिरदशू खरतरइत्यर्थः ललाटेलंकारोललाटिकाकर्णललाटात्कन्नलंकारे ललाटिकैव पुंड्रकंतिलकमिति
सर्वत्ररूपकं संवीतेःप्रावृतैःचंदनेनच तद्धूसराः असूर्यंपश्याभि
रिति आतपासहिष्णुतया अन्यत्र स्वभावात् दिवसंसुप्यतेइतिद्र
व्यकर्माणिलादिविधानात्कर्माणिद्वितीयैव भावेलः यदातु कर्मा
प्याख्याततया विवक्ष्यते तदा दिवसःसुप्यतेइतिभाव्यमितिनि
र्णीतम् ॥

निद्रालसारत्नालोकमपिनासहंतदृशः किमु तजरठमातपंअशिशिरसमयेन चक्रवाकमिथुनाभिनंदिताःसरितइव तनिमानमानीयंत सोडुपाः शर्वर्यः अभिनवपटुपाटलामोदसुरभिपरिमलंनकेवलंजलंजनस्यपवनस्यपवनमपिपातुमभूदभिलाषोदिवसकरसंतापात् क्रमेणचखरखरमयूखेखंडिततडिच्छेशवेशुष्यत्सरसि सीदत्स्रोतसि मन्दनिर्झरे

स्वापोनिद्रामुकुलताच जरठंकठोरंयतोग्रीष्मेणतनूकृताअतआहचक्रवाकेत्यादिरात्रौकिलचक्रवाकानां वियोगोभवतीत्यल्पतयातेस्ताअभिनंद्यंतेसरितश्चवृत्तिकारिकास्तेषामिति तदाभिनंदनं उडुपःशशीप्लवश्चक्रमेणचेत्यादौएवंविधेनिदाघकालेकठोरीभवतिसत्युन्मत्तामातरिश्वानः प्रावर्तंतेतिसंबंधः खगोरविःशुष्यदितिसाभिप्रायं स्रोतसश्चप्रसरणधर्मत्वादाह सीददितिसमंतादावेगगामिनः

झिल्लीकाझांकारिणि कातरकपोतकूजितानुबंधबधिरितविश्वविश्वसत्पतत्रिणिकरीषंकषमरुतिविरलवीरुधिरुधिरकुतूहलिकेसरिकिशोरकलिह्यमानकठोरधातकीस्तबकेताम्यत्स्तंबेरमयूथवमथु तिम्यन्महामहीधरनितंबे दूयमानाद्विरददीनदानाश्यानश्यामिकालीनमूकमधुलिहि लोहितायमानमंदारसिंदूरितसीम्नि

झिल्लिकाचीरीनामकःप्राणीयोवर्षासु तरुषु सीत्कारमुच्चैःकरोति कातरेति कपोताहिमेदोमयत्वान्नितांतंघर्मासहाः अतएवपतत्रित्वेपि पृथगुपादानं पतत्रित्वाभिप्रायेण श्वासमित्येतावदेव समुचितमेषांतथाभूतरुजाभावात् करीषोगोमयंत्रोटुत्सपर्णंशाखाजटिलंकुप्यकादि किशोरकेति बालत्वेन तृष्णाद्यसहिष्णुता मुग्धतातिशयश्चद्योत्यते धातकीलताभेदः ५० स्तबकः पुष्पगुच्छः स्तंबेरमोहस्ती वमथुः करिकरशीकरः तिम्यंत आर्द्रीभवंतः नितंबाः सानवः द्विरदाः करिणः दीनंक्षीणं आश्यानाश्रसरणधर्मकत्वादीषच्छुष्कश्यामिका मदलेखासंबंधिनी

सलिलस्यंदसंदोहसंदेहमुह्यन्महामहिषविषाणकोटिविलिख्यमान स्फुटत्स्फटिकदृषदि घर्ममर्मरितघर्मुति तप्तपांसुकुकूलकातरविकिरे विकरशरणश्वाविधि तटार्जुनकुररकूटज्वरविवर्त्तमानोत्तानशफरशारपंकशेषपल्वलाभासि ॥

लीना अतितर्षाच्छ्लिष्टाः मूकागुंजितहीनाः अलोहितालोहिताभवंतोलोहितायमानाः मंदाराः पारिभद्रद्रुमाः सिंदूरिता आहितसिंदूरा इव लोहितत्वात् ग्रामस्यग्रामांतरेणमर्यादासीमास्यंदः स्रुतिः विलिख्यमाना विपाट्यमानाः मर्मरिताः शुष्कत्वेनशब्दायमानाः घर्मुतोलताः कुकूलंतुषाग्निः विकिराः कुक्कुटाद्याः श्वाविधः शललाः सेहिकाख्या हिंस्राः प्राणिनः तटशब्देननैकट्यमाह अर्जुनाः ककुभवृक्षाः कुकुराः क्रौंचपक्षिणः कूटः शब्दएव संतापकारित्वाज्ज्वरः तेनस्फुरंतः शफरामत्स्यास्तैः शारं सितोदरत्वात् पल्वलेनइवलेकुररास्तटस्थायदाकूजंति तदामत्स्याः पीडिताः संतः उद्वर्त्तंतीतिवस्तुधर्मोयम् ॥

दावजनितजगन्नीराजने रजनीराजयक्ष्म
णि कठोरीभवतिनिदाघकाले प्रतिदिशमा
टीकमाना इवोषरेषु प्रपावाटकुटीपटलप्रक
टलुंठकाः प्रपक्ककपिकच्छूगुच्छच्छटाछोटन
चापलैरकांडकंडूला इव कर्षतः शर्करिलाः
कर्करस्थलीः स्थूलदृशश्चूर्णमुचः

नीराजनमितिनीराजनंशांतिकर्मराजयक्ष्माक्षयव्याधिः शनैः श
नैरपचयकारित्वात् मातरिश्वानः कीदृशाः प्रावर्त्ततेत्याहप्रति
दिशमित्यादि आटीकमानाउच्चैर्भ्रमंतः साभिप्रायमेतत् रजो
वशादेतेषांतथाविधसन्निवेशात् ग्रीष्मेह्येवंविधामारुताः प्रावर्त्त
संतिकालधर्मःउन्मत्तपक्षेआटीकमानाइत्यादिसर्वं वक्ष्यमाणयो
ग्यतयायोजनीयंउद्धतभ्रमणाद्याह्युन्मादस्यानुभावाः तदुक्तंअ
निमित्तहसितरुदितोत्कृष्टावद्धप्रलापशयनोत्थितप्रधावितवृत्तगी
तपठितास्मितपांस्ववधूननिर्माल्यचीर घटवक्रशरावाभरणस्प
र्शनोपभोगैरन्यैश्चाव्यवस्थितचेष्टाऽनुकरणादिभिरनुभावैरभिनयं
दिति ऊषरंसिकतावहुलोरूक्षोदेशः प्रपासत्रंकटःकुनालं
पटलंछदिः कापिकच्छूः कंडूदायकोद्रव्यभेदः अतएवाहकर्षंत
इति शर्कराः पाषाणकणिकाविद्यंतेयासुताः शर्करिलाः पिच्छा
दित्वादिलच् कर्करस्थलीऊषरभूः पाषाणभूः अतएवाहस्थूले
त्यादिना

मुचुकुंदकंदलदलनदंतुराःसमंततः पतन्मुख रचीरागणमुखशीकरशीक्यमानतनवः तरुणतरतरणितापतरलेतरंतइवतरंगिणि मृगतृष्णिकातरंगिणीनामलीकवारिणि

मुचुकुंदंपुष्पभेदःकंदलंनवनालं दंतुराइति कपिकच्छूस्पर्शचालनेनचयेकंडूलास्तादृशाश्चूर्णमुचोप्रकटदंताः परुषंकर्षंतिशीक्यमाणाःसिच्यमानाःतरुणतरः प्रौढःतरणिरादित्यः तरंतइवेतिवालुकावशात्तथालक्ष्यमाणत्वात् मृगतृष्णिका मरीचिका तृषितमृगाणांरविरश्मिखचितासु सिकतासु नीलत्वदर्शनाज्जलबुद्धिः वारिणीति सतरंगे वारिणियेसभीकास्ते सतापंदेशंतरंति उन्मत्तपक्षेपि विचित्तत्वेनैवंकारित्वम् शम्योग्निगर्भावल्लीभेदा लाघवंनैपुणंसव्यायामाश्च विषमंमार्गंलाघवेनतरंति जंघालावेगवंतः रेणवावर्त्ताः पांसुसंबंधिनआवर्त्तनरूपाः।५१ सन्निवेशाः तेषांमंडलीसमूहः रेचयति पृथक्करोतीति रेचकं

शुष्यच्छमीमर्मरमारवमार्गलंघनलाघवजव
जंघालाः रैणवावर्त्तमंडलीरेचकलासकरस
रभसारब्धनर्त्तनारंभारभटीनटाः दावदग्ध
स्थलीमषीमलिनमालिनाः

रैणवावर्त्तमंडल्यारेचकंतथारासेरसितयोरसस्तनयोरभसस्तद्व
शेनारब्धंयन्नर्त्तनमिवनर्त्तनंतदारंभेविषये आरभटीनटाइवारभटी
नटाःइयरतीतिअराःअराश्चतेभटाअरभटाःतेषामियमारभटीन
टजातिविशेषोवीररसप्रधानःउक्तंचप्लुष्टावपातप्लुतगार्जितानिछे
द्यानिमायाकृतमिन्द्रजालंचित्राणियूथानिचयत्रनित्यंतांतादृशी
मारभटींवदंतीतिनृत्तपक्षेआवर्त्ताआवृत्तयःयदाहमुनिःयदानृत्तव
शादंगंभूयोभूयोनिवर्त्तते तत्रद्यमतिनेयंस्याच्छेषंनृत्तेनियोजयेदि
तिमंडलीनृत्तंहल्लीसकं यदाह मंडलेनतुयन्नृत्तंहल्लीसकमितिस्मृतं
एकस्तत्रतुनेतास्याद्गोपस्त्रीणांयथाहरिरिति रेचकास्त्रयः कटीरे
चकोहस्तरेचकोग्रीवारेचकश्चेति रासलक्षणं अष्टौषोडशद्वात्रिं
शद्यत्रनृत्यंतिनायकाः पिंडीबंधानुसारेणतन्नृत्तंरासकंस्मृतमिति
अस्यैवतुहल्लीसकाद्याविशेषाः॥

शिक्षितक्षपणकवृत्तयइवमयूरपिच्छचयानु च्चिन्वंतःसप्रयाणगुंजाइव शिंजानजरत्कंजर मंजरीबीजजालकैः सप्ररोहा इव आतपातु रवनमाहिषनासानिकुंजस्थूलनिःश्वासैः सा पत्याइवउड्डीयमानजवन तरहरिणपरिपा टीपेटकैः सभ्रुकुटयइव दह्यमानखलधानवु सकूटकुटिलधूमकोटिभिः सावीचिर्वीचय इव महोष्ममुक्तिभिः

क्षपणकवृत्तय इवेति क्षपणकाश्चमषीमालिनाः बर्हिपिच्छानि शास्त्रचोदनयावहंति उन्मत्तपक्षे निर्विवेकतयामयूरपिच्छचयइ त्युक्तंप्राकृगुंजतीतिगुंजाढक्काभेदाः उन्मत्तानां नृत्तावसेरसंवत्व करतलादिवादयंति शिंजानाः शब्दायमानाः करंजोवृक्ष भेदः प्ररोहांकुरः उन्मत्ताअपि खेदान्निःश्वसंति सापत्याइवे ति उन्मत्ताअपि श्वभ्रादिपतनभयादपत्यानिनरवजंति पेटकै र्यूथैः सुभ्रुकुटयइवेति दह्यमानाभिप्रायेणोक्तं उन्मत्ताअपिक्रो धप्रायाएव क्रोधस्य भ्रुकुट्यादयोनुभावाःखलधानंक्षोदादिदेशः क्षुद्यमानंधान्यमित्यन्येतस्यस्यज्वालाभावाद्धूमवर्णनेंसमुचितं कु टिलपदं नचभ्रुकुटीसादृश्यमाह अवीचिर्नरकभेदः तस्यवीचय इववीचयः ज्वालामहोष्मेतिउन्मत्ताअपि खेदादिवशादूष्मा

लोमशाइवशीर्यमाणशाल्मलिफलतूलतंतुभि
र्दद्रुणाइवशुष्कपत्रप्रकराकृष्टिभिः सिराला
इव तृणवेणीविकिरणैः उच्छ्मश्रवइवधूय
मानयवशूकशकलशंकुभिः दंष्ट्रालाइवचालि
तशल्लसूचीशतैः जिह्वालाइववैश्वानरशि
खाभिः उत्सर्पत्सर्पकंचुकचूडालाः

लोमशाइवेति उन्मत्ताअपिक्षुरकर्मविनालोमशाः तूलंकर्पासः दद्रूः कुष्टविकारः सास्यास्तीतिदद्रुणः दद्राह्रस्वत्वंचेतिनः उन्मत्ताअपिउद्वर्तनंविनादद्रूयुक्ताभवंति सिरालाःप्रकटस्नायवः उन्मत्ताअपिकृशत्वात्सिरालाभवंति वेणी पंक्तिः सिरासादृश्यप्रतिपादनायवेणीपदंश्मश्रुःकूर्चंःशूकाःकिंशारवःउन्मत्ता अपि केशवपनाभावाद्दीर्घश्मश्रवःदंष्ट्र बहिर्निर्गतादंताः शल्लःश्वा.वतुसचोदीर्घकंटकरूपाणि रोमाणि अन्येतु दंष्ट्रालाःशल्लाःश्वाविधःपक्षाश्चशल्लाउच्यंते तथाच श्वाविधः शल्लैरिवेतिमहाभारतेदृश्यतइत्याहुः उन्मत्ताअप्येवमादिविकारेण सर्वं भावयंते

ब्रह्मस्तंभरसाभ्यवहरणाय कवलग्रहमिवो
ष्णैः कमलमधुभिरभ्यस्यंतः सकलसलिलो
च्छोषघर्मघोषणापटहैस्त्विशुष्कवेणुवनास्फो
टनपटुरवैस्त्रिभुवनविभीषिकामुद्भावयंतः च्यु
तचलचाषपक्षश्रेणीशारितसृतयः॥ त्विषिम
न्मयूखलतालातप्लोषकल्माषवपुष इव स्फु
टितगुंजाफलस्फुलिंगांगारांकितांगाः गिरि
गुहागंभीर

एवंजिह्वालाश्रपि एवमेवस्नानादिना विनोन्मुक्तचूडत्वाद्
त्सर्पादित्यादिकंचुकत्वक्ब्रह्मस्तंभोब्रह्मांडःरसाभ्यवहरणं शो
षणं रसानांचमधुरादीनांभोजनं असंचार्योमुखेपूर्णोगंडूषःकव
लोन्यथा अभ्यस्यंतीतिएवमिदंशोषयिष्यामइतिघर्मोग्रीष्मः
घोषणाश्रावणा विभीषिकामिति ये सगर्वा जगद्ग्रसनशीलाःते
त्रिभुवनेपिभयमुत्पादयंति चाषः किकीदिविःपक्षिभेदःउन्मत्तप
क्षे विस्मरणशीलत्वाच्युतेत्यादियोज्यं सृतिर्मार्गः ५२ त्विषि
मान्रविः अलातमुल्मुकंकल्माषं रक्तकृष्णगुंजाःक्तिकांउत्प
लानिलोहितकृष्णानिभवंतिस्फुलिंगाअग्निकणाः अंगारांकि
तानीवांगारांकितानि दग्धानि अंगानियेचसांगारास्तेचमालि
नशरीराभवंतिउन्मत्ताअपिअग्निशस्त्रशुभ्रादिषु बलादतिपतंति

झांकारभीषणभ्रांतयो भवनभरभीकरणाभिचारचरुपचनचतुरा रुधिराहुतिभिरिव पारिभद्रद्रुमस्तवकवृष्टिभिरर्दंदरतारकान्विनविभावसूनशिशिरसिकताताराकिलरहसः तप्तशैलविलीयमानाशिलाजतुरसलवालिप्त दिशो दावदहनपच्यमानचटकांडखंडखचिततरुकोटरकीटपटलपुटपाकगंधकटवः प्रावर्त्ततोन्मत्तामातरिश्वानः ॥

झांकारभीषणाभ्रमंतिचभ्रभिचारउच्चाटनं अभिचारिणाश्चोच्चाटनमारणाद्यर्थं चरुपचनं कुर्वंति रक्तेनचाग्नीन्प्रीणयंति पारिभद्रानिम्बामदनाइत्यन्ये उन्मत्ताअपि निर्विवेकतया रक्तादियत्किंचिदशुचिप्रायमग्निषुनिक्षिपंति ततएव विश्वस्य दोषायपर्यवस्यंति तारकितामिवरंहोवेगोयेषांते शिलाजतुरश्मरसो दावहनेनपच्यमानानियानि चटकांडानि तेषां विदारणवशात् स्फुटितायेखंडाः कपालानि तैः दोलावदुपरिपतितैः खचितानि कचकचायमानानियानितरुकोटरेषु कीटपटलानि क्रिमिसमूहाःतेषामतिपेशलत्वेनयतएवततैः खण्डरूपयांच्छादकतयास्थितैः पुटपाकैः प्रसूतधूमोभ्यंतरपाकः तद्गंधेनकटवःउद्वेजकाः अत्राग्निपाकेनखंडत्वंखंडेभ्योरसनिःसरणात्खचितत्वं कीटानांउन्मत्ताइति येचोन्मत्तास्तेसिकताव्याप्ताः कर्दमाविलिप्तादिशोगंधकटवःशाटीकराद्याःपूर्वोक्ताःक्रियाः प्रायेणकुर्वंतेइति सर्वत्रात्रमहावाक्ये ध्वनिच्छायान्वेष्या मातरिश्वानोवायवः ॥

सर्वतश्च भूरिभस्त्रासहस्रसंधुक्षणक्षुभिताइव जरदजगरगंभीरगलगुहावाहिवायवः क्वचित्स्वच्छंद तृणचारिणोहरिणाः क्वचित्तरुतलविवरवर्त्तिनोवभ्रवः क्वचिज्जटावलंविनःकपिलाः क्वचिच्छकुनकुलकुलायपातिनःश्येनाः क्वचिद्विलीनलाक्षारसलोहितच्छवयोधराः॥ क्वचिदासादितशकुनपक्षकृतपटुगतयोविशाखाः

सर्वतश्चेत्यादौदावाग्नयः प्रत्यदृश्यंतेतिसंवंधः भस्त्रादृतिः संधुक्षणमुद्दीपनं जरठाजगराः वृद्धसर्पाः गलाएव गुहाः गलगुहाः स्वच्छंदमप्रतिबद्धं यथा रुचि चरणंभक्षणंगमनंहारिणाःशुक्लमृगाश्च वभ्रवः कपिलानकुलाश्च इतरत्रजटामूलानिच कपिलाः पिंगलाः कपिलाख्यमुनिव्रतग्रहणान्मनुष्याएवाभेदोपचारेण कपिलाः एतेच जटावल्कलधारिणः कुलायानीडाः श्येनाः शुक्लाः पाजिकाश्च अधरायत्तुमशक्याः अधोभवावा लाक्षायाविलीनतयाअपीतत्वात् ओष्ठाश्चअधराः ॥ आसमंतात्सादिताः आहताःस्वीकृताश्चस्निग्धतयानीरसतयाच शकुनीनांपक्षेषुकृतपटुगतयः निःसारतया अकालस्यापितत्वात्

क्वचिद्दग्धानिःशेषजन्महेतवोनिर्वाणाः क्वचित्कुसुमवासितांवरसुरभयोरागिणः क्वचित्सधूमोद्गारामंदरुचयः क्वचित्सकलजगद्ग्रासघस्मराःसभस्मभूरिकाः क्वचिद्वेणुशिखरलग्नमूर्त्तयोत्यंतवृद्धाः क्वचिदचलोपयुक्तशिलाजतवःक्षयिणःक्वचित्सर्वान्नरसभुजः पीवानः क्वचिद्दग्धगुग्गुलवः

विगताशिखाज्वालायेषांते विविधशिखाःशराश्च निःशेषाः समस्ताःप्राक्तनजन्मांतरसंचितात्र्रपि जन्महेतवस्तृणाद्याःकर्माणिच निर्वाणाःशांतामोक्षगामिनश्च कुसुमंधूमः पुष्पंच अंवरं नभोवस्त्रंचरागिणोलोहिताःशृंगारिणश्च अजीर्णकृतोपिधूमोद्गारःरुचिर्दीप्तिर्भोजनाभिलाषश्च जगदेव ग्रासःकवलं तद्भक्षणशीलाः५१ भस्मभूरिकश्चात्यशनव्याधिःवृद्धावृद्धिंगताःस्थविराश्च तेवेणुशिखरमवलंवंते यष्टिंगृह्णंति अचलाः पर्वताः अन्यत्र क्षयस्यदीर्घकालपर्यावसायित्वादचलमविच्छिन्नं भक्षितशिलाव्हयाःउक्तंच शिलाधातुप्रयोगाद्वाप्रसादाद्वाथशंकरात् अजामूत्रप्रयोगाद्वाक्षयःक्षीयेतनान्यथेति क्षयोविनाशोव्याधिभेदश्च यक्षपारुयःरसःसलिलादि;अतएवपीवानःअन्यथा कथंसलिलादिभक्षणात्किंवमनोशांप्रसज्येत येचमधुरादिसर्वरसानुपभुंजते तेस्थूलाभवंति

रौद्राः क्वचिज्ज्वलितनेत्रदहनदग्धसकुसुमश रमदनाः कृतस्थाणुस्थितयः चटुलाशिखा नर्त्तनारंभारभटीनटाः शुष्ककासारसृतिभिः स्फुटन्नीरसनीवारवीजलाजवर्षिभिः ज्वाला जलिभिरर्च्चयंतइव घर्मघृणिं अघृणाइव हठ हूयमानकठोरस्थलकमठवसाविस्रगंधगृध्र बः स्वमपि धूममंभोदसमुद्भूतिभियेव भक्ष यंतः ॥

रौद्राभीषणा रुद्रभक्ताश्च नेत्राणां मूलानां दहनेन दग्धाः सकुसु माः कांडानि मदना वृक्षभेदाश्च यैः स्थाणुःछिन्नशाखोवृक्षः शिवश्चास्थितिः स्थानंव्यवहारश्चस्थाणुनापिनयनाग्निनासकुसुम शरः कामोदग्धः चटुलत्वेननर्त्तनारंभोरवश्च शुष्कत्वाच्चटुलादे रारभटीग्रहणं कासाराणिनड्वलाःतेषुयाः सृतयः क्वचित्स्मृतय इतिपाठः इतरत्रतु शुष्ककं शुष्कगीतं झुंठुमादिआसार्यंतइत्या सारा आसारितानियद्यपिगीयंतएव तथापि वर्धमानमथापीह तांडवंयत्रयोज्यतइति तांडवंह्यारभटीप्रधानं अर्चयंतइवेतितेषां तदभिमुखत्वात् घर्मघृणिःसूर्यःअघृणा अजुगुप्सा कमठः कू र्मःविस्रंस्यादामगंधियत् गृध्रवोलंपटाः समुद्भूतिः संभारः धूमा त्किलमेघोत्पत्तिः मेघाः शमयंति ॥

सतिलाहुतयइवस्फुटद्वहलवालकीटपटलाः कक्ष्येषुशिवाग्निणइव ह्लोषविचटद्वल्कलधवल शंबूकशुक्तयः शुष्केषु सरःसु स्वेदिनइवविलीयमानमधुपटलगोलगालितमधूच्छिष्टवृष्टयः काननेषु खलतयइव पर्यंतशोर्यमाणशिखासंहतयः महोषरेषु गृहीतशिलाकवलाइवज्वलितसूर्यमणिशकलेषु शिलोच्चयेषुप्रत्यदृश्यंत दारुणादावाग्नयः तथाभूतेच तस्मिन्नत्युग्रग्रीष्मसमयेकदाचिदस्यस्वगृहावस्थितस्यभुक्तवतोपराह्णसमयेभ्राता

कीटाः क्रिमयः ह्लोषः दाहः वल्कलशब्दस्त्वगुपलक्षणार्थः शंबूकाः शुक्तमंतः प्राणिभेदाः मधुपटलगोलोमाक्षिककरंडः मधूच्छिष्टंसिक्थकंखलतयःखल्वाटाः शिखाज्वालाचूडाच ऊषरं लिकाग्निवहलोरूक्षोदेशः शिलोच्चयोगिरिः दावोवन्हिगतोवन्हिर्दावश्चवनमुच्यते तथाभूतदेशइत्यादिनात्मानंप्रतितेषामादरातिशयं दर्शयति आकुर्वतइति नत्वप्रस्तावे एतेनस्वस्याकिमनिमाहात्म्यमाहस्त्रयमवसरमंतरेणत्रातस्यतदाप्रवेशाभावात् एतदेवदेवस्येत्यादिविशेषणसंदर्भमुखेन द्वारमध्यास्तइत्यनेनपोषयिष्यते

पारशवः चंद्रसेननामा प्रविश्याकथयत् एष खलु देवदेवस्य चतुःसमुद्राधिपतेः सकलराजचक्रचूडामणिश्रेणीशाणकोणकषणनिर्मलीकृतचरणनखमणेः सर्वचक्रवर्त्तिनां धौरेयस्य महाराजाधिराजपरमेश्वरश्रीहर्षदेवस्य भ्राताकृष्णनाम्नाभवतामंतिकं प्रज्ञाततमो दीर्घाध्वगः प्रहितोद्वारमध्यास्तेइति सोब्रवीत् आयुष्मन् अविलंवितं प्रवेशयैनमिति अथतेनानीयमानमतिदूरगमनगुरुजडजंघं कार्दमिकचेलचीरिकानियमितोच्चंडचंडातकं पृष्ठप्रेंखत्पटच्चरकर्पटघटितगलितग्रंथिमति निविडसूत्रवंधनिम्नितांतरालकृतव्यवच्छेदयालेखमालिकयापरिकलितमूर्धानं प्रविशंतं लेखहारकमद्राक्षीत् ॥

पारशवः शूद्रापुत्रः ५९ शाणोमणिकषणं कोणोश्रिः चक्रवर्त्तिनः सार्वभौमाः धौरेयोमुख्यः प्रज्ञाततमोतिप्रतीतः एतेन चवाणंप्रतिवहुमानएवगम्यते जडागमनासक्ताः कर्दमेनरक्तंकार्दमिकंचेलंवस्त्रं चीरिकाखंडिका उच्चंडं उच्चं गाढमित्यन्येचंडातकमधोरुकंवासः पटच्चरंजीर्णवस्त्रं निम्नितंनमितं लेखमालिकेति अन्यैरपि तद्धस्तैः लेखःप्रहितेति परागतः संवंधः परिकरितेतिपाठे वेष्टित इत्यर्थः ॥

अप्राक्षीच्चदूरादेवभद्रभद्रमशेषभवननिष्कारणबंधोस्तत्र भवतः कृष्णस्येति सभद्रामित्युक्त्वा प्रणम्यातिदूरेसमुपाविशत् विश्रांतश्चाब्रवीत् एषखलुस्वामिनोमाननीयस्यलेखःप्रहितइतिविमुच्यचार्पयत् अथवाणः सादरं गृहीत्वा स्वयमेवावाचयत् मेखलकात्संदिष्टमवधार्यफलप्रतिबंधीधीमद्भिरपहरणीयः कालातिपात इति एतावदत्रार्थजातमितरद्वार्त्तासंवादनमात्रकं

तत्रभवतः पूज्यस्यनातिदूर इति अतितुदूर एवेति सर्वत्रैवस्वस्य प्रभावातिशयं प्रतिपादयति फलं प्रतिबध्नाति रुणद्धीति फलप्रतिबंधी कालातिपात कालात्ययः अर्थजातमभिधेयप्रकारः

अवधृतलेखार्थश्च समुत्सारितपरिजनः संदेशंपृष्टवान् मेखलकस्त्ववादीत् एवमाहमेधाविनंस्वामी जानात्येव मान्यः यथैकगोत्रतावासमानजातितासमंसंवर्धनंवाएकदेशनिवासोवादर्शनाभ्यासोवा परस्परानुरागश्रवणंवापरोक्षोपकारकरणंवासमानशीलतावास्नेहस्यहेतवः त्वयि तु विनाकारणेनादृष्टेपि प्रत्यासन्ने वा बंधाविवबद्धपक्षपातं किमपिस्निह्यति मेहृदयं दूरस्थितेपीन्दोरिव कुमुदाकरे भवंतमंतरेणान्यथाचक्रवर्ती दुर्जनैर्ग्राहितआसीत्

अवधृतोज्ञातः ५५ एकेत्यादिकारणमुत्तरोत्तरमप्रधानं अन्यथाचान्यथाचेति एतेनाकिंचिदेवसंभवतीतिदर्शयति अतएवाह नचतत्तथेति तथात्वेतुवाणस्यदुर्वृत्ततापसज्येत कृष्णस्यापि तादृशःपक्षपातः स्वामिप्रतारणादिच दोषायैवभवेत् अतएववक्ष्यति तत्त्वान्वेषिभिरित्यादि ग्राहितइत्येतावति वक्तव्ये

नच तत्तथा न सत्येव ते येषां सतामपि सतां न विद्यंते मित्रोदासीनशत्रवः शिशु चापलापराचीनाचित्तवृत्तितयाच भवतः के नाचिदसहिष्णुना यत्किंचिदसदृशमुदीरितं इतरोलोकस्तथैव तद्गृह्णाति वक्ति च स लिलानीवगतागतिकानिलोलानिखलुभवंत्य विवेकिनांमनांसिवहुसुखश्रवणनिश्चलीकृत निश्चयःकिंकरोतु पृथिवीपतिः तत्वान्वेषिभि श्चास्माभिर्दूरस्थितोपिप्रत्यक्षीकृतोसिविज्ञप्त श्चक्रवर्तीत्वदर्थंयथाप्रायेणप्रथमेवयसिसर्व स्यैवचापलैः शैशवमपराधीति तथेतिच

आसीदित्यनेनदुर्जनाःसंपत्तिनिरवकाशाइतिप्रतिपादितं अतए ववक्ष्यतिअतएवचप्रतिपन्नंस्वामिनेति सतांसाधूनामपि सतां भवतांउदासीनोमध्यस्थःअपराचीना अपराङ्मुखीचेतोवृत्तिर्य स्याः॥ ५६ अवकेशीनिष्फलतरुः सचादृष्टरविस्तरुमध्यगोनक स्यचित्प्रियः स्वच्छोपजातावि षयामंडलानियस्मात्तादृगपिदे हिमयच्छेति

प्रतिपन्नंस्वामिना अतोभवताराजकुलमकृत
कालक्षेपमागंतव्यं अवकेशीवादृष्टपरमेश्व
रोबंधुमध्यमध्यवसन्नासि मे वहुमतः नचसे
वावैषम्यविषादिनावापरमेश्वरोपसर्पणभी
रुणा भवताभवितव्यंयतोयद्यपिस्वेच्छोपजा
तविषयोपि न याति वक्तुंदेहीतिमार्गणशतै
इच ददाति दुःखंमोहात्समाक्षिपति जीवन
मप्यकांडेकष्टंमनोभवइवेश्वरदुर्विदग्धः त
थाप्यन्ये ते भूपतयः अन्यएवायंन्यकृतनृग
नलनिषदनहुषांवरीषदशरथदिलीपनाभा
गभरतभगीरथययातिः

वक्तुंनपार्यते इतरत्र स्वेच्छया स्वसंकल्पेनउपजातउत्पन्नःविषयो
गोचरोयस्य तथाचोच्यते कामजानामितमूलंसंकल्पात्किलजा
यसेइति अथच स्वेच्छायाउपजाताविषयायस्यायं देहीच शरी
रवानिति वक्तुंन याति नशक्यते इतिविरोधः कामश्चानंगत्वा
द्देही शरीरवानिति वक्तुं नयुज्यतइति अन्यार्थः मार्गणायाच
काःशराश्चमार्गणाः जीव्यतेनेनेतिजीवनं ग्रामादि जीवितंचई
श्वरोराजाहरश्च दुर्विदग्धोदुरूढः दुष्टत्वाद्विशेषेणदग्धश्च

अमृतमयः स्वामीनास्याहंकारकालकूटाविष दग्धदुष्टहृदयः नगर्वगदगुरुगरगलग्रहग्रद्गद्गिरः नातिस्मयोष्मापस्माराविस्मृतस्थैर्याणि स्थानकानिनोद्दाममदर्पदाहज्वरवेगविक्लवाविकाराः नाभिमानमहासन्निपातनिर्भिन्नांगभंगानिगतानिनमदार्दितवक्रीकृतोष्ठानिष्टूतनिष्ठुराक्षराणि जल्पितानि तथाचास्यविमलेषुसाधुषुरत्नबुद्धिर्नाशिलाशकलेषु मुक्ताधवलेषुगुणेषु प्रसाधनधीः नाभरणभारेषु ॥

अमृतेत्यादिसाभिप्रायंयस्मादहंकारादिकालकूटादिनारूपयत्यत श्चाहंकारादीनामत्यंताभावप्रकाशनेच्छयाअमृतमयमस्यदर्शयति अमृतमयस्यचकालकूटादिभिर्नयोगः गरंविषंस्मयोगर्वः स्थानकानि स्थितयः आर्दितंवातव्याधिभेदः तस्मिन्सतिमुखंवक्रंभवति तथाचोक्तंवायुः प्रवृद्धस्तैस्तैश्चवातलैरूर्ध्वमाश्रितः वक्रीकरोतिवक्त्रारमुक्तंहसितमीक्षितमितिनिष्ठ्यूतानि निर्गतानि विमलेषु अपापेषु अन्यत्र सुच्छायेषु पद्मरागादिष्विति वक्तव्ये शिलेत्यादिपदनादरार्थं एवमुत्तरत्रापिज्ञातव्यं मुक्तवत्ताभिश्चधवलास्तेषुगुणेष्वौदार्यादिषु चसूत्रेषुचप्रसाधनंप्रकृष्टसाधनंअर्जनंभूषणंच

दानवस्तुकर्मसु साधनश्रद्धा न करिकटेषु स
र्वाग्रेसरे यशसिमहाप्रीतिर्नजीवितजरत्तृणे
गृहीतकराऽस्वाशासुप्रसाधनाभियोगः नानि
जकलत्रचर्मपुत्रिकासुगुणवतिधनुषिसहाय
बुद्धिः नपिंडोपजीविनि सेवकजने आपचा
रयामित्रोपकरणनात्मनाभृत्योपकरणंप्रभुत्वं
पंडितोपकरणंवैदग्ध्यं बांधवोपकरणंलक्ष्मीः

दानंधनत्यागोमदश्चसाधनंसंपादनं सैन्यंच साध्यतेनेनेतिकृत्वा
५७ आशादिशश्चेतोवांछाश्च करोदंडः पाणिश्च प्रसाधनंसं
पादनंदंडश्चगुणाज्या शौर्यांद्याश्च गुणाः उपक्रियंतेनेनेत्युपकर
णमुपयोगः आत्मेति नहि मित्राणि मित्रव्यतिरेकेणबांधवादिव
लक्ष्यादिकिंचिदपेक्ष्यंते प्रभुत्वमिति तस्यप्रभुत्वंसेवकादीनांदान
संपादनादियथाह यथाकालंप्रवर्त्ततेपंडितेत्यादिवैदग्ध्यमात्रापे
क्षयापंडितानांक्षपणादिवदर्थादनपेक्षितयाहि तेषामौचित्यंनप्र
तीयतेअनेनपंडितसामान्यात्तदभिप्रायेणस्वस्यसमुचितमेवहेवा
कमभिव्यनक्ति वैदग्ध्यापेक्षित्वंदर्शयतीतियावत् बांधवाःकु
ल्याः लक्ष्मीःछत्रचामरादिप्रतिपत्तिरूपाछत्रादिवस्तुल्याएव ल
भंतेन्येषामनर्हत्वात् ॥

कृपणोपकरणमैश्वर्यंद्विजोपकरणं सर्वस्वंसु
कृतसंस्मरणोपकरणं हृदयं धर्मोपकरणमा
युः साहसोपकरणंशरीरंअसिलतोपकरणंपृ
थिवीविनोदोपकरणंराजकंप्रतापोपकरणंप्र
तिपक्षः नास्यात्पपुण्यैरवाप्यते सर्वातिशा
यिसुखरसप्रसूतिःपादपल्लवच्छायेतिश्रुत्वाच
तमेवंचंद्रसेनंसमादिशत् कृतकाशिपुंविश्रांतसु
खिनमेनंकारयेतिअथगते च तस्मिन्पर्यस्तेच

कृपणेत्यादिकृपणानांपोषणमेवसमुचितंतत्रचैश्वर्यमेवहेतुःऐश्वर्यं
मर्थंवत्तानतुद्विजातिवदेतेसर्वस्वमर्हंतिसर्वशब्देनदाराअप्युच्यंते
एवमादि तु द्विजा एव लभंते तद्व्यतिरेकेणान्येषामनर्हत्वात्
एवंहृदयादि तत्तदभिप्रायेण विचारणीयं सुखमेवास्वाद्यतया
रसएवरसःसुखरसःछाया कांतिः यद्वाछायावत्त्वमेवांसर्वस्यकस्य
चिदाश्रयणीयत्वादुपवर्ण्यते अन्येयाद्याभिप्रायेण पादयोःकल्प
वृक्षतुल्यत्वमभिप्रज्यते पुण्यवशात्तद्वाप्तेःएतत्पक्षे छाया

वासरेसंघट्टमानरक्तपंकजसंपुटपीयमानइव क्षयिणिक्षामतांव्रजतिवालवायसारुणेपराहूणातपेशिथिलितनिजवाजिजवेजपापीडपाटलेअस्त.चलशिखरस्खलिते खंजतीव कमलिनीकंटकक्षतपादपल्लवेपतंगेपुरःपराप.तति प्रेंखदंधकारलेशलंवालके शशिविरहशोकश्यामइवश्यामामुखेकृतसंध्योपासनःशयनीयमगात् ॥

आतपप्रतिपक्षजातिःभोजनाच्छादनेसम्भिरुभेकशिपुरुच्यते वायसःकाकःजपारबिप्रियंपुष्पंआपीडःस्तवकः कोत्रास्तस्यादिस्वरूपकथनंक्षतपादपल्लवत्वादुत्प्रेक्षणंखंजतीवेतियश्च खंजति स शिखरप्राये विषमे पथि ये पुनरस्ताचले शिखररस्वलनकारणकं खंजनमित्युत्प्रेक्ष्यंते तान्प्रतिकमलिनीत्यादि निरर्थकंखंजतीवस्खलतीव पुरःपूर्वस्यांदिशि श्यामारात्रिर्योषिच्च मुखमारंभोवदनंच ॥

अचिंतयच्चैकाकी किं करोम्यन्यथा संभावि
तोस्मिराज्ञा निर्निमित्तबंधुनाच संदिष्टमेवं कृ
ष्णेनकष्टश्चसेवाविषमंचभृत्यत्वं अतिगंभीरं
महद्राजकुलंनचतत्रमेपूर्वजप्रवर्त्तिता प्रीतिः
न कुलक्रमागता गतिःनोपकारस्मरणानुरो
धः नबालसेवास्नेहःनगोत्रगौरवं नपूर्वदर्श
नदाक्षिण्यं नप्रज्ञासंविभागोपप्रलोभनं न
विद्यातिशयकुतूहलंनाकारसौंदर्यादरः न से
वा काकुकौशलं न विद्वद्गोष्ठीबंधवैदग्ध्यं न वि
त्तव्ययवशीकरणं नराजवल्लभपरिचयःअवश्यं
गंतव्यं सर्वथा भगवान्पुरारिर्भुवनगुरुर्गतस्य
मेसर्वं सांप्रतमाचरिष्यतीत्यवधार्य गमनाय
मतिमकरोत् अथान्यस्मिन्नहनि उत्थाय

निर्निमित्तेत्याद्यभिप्रायेण वक्ष्यति अवश्यंगंतव्यंचेत्यादि काकुः
स्त्रियाविकारोयः शोकभीत्यादिभिर्ध्वनेः इहच लक्षणया वक्रो
क्तिः सांप्रतंयुक्तं अथेत्यादावन्यस्मिन्नहनिप्रीतिकूटान्निरगादिति
संबंधः

प्रातरेव स्नात्वा धृतधवलदुगूलवासा गृही
ताक्षमालः प्रास्थानिकानि सूक्तानि मंत्रप
दानि वहुशः समावर्त्त्य देवदेवस्य विरू
पाक्षस्य क्षीरस्नपनपुरःसरां सुरभिकुसुमधू
पगंधध्वजवालिविलेपनप्रदीपकवहुलां वि
धायपूजांपरमयाभक्त्या प्रथमहुततरलातिल
स्वग्विघटनचटुलमुखरशिखाशेखरं प्राज्या
हुतिप्रवर्धितदक्षिणार्चिषं भगवंतमाशुशुक्ष
णिंहुत्वादत्त्वाद्युम्नंयथाविद्यमानं द्विजेभ्यः प्र
दक्षिणीकृत्य प्राङ्मुखींनैचिकीं शुक्लांगरा
गः शुक्लमाल्यः शुक्लवासाः रोचनांचित

संवंधः प्रस्थानंप्रयोजनंयेषां तानि प्रास्थानिकानिसूक्तानिवेदो
क्तामंत्रविशेषाः

दूर्वाग्रपल्लवग्रथितगिरिकर्णिकाकुसुमकृतक र्णपूरःशिखासक्तसिद्धार्थकःपितुःकनीयस्या स्वस्रामात्रेवस्नेहार्द्रहृदययाश्वेतवाससासा क्षादिवभगवत्यामहाश्वेतया मालत्याख्यया कृतसकलगमनमंगलोदत्ताशीर्वादोबांधववृ द्धाभिरभिनंदितः परिजनजरतीभिः वंदित चरणैरभ्यनुज्ञातोगुरुभिः अभिवादितैराघ्रा तः शिरसि कुलवृद्धैर्वर्धितगमनोत्साहः शकुनैः

विरूपाक्षस्त्र्यक्षः५१ प्राज्यभूरिआज्यंघृतंद्युम्नंधनं यथाविद्यमान मित्यनेननिर्लोभतोक्तानिचिकीवरांगोहोमधेनुंवा शुक्लांवा गिरि कर्णिकाअश्वखुरी मंगल्याओषधिः सिद्धार्थकानिसर्षपाः स्व स्राभगिन्यामहाश्वेता देवताविशेषःरविरथदेवतेत्यन्ये दत्तेत्या दिवांधववृद्धाभिप्रायेणसमुचितएवमभिनंदितइति प्रतिपदंद्वयमु क्तं जरत्योवृद्धाः आघ्रातः शिरसिचुंबितः ॥

मौहूर्त्तिकमतेन कृतनक्षत्रदोहदः शोभनेमुहू
र्त्ते हरितगोमयोपलिप्ताजिरस्थंडिलस्थापि
तमसिततरकुसुममालापरिक्षिप्तकर्णं पिष्टपं
चांगुलपांडुरं मुखविनिहितनवचूतपल्लवंपूर्ण
कलशमुदीक्षमाणः प्रणम्य कुलदेवताभ्यः
कुसुमफलपाणिभिरप्रतिरथंजपद्भिर्निजद्विजै
रनुगम्यमानः प्रथमचलितदक्षिणचरणःप्री
तिकूटान्निरगात् प्रथमेहनि घर्मकालकष्टंनि
रुदकं निष्पत्रपादपाविषमं पथिकजननम
स्क्रीयमाणंप्रवेशपादपोत्कीर्णकात्यायनीप्र
तियातनं शुष्कमपि पल्लवितमिव तृषित

मौहूर्त्तिकागणकाः नक्षत्रदोहदंप्रतिनक्षत्रप्राशनंनक्षत्राविषयोभि
लाषोवा अजिरमंगनं स्थंडिलं भूः परिक्षिप्तोवेष्टितःपिष्टपं
चांगुलमाजकाकाभिःपंचाभिरंगुलीभिर्मंगल्याय दीयतेअप्रति
रथंप्रास्थानिकंमंत्रं ६० निजेत्यादिनास्वरयदातृत्वमुक्तंउत्की
र्णा निखाताकात्यायनीदुर्गाप्रतियातना प्रतिमा काननत्वात्पल्ल
वितमिवेत्युत्प्रेक्षा जिह्वाएवलता दीर्घत्वात् गोलांगूलःकृष्णमु
खोवानरःमधुगोलंमाक्षिककरंडः सरघामधुमक्षिकाःअभीरुःश
तावरीकंदलानि नवनालानि

श्वपदकुललंवितलोलजिह्वालतासहस्त्रैः पुलकितमिव अच्छभल्लगोलांगूललिह्यमानमधुगोलचलितसरघासंघातैः रोमांचितमिव दग्धस्थलीरूढस्थूलाभीरुकन्दलशतैः शनैश्चंडिकाकाननमतिक्रम्य मल्लकूटनामानं ग्राममगात् तत्रच हृदयनिर्विशेषेण भ्रात्रा सुहृदा चजगत्पतिनाम्ना संपादितसपर्यः सुखमवसत् अथापरेद्युरुत्तीर्य भगवतीं भागीरथीं यष्टिगृहकनाम्निवनग्रामके निशामनयत् अन्यस्मिन्दिवसे स्कंधावारमुपमणितारमन्वजिरवति कृतसन्निवेशमाससाद

भ्रात्रेति चंद्रसेनेन हृदयेस्याद्यभिप्रायेणसुखमित्युक्तं मणितारंपत्तनभेदं अन्वजिरवति नदीभेदनिकटे सन्निवेशोगृहादिरचना निर्वर्तितेस्यादौ राजद्वारमीदृशमगमदितिसंबंधः निर्वर्तितेत्यादि राजदर्शने अकालत्वमात्मनः प्रतिपादयति वारणेन्द्रैः श्यामायमानामिति राजद्वारविशेषणं डिंडिमःपटहः ॥

अतिष्ठच्चनातिदूरे राजभवनस्य निर्वर्त्तितस्ना
नाशनव्यक्तिकरे विश्रांतश्चमेकलकेनमहया
ममात्रावशेषेदिवसे भुक्तवति भूभुजि प्रख्या
तानां क्षितिभुजां बहूनूच्छिविरसन्निवेशान्वी
क्षमाणः शनैः शनैः पट्टवंधार्थमुपस्था
पितैश्च डिंडिमाधिरोहणायाहतैश्च अभि
नववद्धैश्च विक्षेपोपार्जितैश्च कौशलिकोपा
गतैश्च नागवीथीपालप्रेषितैश्चप्रथमदर्शन
कुतूहलोपनीतैश्चदूतसंप्रेषणप्रेषितैश्चपल्ली
परिवृढढौकितैश्चस्वच्छायुद्धक्रीडाकौतुका

विक्षेपः करः ६१ नागवीथीहस्तिभूः पल्लीशवरवसतिः परि
वृढः आकारितैराव्हानैःआच्छिद्यमानैरपह्रियमाणैः यत्र दिनेषु
ष्पनक्षत्रे राजा स्नाति तद्दिनं पुष्पाभिषेकाख्यं श्यामायमानंका
लत्वमापद्यमानं अथच दिवसः श्यामायतिरात्रिवदाचरतीति
वक्रोक्तेः अभिषेकदिनानिच ध्वजादिरम्याणि अनवरतंया
दोतुरंगैस्तरंगायमाणामितिसंवंधः मृदःअंगंमृदंगश्च मुरजः

कारितैश्चर्चीयमानैश्चाच्छिद्यमानैश्चमुच्यमा
नैश्चयामस्थापितैश्च सर्वद्वीपजिगीषयागि
रिभिरिव सागरसेतुबंधार्थमेकीकृतैःध्वजपट
पटुपटहशंखचामरांगरागरमणीयैः पुष्पा
भिषेकदिवसैरिव कल्पितैःवारणेन्द्रैःश्यामा
यमानंअनवरतचलितखुरपुटप्रहतमृदंगैर्नर्त्त
याद्भिरिवराजलक्ष्मींउपहसद्भिरिवसृक्किपुट
प्रसृतफेनाट्टहासैनजवजडजंघांहरिणजाति
माकारयाद्भिरिवसंघट्टहेतोः हर्षहेषितेनोच्चैः
श्रवसंउत्पतद्भिरिवादिवसकररथतुरगरुषाप
क्षायमाणमंडनचामरमालैर्गगनतलं

सृक्किणी ओष्ठपर्यंतौ अन्यत्रेस्याद्दौ क्रमेलककुलैः कपिलायमा
नमित्यन्वयःवराटिकाः श्वेतिकाः शालीनां भवनंक्षेत्रंशाले
यंशालिव्रीह्योढंकू ॥ ६२ बीजकोशीशिंबिकाक्रमेलकाउष्ट्राः

तुरंगैस्तरंगायमानं अन्यत्रप्रेषितैश्चप्रेष्य
माणैश्चप्रेषितप्रतीपनिवृत्तैश्चवहुयोजनग
मनगणनासंख्याक्षरावलीभिरिववराटिका
वलीभिः घटितमुखमंडनकैः तारकितैरिव
संध्यातपच्छेदैररुणचामारिकारचितकर्णपूरैः
सरक्तोत्पलैरिवरक्तशालिशैलेयैरनवरतझ
णझणायमानचारुचामीकर घुरुघुरुकमालि
कैर्जरत्करंजवनैरिव रणितशुष्कवीजकोशी
शतैःश्रवणोपांतप्रेंखत्पंचरागवर्णोर्णाचित्रसू
त्रजूटजटाजालैःकपिकपोलकपिलैःक्रमेलक
कुलैः कपिलायमानं अन्यत्रशरज्जलधरैरि
व सद्यःस्नुतपयः पटलधवलतनुभिःकल्पपा
दपैरिवमुक्ताफलजालकजायमानालोकलुप्त
च्छायामंडलैः ॥

अन्यत्रेत्यादिनाऽऽनपत्रखण्डैः श्वेतायमानमित्यन्वयः स
द्यइत्याद्यभिप्रायेणशरद्ग्रहणस्नुतंनिर्गतं पयः क्षीरंजलंच पट
लवत्तेनच धवला तनुराकारायेषां अन्यत्र धवलाःश्वेततनवः
क्षीणाएचते

नारायणनाभिपुंडरीकै रिवाश्लिष्टगरुडपक्षैः क्षीरोदोद्देशैरिव द्योतमानविकटविद्रुमदंडैः शेषफणाफलकैरिवोपरि स्फुरत्स्फीतमाणिक्यखंडैः श्वेतगंगापुलिनैरिवराजहंसापसेवितैरभिभवद्भिरिवनिदाघसमयमुपहसद्भिरिवविवस्वतः प्रतापश्चापिवद्भिरिवातपंचंद्रलोकमयमिवजीवलोकंजनयद्भिः कुमुदमयमिवकालंकुर्वद्भिः ज्योत्स्नामयमिव कालंकुर्वद्भिः ज्योत्स्नामयमिव वासरं विरचयद्भिः

पुंडरीकग्रहणेनाकारसदृशत्वमप्युच्यते गरुडपक्षारत्नभेदाः गरुडस्यचांगरुहाः क्षीरोदेतिशुक्लतयाराजहंसाःप्रशस्तनृपाः रक्तचंचुचरणाराजहंसाः निदाघस्यतिरस्करणादभिभवद्भिरिवेत्युक्तं उपहसद्भिरिवेति प्रतापस्योपहासएवसमुचितोवैयर्थ्यात् अथचप्रतापपदेनभंग्याविवस्वतः आरोपितविजिगीषुव्यवहारत्वात् शत्रुमनःसंतापकारियशउक्तं आतपंप्रकाशमापिवद्भिरिति तस्यसर्वतएवातिदर्शनात् जीवलोकमिति यश्चजीवानांलोकस्तत्रकथंचंद्रलोकइतिविरोधःकुमुदमयमिवेति कुमुदमयत्वाच्छुक्लंभवति नतुकालं कुमुदमयंचसमयंकार्त्तिकादि ज्योत्स्नेतिवासरे ज्योत्स्नानसंभवतीतिविरोधः

फेनमयीमिव दिवं दर्शयद्भिः अकालकौमुदी
सहस्राणीव सृजद्भिः उपहसद्भिरिव शातक्र
तवींश्रियं श्वेतायमाणैरातपत्रषण्डैः श्वेतद्वी
पायमानं क्षणदृष्टनष्टाष्टदिङ्मुखंच मुषद्भिरिव
त्रिभुवनमाक्षेपोत्क्षेपदोलायितं दिनं गतागा
तानिवकारयद्भिः उत्सारयद्भिरिवकुनृपकलं
ककालींकालियींस्थितिंविकचविशदकाशव
नपांडुरांदिशं शरत्समयामिवोत्पादयद्भिः

एवंचदिवः फेनमयीत्वं जलदे हि फेनानामभावः कौमुदीकुमु
दिनी कार्त्तिकीच ज्योत्स्नापूर्वंसामान्येनोक्ताइति विशेषणश्वेता
इवाचरंतःश्वेतायमानाः तैस्तत्रतेषां स्वतएव श्वेतत्वाच्छ्वेतप
देनकथमुपमानतेत्युच्यते श्वेतगुणाइवाचरंतः श्वेतायमानाः

विसतंतुमयमिवांतरिक्षमाविर्भावयद्भिः शशिकरशुचीनांचलतां चामराणां सहस्रैर्दोलायमानंअपिचहंसयूथायमानंकारिकर्णशंखैः कल्पलतावनायमानं कदलिकाभिः माणिक्यवृक्षकवनायमानंमायूरातपत्रैः मन्दाकिनीप्रवाहायमानमंशुकैः क्षीरोदायमानं क्षौमैःकदलीवनायमानं मरकतमयूखैः जन्यमानान्यदिवसमिव पद्मरागबालातपैः ॥

तेनयथाश्वेतगुणयोगादन्यत्किंचिच्छ्वेतते तद्वदेतद्योगात् राजद्वारमिति श्वेताःस्फटिकाइत्यन्ये केचित्तु श्वेतमानैरिति पठंति क्षणेत्यादौ चामराणां सहस्रैर्दोलायमानमित्यन्वयः ॥ ६२ कलेरियं कालेयी सर्वत्राग्निकालिभ्यांढक् पद्मरागाइव बालातपास्तैः ॥

उत्पाद्यमानापरांबरमिवेन्द्रनीलप्रभापटलैः आरभ्यमाणापूर्वनिशमिव मयूखांधकारैः स्यंदमानानेककालिन्दीसहस्रमिवगरुडमणिप्रभाप्रतानैः अंगारांकितमिव पुष्परागरश्मिभिः कैश्चित्प्रवेशमलभमानैरधोमुखैश्चरणनखपतितवदनप्रतिबिंबनिभेन लज्जया स्वांगानीव विशद्भिः कैश्चिदंगुलोल्लिखिताः क्षितेर्विकीर्यमाणकरनखाकिरणकदंबकव्याजेन सेवाचामराणीवार्पयद्भिः कैश्चिदुरः

महानीलागरुडमणयः पुष्परागाश्चमणिभेदाः कैश्चिदित्यादौशत्रुमहासामंतैः समंतादासेव्यमानमित्यन्वयः सेवेत्यादि त्वयेदानींचामरग्रहणेनसेवनीयइतितेषांहिक्षितिः कलत्रमतस्तद्वारेण सेवनेच्छा ॥ ६४ ॥हारस्यपोमध्यमणिस्तरलः सप्रकीर्तितः चपलोवाशेखरंमुंडमालिक मौल्यःकेशाः

स्थलदोलायमानेन्द्रनीलतरलप्रभापट्टैःस्वामिप्रकोपप्रशमनाय कंठवद्धकृपाणपट्टैरिव कैश्चिदुच्छ्वाससौरभ भ्राम्यद्भ्रमरपटलांधकारितमुखैरपहृतलक्ष्मी धृतलंवश्मश्रुभिरिव अन्यैश्च शेखरोड्डीयमानमधुपमंडलैः प्रणामविडंवनाभयपलायमानमौलिभिरिव निर्ज्जितैरपि संमानितैरिवानन्यशरणैःअंतरांतरानिष्पततां प्रविशतां चांतरप्रतीहाराणामनुमार्गप्रधावितानेकार्थजनसहस्राणामनुयायिनः पुरुषानश्रांतैः पुनः पुनः पृच्छद्भिर्भद्राद्य भविष्यति भुक्त्वा स्थानेदास्यति दर्शनंपरमेश्वरः निष्पतिष्यतिवा वाह्यांकक्ष्यामिति

निर्ज्जितैः पुरस्कृतन्यक्कृतैः राजसेवाप्राप्तैःसंमानितैः पूजितैरिव अनुयायिनइति तेषांस्वयंसुलभत्वात् जैनैः शाक्यैः आर्हतैः क्षपणकैः पाशुपतैः शैवभेदैःपराशरेणप्रोक्तमधीयंतेपाराशरिणः

दर्शनाशया दिवसं नयद्भिः भुजनिर्जितैश्च शत्रुमहासामंतैः समंतादासेव्यमानं अन्यैश्च प्रतापानुरागागतैर्नानादेशजैर्महामहीपालैः प्रतिपालयद्भिः नरपतिदर्शनकालमध्यास्यमानं एकांतोपविष्टैश्च जैनैरार्हतैः पाशुपतैः पाराशरिभिर्वर्णिभिश्च सर्वदेशजन्मभिश्च जनपदैः सर्वांभोधिवेलावनवलयवासिभिश्च म्लेच्छजातिभिः सर्वदेशांतरागतैश्च दूतमंडलैरुपास्यमानं सर्वप्रजापतिनिर्माणभूमिमिव प्रजापतीनां लोकत्रयसारोच्चयरचितं चतुर्थमिव लोकंमहाभारतशतैरप्यकथनीयसमृद्धिसंभारम् ॥

यतयः तैर्वर्णिभिर्ब्रह्मचारिभिः सर्वप्रजेति अत्र हि स्थित्वा यदि प्रजापतयो न सृजेयुः तत्कथं सर्वे भावाः कारणभूता इव तत्र लक्ष्येरन् ॥

कृतयुगसहस्रैरिव कल्पितसन्निवेशं स्वर्गा र्बुदैरिव विहितरामणीयकं राजलक्ष्मीकोटि भिरिव कृतपरिग्रहं राजद्वारमगात् अभ्य जायताविस्मयोस्यमनसि कथमिवेदमियत्प्र माणं प्राणिजातं जनयतांप्रजासृजांनासीत् महाभूतानांवा परिक्षयःपरमाणूनांवापरिच्छे दः कालस्य वांतः आयुषोवा व्युपरमः आ कृतीनां वा परिसमाप्तिरिति मेखलकस्तु दूरादेव द्वारपाललोकेन प्रत्यभिज्ञायमानः तिष्ठतु तावत्क्षणमात्रमत्रैव पुण्यभागीति

अर्बुदंदशकोटयः कोटिर्लक्षशतं इहतुबहुसंख्योपलक्षणार्थांब र्बुदकोटिशब्दौपरिसमाप्तिरनारंभः तिष्ठत्विति विद्यायुक्तेकदाचि दनादरशंकेत्येतदर्थमाहपुण्यभागीति अथेत्यादौइदक्षपुरुषेणा नुगम्यमानो निर्गत्यावोचदिति संबंधः अंतरालेबस्त्वंतरादिवर्ण

तमभिधायाप्रतिहतःपुरःप्राविशत् अथमुहूर्त्तादिवप्रांशुना कर्णिकारगौरेण वीध्रकंचुकच्छत्रवपुषा समुन्मिषन्माणिक्यपदकवंधवंधुरशस्तवंधकृशावलग्नेन हिमशैलशिलाविशालवक्षसा हरवृषककुदकूटाविकटांसतटेनोरसाचपलहर्षीकहरिणकुलसंयमनपाशमिवहारंविभ्रताकथय तं यदि सोमवंशसंभवः सूर्यवंशसंभवोवाभूपतिरभूदेवंविधइति प्रष्टुमानौताभ्यां सोमसूर्याभ्यामिव श्रवणगताभ्यां मणिकुंडलाभ्यां

नाभावादद्येत्यादिना समनंतरमेवनिर्गमनेनपुनरादरएवप्रतीयते अतआह मुहूर्त्तादिवेति पुरुषानुगतत्वेन चादरएवपोष्यते वीध्रंनिर्मलं वंधुरशोभनं शस्तं सुवर्णपट्टिका कटीसूत्रं तस्यवंधेन निवेशनेन कृशमवलग्नं मध्यंयस्यतेन हिमशैले हिमग्रहणं राज्ञो धवलत्वात्

समुद्गासमानेन वहद्वदनलावण्यविसर वेदिकाक्षिप्यमाणै रधिकारगौरवाद्दीयमान मार्गेणेव दिनकृतः किरणैः प्रसादलब्धया विकचपुंडरीकमुंडमालिकयेव दीर्घयादृष्ट्या दूरादेवानंदयताऽनैष्ठुर्याधिष्ठानेपि प्रतिष्ठितेन पदे प्रश्रयमिवाऽवनम्रेण मौलिना पांडुरमु ष्णीषमुद्वहता वामेन स्थूलमुक्ताफलच्छुरण दंतुरत्सरु करकिसलयेन कलयता कृपाणंऽ तरेणापनीततरलतां ताडनीमिव लतांशात कौंभींवेत्रयष्टिमुन्मृष्टांधारयतापुरुषेणानुगम्य मानोनिर्गत्याऽवोचत्

हरग्रहणंजराशौकल्यप्रतिपादनायपूर्ववत् हृषीकाणीन्द्रियाणि आनीताभ्यामिति आनयने तस्य प्रभविष्णुताध्वन्यते यश्च स्रष्टु मानीयते सश्रवणंगच्छति ६६ वेणिकाप्रवाहः वामेनेति तदा तस्यव्यापारानुपपत्तेः अपनीतेत्यादिनाऽस्य नियमविधायित्वंप्रो च्यते उन्मृष्टामुत्तंसितां अनेन भास्वरतैव प्रोच्यते ॥

एष लघुमहाप्रतीहाराणामनंतरः चक्षुष्यो
देवस्य परियात्रनामा दौवारिकः समनुगृह्
णातुएनमनुरूपयाप्रतिपत्त्याकल्याणाभिनि
वेशीतिदौवारिकः समुपसृत्य कृतप्रणामोम
धुरयागिरासावनयमभाषतआगच्छत प्रवि
शत दर्शनायकृतप्रसादोदेवइतिवाणस्तु ध
न्योस्मि यदेवमनुग्राह्यंमांदेवोमन्यत इति
उक्त्वा तेनोपदिश्यमानमार्गः प्राविश
दभ्यंतरं ॥

अनंतरः प्रधानंचक्षुष्यः प्रियः आगच्छतेत्यादौवहुत्वनिर्देशेना
दरएवास्यापाद्यते अथेत्यादावेवंविधस्तुरंगैरारचितांमंदुरांविलो
कयन्दूरादिभधिष्ण्यागारमपश्यदितिसंवंधः वनायुजादीनि दे
शविशेषेणाश्वानांनामानिशोणेत्यादिवर्णविशेषवर्णनं ६७
शोणः पद्मारुणः स्मृतः पिंजरैरीषत्कपिलैः हरिच्छुकनिभो
वर्णः तित्तिरिः पक्षिभेदःतद्वच्चित्रैः सिताश्वयस्यवाजिनः शफाः
समस्तकंमुखं सपंचभद्रनामकोनृपस्यराज्यसौख्यदः शुक्लपर्यंत
असिततारकेनयनेयेषांत मल्लिकाक्षाः उक्तंच पृथुस्निग्धासमा
चैवमल्लिकाकुसुमप्रभाराजीयस्यतुपर्यंतेपरिक्षिप्येतुलोचने सह
योमल्लिकाक्षस्तुदृष्टिपर्यंततारकइति तारकाकदंवककल्पानेक
विंदुकल्माषितत्वचः कृत्तिकापिंजराः यतः आयतेत्यादि त
दुक्तंमुखंतन्वायतनतंचतुरस्रंसमाहितंऋजुचैवोपदिष्टंचपरिपू
र्णंचशस्यतेइतिकृष्णेनाप्युक्तं ॥

अथवनायुजैः कांबोजैरारट्टजैर्भारद्वाजैः।सिंधुदेशजैः पारसीकैश्च शोणैश्चश्यामैश्चश्वेतैश्च पिंजरैश्चहरिद्भिश्चतित्तिरिकल्माषैश्च पंचभद्रैश्चमल्लिकाक्षैश्च कृत्तिकापिंजरैश्चायतानिर्मांसमुखैरनुत्कटकर्णकोशैः सुवृत्तश्लक्ष्णसुघटितघटिकाबंधैःयूपानुपूर्वीवक्रायतोदग्रग्रीवै रुपचयश्वयत्स्कंधसंधिभिः निर्भुग्नोरःस्थलैः ॥

उत्ताश्रतुंगग्रस्थीणिभ्मंसंवाहिराणश्रच्चश्रणामिति अनुत्कटोह्स्वः कोशोमध्यंशिरसोग्रीवायाश्चयन्मध्यंचघंटिकाबंधः घोनिगालइत्युच्यते तस्य सुवृत्तादिशस्यते यदाह ग्रीवाशिरोंतरश्लिष्टोदीर्घवृत्तः समाहितः नोद्वर्तो नाधितोनातिदुर्लाहोतिविधानतः सुदिग्धोनुपदिग्धश्चनिगालोगादितःशुभइति यूपोयज्ञचिन्हं तस्यैवानुपूर्वीयस्याः तथा वक्राआयताउदग्राउद्धुराग्रीवायेषां तदुक्तं ग्रीवामूलंविनीवृत्तादीर्घाचसुसमाहिता गलेवद्धाविदोर्वृत्ता तथाशिरसिचोयता निगालेस्याञ्चानिर्मांसामृद्वीसाकुंचिताभृशं श्लिष्टमांसाग्रवद्धाचतुरगस्यप्रशस्यते इति उपचयस्यादि तदुक्तं स्कंधः सुपरिपूर्णः स्याद्दृढकमांसःपृष्ठात्रिकः बहुमांसांगसाश्लिष्टः स्थिरमांसश्चपूजितइति निर्भुग्नंस्थूलत्वाद्वहिर्निःसृतं उक्तंच स्थूलास्थिमहदाच्छेद्यंपृथुलंयच्चानिबांलि उरइदृक्प्रशंसंतिस्थूलकोडमहत्तरामिति निर्भुग्नमृत्पन्नद्रोणिकामितिकेचित् ॥

अस्थूलप्रगुणप्रसृतैः लोहपीठकठिनखुरमंड
लैरतिजवत्रुटनभयादनिर्म्मितत्रिणीवोदरा
णिवृत्तानि धारयद्भिरुच्चद्द्रोणी विभज्यमा
नपृथुजघनैः जगतीदोलायमानबालपल्लवैः
कथमप्यभयतो निखातदृढभूरिपाशसंयमन
नियंत्रितैरायतैरपि पश्चात्पाशबंधप्रसारितै
कांघ्रिभिरायततरैरिवोपलक्ष्यमाणैः बहुगु
णसूत्रग्रथितग्रीवागंडकैरामीलल्लोचनैःदूवार
सश्यामफेनलवशबलान्दशनगृहीतमुक्तान्

अस्थूलप्रगुणप्रस्थितैर्निर्मांसरुजुजंघैः उक्तंचजंघवृत्तेदीर्घानिर्मां
सेपूजितेनिगूढासिरे इतिमंडलशब्देन वृत्तत्वमुच्यते तदुक्तं खुरा
स्तुरगेवृत्ताश्वहृस्वाश्वसुदृढाघना इति तथाशिलातलनिभैः खुरै
रिति उदराणीतितदुक्तंउदरंवृत्तमगुरुमगस्योपचितंतथाअच्छिद्र
हृस्ववृत्तात्पसमकुक्षिचपूजितमिति द्रोणीशोभाविशेषः यदाह
पृष्ठोरः कटिपार्श्वस्यमांसोत्कर्षणानिर्मिता द्रोणिकातिप्रशंसं
ति शोभाप्राजिनिपंचमीति वालाएवपल्लवाः उभयइति अ
त्युद्दामवेगवत्त्वादुभयत्रपाशबंधः गंडकोभूषणभेदः ६१

फरफरितत्वचःकंडूजुषः प्रतीकान्प्रचालय द्भिः सालसवलितवालधिभिरेकशफविश्रांति स्रस्तशिथिलितजघनार्धैर्निद्रया प्रध्यायद्भि श्च स्खलितहुंकारमंदमंदंशब्दायमानैश्च ता डितखुरधरणिरणितमुखर शिखरखुरालिखि तक्ष्मातलैर्घासमभिलषद्भिश्च प्रकीर्यमाणय वसग्रासरसमत्सरोद्भूतक्षोभैश्च प्रकुपितचंड चंडालहुंकारकातरतरतरलतारकैश्च कुंकुम प्रमृष्टिपिंजरांगतया सततसन्निहितनीरा जनानलरक्ष्यमाणैरिवोपरि विततवितानैः

फरफरिताः पुनः पुनरीषत्कंपिताः वालधिः पुच्छः शफः समुद्रयुक्तः पादः खुरधरणी खुराधःकाष्ठपट्टाच्छादिता भूः चंडालोश्वपालः प्रमृष्टिः प्रमार्जनं वितानकंरक्तकंदेवतात्रगोविंदः आरचितांभूषितांहस्तवामशब्दोभाष्यकृताद्यामहस्तमार्गइत्यर्थे

पुरःपूजिताभिमतदेवतैर्भूपालवल्लभैस्तुरगैरा रचितांमन्दुरांविलोकयन्कुतूहलाक्षिप्तहृदयः किंचिदंतरमतिक्रांतोहस्तवामेनअत्युच्चतया निरवकाशमिवाकाशं कुर्वाणं महताकदली वनेनपरिवृत्तपर्यंतंसर्वतामधुकरमयीभिर्मद स्रुतिभिर्नदीभिरिवापतंतीभिरापूर्यं माणमा शामुखविसर्पिणावकुलवनानामिव विकस तामामोदेनलिंपंतंघ्राणेन्द्रियंदूरादन्यामिभ धिष्ण्यागारमपश्यत् ॥

वकुलेत्यादिना प्राशस्त्यमेवपोषयति तदुक्तं मालातिमुकपुन्ना गवकुलोपमसौरभं दानंपिष्टावुसदृशंमुंचच्छ्रवेतंतुशीतलमिति श्लैष्मिकादानलक्षणंएवंचघर्मलक्षणेतुप्रकोपसमयेपि तथाविं धमदवर्णनयाश्लेषप्रकृतिरेवंप्रकाशयति श्लेषप्रकृतिकंश्रेष्ठंभद्र जातितथैवचइति चशास्त्रकृतादर्शितम् ६९, धिष्ण्यंमण्डपं

अपृच्छञ्च अत्रदेवः किंकरोतीति असावकथ
यत् एष खलु देवस्योपवाह्योवाह्यहृदयं जात्यं
तरितआत्मा वहिश्चराःप्राणाविक्रमक्रीडासुहृ
तृदर्पशातइति यथार्थनामा वारणपतिःतस्या
वस्थानमंडपोयंमहान्दृश्यतइति सतमवादी
त् भद्र श्रूयते दर्पशातःयद्येवमदोषोवा पश्या
मि तावद्वारणेन्द्रमेव अतोहंसिमामत्रत्रापयि
तुंअतिपरवानस्मिकुतूहलेनेतिसोभाषत भद्र
स्वैरंआगच्छतुभवान् कोदोषःपश्यतु तावद्वा
रणेन्द्रमिति गत्वाच तंप्रदेशं दूरादेवगंभी
रगलगर्जितार्जितैर्वियाति

उपवाह्यः क्रीडाहस्ती यस्मात्केचनसन्नाह्याः केचिद्रूढजातो
याःउभयस्वभावाभवंतिकरिणः अस्यचयद्यपिविक्रमक्रीडासुहृ
दित्यनेनदर्पशातइति यथार्थनामा वारणपतिरित्यनेनच साम्रह्य
त्वमेवोक्तं तथाह्योपवाह्याइति कथनेद्वयेपियोग्यत्वात् भद्रजा
तयित्रास्यानिश्चीयते जात्यंतरितोद्वितीयांजातिंहस्तिरूपांप्राप्तःप
येत्रामिति यदिसत्यंदर्पशातोयमदोषोवेतिवाशब्दश्चार्थेयदिच
नदोषइत्यर्थः यतोरसदानादिभयेनकेनचिद्द्रष्टुंनलभ्यते कुतूहले
नपरवान्कुतूहलायितः गत्वेत्यादौदूरादेवंदर्पशातमपश्यदितिसं
बंधः गर्जितंबृंहितं

चातककदंबकैःभुविचभवननीलकंठकुलैः कलकेकाकलकलमुखरमुखैः क्रियमाणकलकोलाहलंविकचककदंबसंवादिमदसुरासौरभ भरितभुवनं कायवंतमिवाऽकालमेघकालमविरलमधुर्विंदुपिंगलपद्मजालकितां सरसीमिवाऽभ्यवगाढांदशांचतुर्थीमुत्मजंतंअनवरतमवतं सशंखैरामंद्रकर्णतालदुंदुभिध्वानिभिः पंचमीप्रवेशमंगलारंभमिव गायंतं आविरतचलनाचित्रत्रिपदीललितलास्यलयैर्दोलायमान दीर्घदेहाभोगतया मेदिनीविदलनभयेन भारमिवलंबयंतं ॥

चातकाःस्तोककाःनीलकंठामयूराःकेका मयूरुतानि मेघकालमिति मेघकालश्च चातककदंबनीलकंठकुलकदंबकसौरभादियुक्ताअविरलाघनाये मधुर्विंदवइव मधु विंदवोमाक्षिककणास्तद्वत्पिंगलानि पद्मजालिकानि संजातानि यस्यां पद्मकंविंदुजालंस्याद्बात्रकंकारिणामिति यथा पद्मस्वस्तिकसंस्थानोविंदुभिश्चकचैस्तथा स्वंकितांगस्तुषाराभः शाबःशक्तिकरःकरीत्युक्तं अन्ये मधुर्विंदवोमकरंदकणास्तैः पिंगलानीति व्याख्यपंमहत्सरःसरसीअभ्यवगाढामिति परिणतां दिशां कलावस्थांचतुर्थीमिति

दिग्भित्तितटेषुकायमिवकंडूयमानं आहवार्थो दस्तहस्ततया दिग्वारणानिवाऽह्वयमानं ब्रह्मस्तंभमिवस्थूलनिशितदंतेन करपत्रेण पाटयंतं अमांतंभुवनाभ्यंतरे बहिरिव निर्गंतुमीहमानंसर्वतःसरसकिसलयलतालासिभिः लशिकैश्चिरपरिचयोपचितैर्घनैरिव विक्षिप्तसशैवलबिसविसरशवलसलिलैः सरोभिरिवचाधोरणै राधीयमाननिदाघकालसमयसमुचितोपचारानंदं अपिचप्रतिगजदानपवनादानदूरोत्क्षिप्तेनाऽनेकसमरविजयगणना

चतुर्थीमवगाढायांलेखाविंदुभिराचित इत्युक्तं शंखैः शंखशब्दैरित्यर्थः कर्णेत्यादि कर्णौचदुंदुभिध्वनितौ ॥ कर्णौचकरिणः कार्यकारिणीसत्प्रशंसिनाविति पंचमी दशा त्रिपदी एकपदोत्क्षेपपादत्रयावस्थितिः ७० लयोलीला आहवः संग्रामः ब्रह्मस्तंभो ब्रह्मांडं करपत्रं ककचं स्थूलनिशितदंतंभवति तच्चभेदयति स्तंभं अमांतमवर्तमानंलशिकैः घासिकैः आधोरणैः गजारोहै वलयाकारा वालिः वलिवलयं अर्गलयंतंसनाटकं कुर्वाणकुमुदवनानीत्युत्प्रेक्षादंतयो वर्णप्राशस्त्यमाह पयःकुमुदकुंदाभाकेतकोकुमुदद्युती मृगांककिरणालोकौ कीर्तिकल्याणकारकावित्युक्तं ७१

गणनालेखाभिरिव वलिवलयराजिभिस्तनी यसीभि स्तरंगितोदरेणाऽतिस्थवीयसा ह स्तार्गलदंडेनार्गलयंतमिव सकलं सकुलशै लसमुद्रद्वीपकाननं ककुभां चक्रवालमेकं क रांतरार्पितेनोत्पलाशेन कदलीदंडनांऽतर्ग तशीकरसिच्यमानमूलं मुक्तपल्लवमिवापरं लीलावलंबिना मृणालजालकेन समररसो द्भरोमांचकंटकितमिव दंतकांडं वहंतं

रक्तांशुकेति उक्तंचरक्तोष्ठतालुरसनामितिस्वभावपिंगलेनेति उक्तंच शशिपूर्णसमाभासेकलविंकाक्षसन्निभे प्रसन्नमधुपिंगेचस्थि रेचामीलनेतथा अपरिस्राविणीचैवकुशाग्निनिभभास्वरे नत्रशौ स्तेसमेस्निग्धेदीर्घेचाविलपक्ष्मणीति चूतेत्यादिनाप्रशस्यत्वमाह यदाह उभयस्तुतिरप्येषविवर्णोहर्षवर्जितः यदिस्यादपगंधश्च तदासौमसतांमतइति ॥

विसर्पत्याचदंडकांडयुगलस्यकांत्या सरःक्री
डास्वादितानीवकुमुदवनानि वहुधावमंतंनि
जयशोराशिमिवदिशामपर्यंतं कुकरिकीट
पाटनदुर्ललितान्सिहानिवोपहसंतं कल्पद्रुम
दुगूलमुखपटामिवचात्मनः कल्पयंतंहस्तकां
डदंडोद्धरणलीलासुचलक्ष्यमाणेन रक्तांशुक
सुकुमारतलेन तालुनाकवलितानि रक्तपद्म
वनानीववर्षंतमभिनवकिसलयराशीनिवोद्गि
रंतं कमलकवलपीतंमधुरसमिव स्वभावपिंग
लेनवमन्तंचक्षुषाचूतचंपकलवलीलवंगकक्कोल
वंल्येलालतामिश्रितानि ससहकाराणि ॥

करटाभ्यांगंडाभ्यां अर्धेत्यादिनेक्षुकांडकस्थले खनीसादृश्यमा
ह लिखितैः कृतलेखैरप्यालिकुलेषु सत्सु वाचालितशब्दयोगो
येषामित्यनेनालिकुलस्य लिप्यक्षररूपतांध्वनाति लिप्यक्षरेषुच
सत्सुपाठ्यमानेषुवाचालता दानपट्टकलिखितैःकिंचाद्विलभ्य
ते अक्षरपाटिकैश्च तेषां हस्तस्थितिर्नक्रियते तानिचवाच्यंतेय
द्रा स्वहस्तेनाक्षरकरणंहस्तास्थातिः हिमशिलावातवज्रीभूतं हि

कर्पूरपूरपूरितानि पारिजातकवनानीवोपभु
क्तानि पुरः करटाभ्यां वहलमदामोदव्याजे
नविसृजंतमहर्निशंविघ्नमकृतहस्तास्थितिभि
रर्धखंडितपुंड्रेक्षुकांडकंडूयनलिखितैरलिकु
लवाचालितै र्दन्तपट्टकैर्विलभमानमिव सर्व
करिपतीनां अविरलोदविंदुस्यंदिना हिमाशि
लाशकलमयेन विभ्रमनक्षत्रमालागुणेन शि
शिरीक्रियमाणं सकलवारणेन्द्राधिपत्यपट्टवं
धवंधुरमिवोच्चैस्तरां शिरोदधानं मुहुर्मुहुःस्थ
गितापावृतदिङ्मुखाभ्यां कर्णतालतालवृंता
भ्यां वीजयंतमिव भर्तृभक्त्या

केचित्तु हिमानि हिमशकलानि चंद्रकांताइत्याहुः हिमस्यचत
दावर्णनानुचितत्वात् पर्वतेभ्योहिमानयनं सुलभमेवेति पूर्वो
क्तमेवश्रेष्ठं यतश्चंद्रकांतानांदिवास्रुतिर्नभवति इति नक्षत्रमाला
हस्त्याभरणभेदः उच्चैस्तरामिति उच्चंहि शिरः करिणः शस्यते
यदुक्तंसमंमहच्चपूर्णंचनातिस्तब्धोचमस्तकं नावाग्रंनातिपृथुलंवि
तानावग्रहंमृद्धिति ७२

दंतपर्यंकिकास्थितांराजलक्ष्मींआयतवंशक्र
मागतेनगजाधिपत्यचिन्हेन चामरेणेव चल
तावालधिनाविराजमानंस्वच्छशिशिरशीक
रच्छलेनदिग्विजयपीताःसरितएवपुनःपुनः
मुखेन मुंचंतं क्षणमवधानदाननिःस्पंदीकृ
तसकलावयवानामन्यद्विरदडिंडिमाकर्णना
गवलनानामंते दीर्घशीत्कारैः

दंतावेवतदवस्थानसमुचितत्वात्पर्यंकिकाच दंतमयः पर्यंकआ
स्तइतिश्लेषःआयतवंशोवक्रवंशः शरवंशोवालवंशश्चेति च
त्वारोवंशास्तेषु वालवंशआयत एवशास्त्रकृतामभिप्रतःतथाच
यावत्पूरितपाशश्चवंशश्चापलताकृतिः शुभोह्नियोगजेन्द्राणा
मायतःकुरुतेसुखमितितैरुक्तं आयता दंशात्तत्क्रमेणगोपुच्छवदा
यतइतिविग्रहःसमानार्होहिवालधेःशोकंकरोति यदुक्तं वक्रंस्थू
लंचहृस्वंचपुच्छंकचविवर्जितंसमानार्हंहिनागस्यभर्तुःशोककरं
स्मृतामितिवंशंपृष्ठनाभिकुलंचक्रमआनुपूर्वी पारंपर्यंच वालधिः
पुच्छं लज्जमानामिति यश्चलज्जते सभूमिलिखतिदर्पचोऽङ्गति
अंगुली कारकराग्रावयवः करथाखाच

परिभवदुःखमिवावेदयंत अलब्धयुद्धामिवा
स्मानमनुशोचयंतमारोहाधिरूढिपरिभवेनल
ज्जमानामिवांगुलीलिखितमहीतलं मदं मुंचंतं
अवज्ञागृहीतमुक्त कवलकुपितारोहारटनानु
रोधेनमदतंद्रीनिमीलितनेत्रत्रिभागंकथंकथ
मपिमंदमंदमनादरादाददानंकवलानवजग्ध
तमालपल्लवस्रुतश्यामलरसेन प्रभूततयामद
प्रवाहमिवमुखेनाप्युत्सृजंतं दलंतमिव दर्पेण
श्वसंतमिव शौर्येण मूर्च्छंतमिव मदेन त्रुट्यं
तमिव

तंद्री आलस्यं गाढनिद्रावा चलंतमित्यादि दर्पाधिकारणसमु
च्चितक्रियाप्रतिपादनसाभिप्रायंव्याख्येयं स्निग्धमितिउक्तंचनखाः
स्निग्धाः सिताः शस्ताइति परुषंनिष्ठुरं यश्चास्निग्धःप्रीतिमा
न्स कथंपरुषः प्रीतिशून्योभवतीतिविरोधः एवंगुणावैरतीर्णः

तारुण्येन द्रवंतमिव दानेन वल्गंतमिव बलेन माद्यंतमिव मानेनोद्यंतमिवोत्साहेन ताम्यंत मिवतेजसालिंपंतमिवलावण्येन सिंचंतमिव सौभाग्येन स्निग्धंनखेषु परुषंरोमविषये गुरुं मुखे सच्छिष्यंविनयेमृदुंशिरसिदृढंपारिचयेषु ह्रस्वंस्कंधबंधेदीर्घमायुषिदरिद्रमुदरेसततप्र वृत्तं दाने बलभद्रं मदलीलासु कुलकलत्र मायत्ततासु जिनंक्षमासुवाह्निवर्षं क्रोधमोक्षेषु

आचार्यश्चविनयति उक्तंच विनयेमुनिभिस्तुल्याःक्रुद्धानागाश्चरा क्षसाः निस्त्रिंशस्याधिकस्वाच्चशस्त्रंनागामहीपतेरिति ७३ स्कंधबं धेग्रीवामूलेदरिद्रः कृशोदुर्गतश्च दानंमदवारिवितरणंचबलभद्रो हलधरः मदोदानंसुराकृतश्च नागाःकरिणःसर्पाश्च कलहोरणो पिश्चविदितशत्रुसैन्यपातोवस्कंदः मकरंकूर्मवाहिनीसेनानदीच

गरुडं नागोद्धृतिषु नारदं कलहकुतूहलेषु शुष्काशनिपातमवस्कंदेषु मकरं वाहिनीक्षोभेषु आशीविषंदशनकर्मसु वरुणं हस्तपाशाकृष्टिषु यमवागुरामरातिसंवेष्टनेषु कालं परिणतिषु राहुंतीक्ष्णकरग्रहेषु लोहितांगं वक्रचारेषु अरातिचक्रं मंडलभ्रांतिविज्ञानेषु मनोरथसंपादकं चिंतामणिपर्वतकं विक्रमस्य

दशनकर्मदंतव्यापारः दशनरूपाच क्रियाहस्तएवपाशः प्रशस्तहस्तोहस्तपाशइतिवा हस्तेच पाशोवागुराजालं परिणतिषु दंतविदारणकर्मसु कालंयमं शुभाशुभादिकर्मविपाकेषुच कालमहरादिरूपंतीक्ष्णंकृत्वाकरेणहस्तेनग्रहणं रविश्चतीक्ष्णकरः लोहितांगोंगारकः वक्रंकुटिलं पश्चाच्चमंडलाकृत्या भ्रांतेर्भ्रमणस्यविज्ञानानिकौशलातिशयगतिः गोमूत्रिकामंडलेत्रिविधाहिगतिः तत्रालातचक्रमुल्मुकचक्रं भ्रमणंकरोति मनोरथसंपादकमितिशेषषष्ठीसमासः कर्मण्यणिणतिवा अपिकृतेस्वार्थेकः

दंतमुक्ताशैलस्तंभं निवासप्रासादमभिमान स्यघंटाचामरमंडनमनोहरमिच्छासंचरणवि मानं मनस्विताया: मदधारादुर्दिनांधकारग धोदकधारागृहंक्रोधस्यसकांचनप्रतिमंमहा निकेतनमहंकारस्यसगंडशैलप्रस्त्रवणंक्रीडा पर्वतमवलेपस्यसदंततोरणंवज्रमंदिरंदर्पस्य उन्नकुंभकूटाट्टालक विकटसंचारिगिरिदुर्ग राज्यस्यकृतानेकबाणविवरसहस्रंलोहप्राका रं पृथिव्या: शिलीमुखशतझांकारितं पारि जातपादपं भूनंदनस्य तथाच

दंतो मुक्ताशैलस्यश्वेतपाषाणस्यस्तंभाविवयस्य अन्यत्रदंतस्यमु क्ताशैलानांचस्तंभायत्रप्रातिमादंतकोशोदेवताकृतिश्च महानिकेत नेसाधुदेवगृहंगंडावेवशैलोतत्रप्रस्त्रवणंदाननिर्यास: सहतेनवर्त तेनिर्झरश्चमहतोमुक्तपाषाणानुगंडशैलान्प्रचक्षते संचारीजंगम: यदाहकौटल्य: हस्तिनोहि जंगमंदुर्गमिति कृतान्यनेकानि बाणैर्विवरसहस्राणियस्य तंप्राकारेषु बाणानुत्स्रष्टुं विवरसहस्रा णि क्रियंतेयइन्द्रकोशाइतिचाणिक्यादिषुप्रसिद्धा: भूनंदनोरा जादेवोद्यानंचनंदनं ॥

संगीतगृहं कर्णतालतांडवानामापानमंडपं मधुपमंडलानां अंतःपुरशृंगाराभरणानां मदनोत्सवं मदलीलालास्यानामक्षुण्णप्रदोषनक्षत्रमालामंडलानां अकालप्रावृट्कालं मदमहानदीपूरप्लवानां अलीकशरत्समयं सप्तच्छदवनपरिमलानामपूर्वहिमागमं शीकरनीहाराणां मिथ्याजलधरं गर्जिताडंबराणां दर्पशातमपश्यत् आसीच्चास्य मनसि नूनमस्य निर्माणे पर्वता आहिताः परमाणुतां कुतोन्यथा गौरवमिदं आश्चर्यमेतत् विंध्यस्य दंतौ आदिवराहस्य कर इति विस्मयमानमेवैतं दौवारिकोब्रवीत् पश्य मिथ्यैवालिखतां मनोरथशतैः निःशेषनष्टां श्रियं चिंतासाधनकल्पनाकुलधियां भूयो वनेविद्विषाम् ॥

कर्णताळानां तांडवानीव तांडवानि अन्यत्र लाभप्रधानानि तांडवानि ७४ मधुपा भ्रमरा विटाश्च शृंगारः सिंदूरादिदानं रसभेदश्च अक्षुण्णः परिपूर्णः अभ्रादिनानावृतः अपूर्वो दाम आहिताः प्रापिताः मिथ्यैवेति तस्या निःशेषनष्टत्वात् पुनरभावप्रसंगात् निःशेषेत्याद्यभिप्रायेणाह मनोरथशतैरिति ॥

आयातः कथमप्ययं स्मृतिपथं शून्यीभवत्ते
तस्मिं नागेन्द्रःसहतेनमानसगतानाशागजे
न्द्रानपि तदेहिपुनरप्येनंद्रक्ष्यसि पश्य ताव
द्देवमित्यभिधीयमानश्चतेनमदजलकज्जलका
लकपोलपट्टपतितांमत्तामिवमदपरिमलेनमु
कुलितांकथमपितस्माद्दृष्टिमाकृष्य तेनैवदौवा
रिकेनोपदिश्यमानवर्त्मा समतिक्रम्य भूपा
लकुलसहस्रसंकुलितानि त्रीणि कक्ष्यांतरा
णि चतुर्थे सत्यास्थानमंडपस्यपुरस्तादजिरे
स्थितं दूरादूर्ध्वस्थितेनप्रांशुनाकर्णिकारगौ
रेण

तस्यांव्यापाररहितत्वाच्छून्यमनस्कत्वादेवाह सहत इत्यादिमा
नसं मनःसरोभेदोऽपि आशादिशः अभिलाषोपि देवमितीत्या
दीचक्रवर्त्तिनंहर्षमद्राक्षीदितिसंबंधः मदजलेनपंकिलेकपोलप
ट्टेपतितांमत्तामिवेति मत्तश्च पतति मुकुलितदृष्टिश्च भवतिगाति
वैकल्यादन्यने कृष्यते ७७ भोजनंभोक्तव्यंभुक्ते सत्यास्थानंलो
कदर्शनंतदर्थंमंडपस्तस्यऊर्ध्वास्थितेत्यादिसाधारणं प्रांशुना उ
न्नतेन अन्यत्रप्रकृष्टा अंशवोयस्यतेन कर्णिकारमारग्वधपुष्पं

व्यायामव्यायतवपुषा शस्त्रिणा मौलेन शरीर परिचारकलोकेन पंक्तिस्थितेन कार्त्तस्वरस्तंभमंडलेनेव परिवृतं आसन्नोपविष्टविशिष्टेष्टलोकं हरिचन्दनरसप्रक्षालिततुषारशीकरशीतलतले दंतपांडुरपादे शशिमयइव मुक्ताशैलशिलापट्टशयने समुपविष्टं शयनीयपर्यंतविन्यस्ते समर्पितसकलविग्रहभारं भुजे दिङ्मुखविसर्पिणि देहप्रभावितानेवितत मणिमयूखे घर्मसमयसुभगे सरसीव मृदुमृणालजालजटिलजले सराजकं रममाणं तेजसः परमाणुभिरिव केवलैर्निर्मितमनिच्छन्तम्

व्यायामः श्रमः व्यायतं विभक्तावयवं विशेषेण दीर्घंच शस्त्रिणा सायुधेन स्तंभा अपि शस्त्रेणावध्यंते मौलभृतकश्रेणिमित्रामित्राटविकभेदेन षट्प्रकाराः सहाया भवंति अन्यत्र मूले बुध्नभवं मौलं बुध्नप्रतिष्ठमित्यर्थः पंक्तिस्थितेनेति साधारणं कार्त्तस्वरं सुवर्णं यस्योद्धृष्यमाणस्य सतः कुंकुमस्येव रागो जायते सौगंध्यंच तद्धरिचंदनं शशिमयइति वक्ष्यमाणाभिप्रायेण तुषारेत्यादिना शीतत्वममुष्य दर्शयति दंते तद्वच्च पांडुरे पादे रश्मयोपि पादाः मुक्तेत्यादिना शुक्लतयापि शशिमयइवेत्येतदेव पोषयति विग्रहः कायो रणश्च घर्मेत्यादि मणीनां स्वभावतएव शीतत्वात्तदीया मयूखा आपिल्हादयंति

बलादारोपयितुमिव सिंहासनं सर्वावयवेषु सर्वलक्षणैर्गृहीतंगृहीतब्रह्मचर्यमालिंगितंरा जलक्ष्म्याप्रतिपन्नासिधाराधारण व्रतम् विसं वादिनं राजर्षिं विषमराजमार्गविनिहितपद स्खलनभियेव सुलग्नं धर्मं सकलभूपालपरि त्यक्तेन भीतेनेव लब्धवाचासर्वात्मनासत्येन सेव्यमानं आसन्नवारविलासिनीप्रतियात नाभिश्चरणनखपातिनीभिर्दिग्भिरिव दश भिः प्रणम्यमानम्

योहिबलवानारोप्यते ससर्वांगेषुगृह्यते गृहीतब्रह्मचर्यमितिस्व दारसंतुष्टःऋतुकालगामी गृहस्थोचितव्यापारोब्रह्मचार्यैवेति श्रुतेः यात्वेवमनुश्रूयते यावन्मया न सकलाजिताभूमिस्तावन्मे ब्रह्मचर्यमितिश्रीहर्षःप्रतिज्ञातवान् द्वादशाभिश्चवर्षैर्जित्वातांम हिषीमब्रवीत् प्रतिज्ञामेनिर्व्यूढेति ततोरोषादहमपि द्वादशवर्षं ब्रह्मचर्यंचरामीतिसाप्रतिज्ञामकरोत् इतिब्रह्मचर्येणाज्ञाकालो तिवाहितः यश्चगृहीतब्रह्मचर्यः सकथंयोषितालिंग्यतइतिविरो धः असिधाराखड्गधाराव्रतविशेषश्च यत्रस्त्रीपुंसौ अकपटौब्रह्म चर्येणतिष्ठतः यश्चप्रतिपन्नेषुविश्वासितेषुखड्गधारांपातयति स कस्मान्नविसंवदते नान्यथाभवति कथंचराजर्षिरसावुच्यतेइति विरोधः

दीर्घैर्दिगंतपातिभिर्द्दष्टिपातैर्लोकपालानां कृताकृतमिवप्रत्यवेक्षमाणं मणिपादपीठपृष्ठप्रतिष्ठितकरेणोपरिगमनाभ्यनुज्ञामृग्यमाणमिवदिवसकरेण भूषणप्रभासमुत्सारणवद्धपर्यंतमंडलेन प्रदक्षिणीक्रियमाणमिव दिवसेनाप्रणमद्भिर्गिरिभिरपि दूयमानं शौर्योष्मणाफेनायमानमिवचंदनधवलं लावण्यजलधिमुद्वहंतंएकराज्यौर्जितेन निजप्रतिविंबान्यपि नृपतिचक्रचूडामणि धृतान्यऽसहमानमिव चतुःसमुद्र

यश्चराज र्षिरुत्तममुनिःगृहीतासिधारोब्रह्मचारीच सकयाचिदालिंग्यैतविषमोशक्यानुष्ठानः ततोन्नतरूपोमार्गोव्यवहारः पंथाश्चविषमेपथिचस्खलति येनकचित्सुलग्नेनभूयते लब्धवाचेति ॥ सत्यस्यवागेवाश्रयणीयश्च सर्वस्त्यक्तः सन्भीतःसंस्त्वांत्यजामीति वाचं लब्ध्वान्यंसेवते वारविलासिनी शरीरोपचारचतुरामुख्यललना प्रतिविंबदशाभिरितिनखानांदिशांचदशसंख्याकत्वात् ७६ मणीपादेतिमणिसंबंधप्रतिष्ठानमेव पोषयति करोहस्तोपिफेनायमानमिति जलंसंतापेनसफेनंभवति असहमानमिवेति कथंसामान्येनसमान इति सकलमित्यादि सकलपदेन चतुःशब्देनच शौरस्य विशेषमाह यतोलवणत्वस्य

लावण्यमादायोत्थितया श्रिया समुपाश्लिष्टं आभरणप्रभाजालजायमानानीन्द्रधनुः सह स्त्राणीन्द्रप्राभृतग्राहितानि विलसमानमिव राज्ञांसंभाषणेपिपरित्यक्तमपि मधुवर्षंतम् काव्यकथासु पीतमपि अमृतमुद्वमंतं विस्रंभ भाषितेष्वनाकृष्टमपि हृदयं दर्शयंतंप्रसादेषु निश्चलामपि श्रियं स्थानेस्थापयंतं वीरगो ष्ठीषु पुलकितनकपोलस्थलेनाऽनुरागसंदेश मिवोपांशुरणश्रियः शृण्वंतं अतिक्रांतसुभ टकलहालापेषु स्नेहदृष्टिमिव दृष्टिमिष्टं

तत्राद्यापि शिष्यमाणत्वात् अलं लावण्यमादाय एकस्मा समुद्रादुत्थाय लक्ष्म्याः शौरिः समुपश्लिष्टः लावण्यं लवण ता सौन्दर्यंच प्राभृतं ढौकनिकं मधु मद्यं अमृतं च विस्र म्भआश्वासः उपांशु अप्रकटं ७७ अतिक्रांतेकलहेरणेश स्त्राणांस्नेहीदीयते रुधिरादिसलिलनिवारणाय स्वच्छंनिर्मलं

कृपाणपातयंतं परिहासास्मितेषुगुरुप्रतापभी
तस्यराजकस्य स्वच्छमाशयमिव दशनांशु
भिःकथयंतं सकललोकहृदयास्थितमपिन्याये
तिष्ठंतं अगोचरेगुणानांअभूमौसौभाग्यानाम
विषये वरप्रदानानामशक्ये आशिषां अमार्गे
मनोरथानां अतिदूरेदैवस्यादिश्यमानानाम
साध्ये धर्मस्यादृष्टपूर्वे लक्ष्म्यामहत्त्वेस्थितं
अरुणपादपल्लवेन सुगतमंथरोरुणा

सुप्रसादमाशयंभावंप्रकृष्टतापभीतस्यचस्वच्छोनिर्मलआशयोज
लाधारोहृदयंच अत्रप्रतापेत्यादिप्रकरणसाहचर्यात्स्वच्छतान्यथा
नुपपत्त्याच जलशब्दंविना जलाशयएव प्रतीयते न्यायेतिष्ठंतं
न्यायममुंचंतमित्यर्थः यः सर्वेषांहृदयास्थितः सएकस्मिन्नेवाति
ष्ठतीतिविरोधः अरुणोलोहितः अनूरुश्च शोभनंगमनंययोस्तौ
मन्थरावूरूयस्य बुद्धश्चसुगतः ॥

वज्रायुधनिष्ठुरप्रकोष्ठपृष्ठेनवृषस्कंधेनभास्व द्विंबाधरेण प्रसन्नावलोकितेन मुखचंद्रेणकृ ष्णकेशेनवपुषासर्वदेवतावतारमिवैकत्रदर्श यंतं अपिचमांसलमयूखमालामलिनितमही तलेमहातिमहार्हमाणिक्यमालामंडितमेखले महानीलमयेपादपीठेकलिकालशिरसीवस लीलंविन्यस्तवामचरणं आक्रांतकालियफ णाचक्रवालंवालमिवपुंडरीकंक्षौमपांडुरेणच रणनखदीधितिप्रतानेनप्रसरतामहींमहादे वीपट्टबंधेनवमहिमानमारोपयंतं अप्रणत लोकपालकोपेनेवातिलोहितौ सकलनृप तिमौलिमालास्वतिपीतं पद्मरागरत्नातप मिव वमंतौ

वज्राख्यमायुधं तद्वन्निष्ठुरंकठोरंप्रकोष्ठस्यपृष्ठंयस्यतेनइन्द्रश्चास्य वज्रमायुधंप्रकोष्ठमंतरंविद्यादरत्निमणिबंधयोः वृषोदांतोधर्मश्च भास्वत् भास्वरं रविश्च भास्वान् बिंबफलभेदोमंडलंच अवलो कितंवीक्षितंबुद्धभेदश्च अवलोकितः कृष्णः कालः हरिश्च कृष्णःकलिकालोतिकलिकालस्यमलिनत्वादेवमुत्प्रेक्षा वामपा देनपराभवनीयत्वमेवपोष्यते कालियोनागभेदः पुंडरीकाक्षमि तिराज्ञोविशेषणम् ७८





सर्वतेजस्विमंडलास्तमयसंध्याभिवधारयंतौ अशेषराजकुसुमशेखरमधु रसस्रोतांसीव स्रवंतौ समस्तसामंतसीमंतोत्तंसस्रक्सौरभ भ्रांतैर्भ्रमरमंडलैरमित्रोत्तमांगैरिवमुहूर्त्तमप्य विरहितौसंवाहनतत्परायाः श्रियोविकचरत्न पंकजवनवासभवनानीव कल्पयंतौजलज शंखमीनमकरसनाथतलतया कथितचतुर भोधिभोगचिह्नाविवचरणौदधानंदिङ्नागदं तमुसलाभ्यामिव विकटमुखप्रतिबंधबंधुरा भ्यामुद्वेललावण्यपयोधिप्रवाहाभ्यामिव फे नाहितशोभाभ्यांकल्पचंदनद्रुमाभ्यामिवभो गिमंडलशिरोरत्नरश्मिरज्यमानमूलाभ्यांहृ दयारोपितभूभारधारणमाणिक्यस्तंभाभ्या मूरुदंडाभ्यांराजमानं

तेजस्विनोवीराआदित्याश्च जलजेत्यादीनिमहाराजविशेषणा निलक्षणानि एवमादिच संभवतिमकरमुखंजानुसंधिःमकरमुख चिह्नितांतकपोलश्च उद्वेलतया लावण्यस्य समुच्छलद्रूपत्व माह फेनोरससंतानोदिंडीरश्च भोगिनोनृपाः सर्पाश्च ॥

अमृतफेनपिंडपांडुना मेखलामणिमयूखख चितेननितंबबिंबव्यासंगिनाविमलपयोधौतेन नेत्रसूत्रनिवेशशोभिना अधरवाससा वासुकिनिर्मोकेणेवमंदरं द्योतमानं अघनेनसतारागणेनोपरिकृतेन द्वितीयांबरेण भुवनाभोगमिवभासमानं इभपतिदशनमुसलसहस्रोल्लेखकठिनमसृणेनाऽपर्याप्तांबरप्राथिम्ना विविधवाहिनीसंक्षोभकलकलसंमर्दसहिष्णुना कैलासमिव महता स्फटिकतटेनोरुणोरः कपाटेनराजमानं श्रीसरस्वत्योरुरोवदनोपभोग



फेनवत्तैश्च पांडुमेखलारशना पर्वतमध्यभूमिश्च पयोजलं क्षीरं च नेत्रसूत्रं पट्टसूत्रं मंथनरज्जुश्च ७१ अघनेनछातेन अनभ्रेण च ताराः सूत्रबिंदवः नक्षत्राणि च अंबरं वासोनभश्च इभपतीत्यादि साधारणं अपर्याप्तमंबरं वासो यस्य तादृक्प्रथिमा यस्य अंबरं च खं वाहिनी सेना नदी च अन्यपर्वतसाधारण्येऽपि छायावत्त्वादुन्नतत्वाच्च कैलासमिवेत्युक्तं हारेत्यादिना उरुत्वं काठिन्यमाह परिवलिता परिवेष्टितेति पाठे व्याप्तेत्यर्थः अजो हरिः ॥

विभागसूत्रेणेव पातितेन शेषेणेव तद्भुजस्तं
भविन्यस्तसमस्तभूभारलब्ध विश्रांतिसु
खप्रसुप्तेन हारदंडेन परिवेष्टितकंधरं
जीवितावधिगृहीतसर्वस्वमहादानदीक्षाचीरे
णेव हारमुक्ताफलानां किरणनिकरेण प्रा
वृतवक्षःस्थलमजजिगीषया वालैर्भुजैरिवा
परैः प्ररोहद्भिः वाहूपधानशायिन्याः श्रियः
कर्णोत्पलमधुरसधारासंतानैरिव गलद्भिः
भुजजन्मनः प्रतापस्य निर्गमनमार्गैरिवा
विभवद्भिररुणैः केयूररत्नकिरणदंडैरुभय
तःप्रसारितमणिमयपक्षवितानमिव मा
णिक्यमहीधरं सकललोकालोकमार्गार्गलेन
चतुरुदधिपरिक्षेपखातशिलाप्राकारेण सर्व
राजहंसवंधवज्रपंजरेण भुवनलक्ष्मीप्रवेश

भुजेत्यादिना सेनादिकृतं नयादिकृतंच प्रतापं व्यवच्छिनत्ति माणिक्यमुत्कृष्टोमणिः चतुर्णामुदधीनांसंबंधी परिक्षेपएव खातंपरिखायस्यसतादृग्दार्ढ्याच्छिलाप्राकारइव तेनपरिखांकृत्वाऽंतरेप्राकारोदीयते इतिस्थितिः राजहंसाहंसभेदाराजोत्तमाहंसभेदाश्च ८० आयतिःदैर्घ्य प्रतापश्च

मंगलमहामणितोरणेनातिदीर्घदोर्दंडयुगले नदिशांदिक्पालानांच युगपदायतिमपहरं तंसोदर्यलक्ष्मीचुंबनलोभेनकौस्तुभमणेरिव मुखावयवतांगतस्याधरस्य गलतारागेणपारिजातपल्लवरसेनेवासिंचंतं दिङ्मुखान्यंतरांतरासुहृत्परिहासस्मितैः प्रकीर्यमाणैः विमलदशनशिखाप्रतानैः प्रकृतिमूढायाराजश्रियाःप्रज्ञालोकमिव दर्शयंतं मुखजनितेन्दुसंदेहागतानि कुमुदिनीवनानीवप्रेषयंतंस्फुटधवलदशनपंक्तिकृतकुमुदवनशंकाप्रविष्टां शरज्ज्योत्स्नामिवविसर्जयंतं मदिरामृतपारिजातगंधगर्भेण भरितसकलककुभा मुखामोदेनामृतमथनदिवसमिवसृजंतं

कार्णिकाकोशः चक्रंच आपीयमानं श्वाससौरभं यस्य तं अधोमुखेनेत्यनेनसुलक्ष्यत्वंसौरभस्य तथापीयमानानुमितिंदर्शयति८१ अथएवतंत्रीसंतानः सएव वलयाकारत्वाद्वलयंविद्यते

विकचमुखकमलकर्णिकाकोशेनाऽनवरतमापीयमानश्वाससौरभमिवाधोमुखेन नासावंशेनचक्षुषःक्षीरस्निग्धस्यधवलिम्नादिङ्मुखान्यपूर्ववदनचंद्रोदयोद्वेलक्षीरोदोत्प्लावितानीव कुर्वाणं विमलकपोलफलकप्रतिबिंबितां चामरग्राहिणीं विग्रहिणीमिव मुखनिवासिनींसरस्वतींदधानं अरुणेन चूडामणिशोचिषा सरस्वतीर्ष्याकुपितलक्ष्मीप्रसाधनलग्नेन चरणालक्तकेनेव लोहितायितललाटतटं आपटलांशुतंत्रीसंतानवलयिनींकुंडलमणिकुटिलकोटिवालवीणामनवरतचलितचरणानांवादयता मुपवीणायतामिव सुरव्याकरणविवेकविशारदं श्रवणावतंसमधुकरकुलानां कलक्वणितमाकर्णयंतम्

यस्यास्तांकुंडलमणिकुटिलकोटिमेव वालवीणां सप्ततंत्रीकां विपंचींवादयतां अनवरतेत्यादिना व्यापारसादृश्येनोक्तंवदतामिति वीणयाउपगायतां उपवीणयतामिति गानस्यप्राधान्यं प्रतिपादयति सुरव्याकरणं विशालादिकमित्यादिनागानं दर्शयति

उत्फुल्लमालतीमयेन राजलक्ष्म्याः कचग्रहली लालग्नेन नखज्योत्स्नावलयेनेव मुखशशिपरिवेशमंडलेन मुंडमालागुणेन परिकलितकेशांतशिखंडाभरणभुवा मुक्ताफलालोकेन मरकतमणिकिरणकलापेन चान्योन्यसंवलनवृजिनेन प्रयागप्रवाहवेणिकावारिणेवागत्य स्वयमभिषिच्यमानं श्रमजलविलीनवहलकृष्णागुरुपंकतिलककलंककल्पितेन कालिम्ना प्रार्थनाचाटुचतुरचरणपतनशतश्यामिकाकिणेनेवनीलायमाणललाटलेखाभिः क्षुभितमानसोद्भूतैरुत्कलिकाकलापैरिव हारैरुल्लसद्भिरवष्टभ्यमानाभिर्विलासवल्गनचटुलैर्भूलताकंपैरीर्ष्यया श्रियमिव तर्जयंतीभिः आयामिभिःश्वसितैरविरलपरिमलैर्मलयमारुतमयैः पाशैरिवाकर्षयंतीभिः

परिवेशः परिधिःवृजिनेनशकलेनकलुषेण वाप्रयागोगंगायमुनासंगमः तत्प्रवाहस्य वेणिकारूपेणवारिणेवश्रमजलेत्यादौवारविलासिनीभिः सर्वतोविलुप्यमानसौभाग्यमिवेति संबंधः प्रार्थनाचाटुवित्यादौ प्रार्थनादीनि सर्वाणि श्रीहर्षविषयाणिज्ञेयानि मानसंसरश्चेतश्च उत्कलिकारुहरुहिकाःवीचयश्च ८२ अविरलैरित्यादिना धारणं आकर्षणं वशीकरणंसमीपप्रापणंच

विकटवकुलावलीवराटकवेष्टितमुखैःवृहद्भिः स्तनकलशैः स्वदारसंतोषरसमिवाशेषमुद्ध रंतीभिःकुचोत्कंपिकाविकारप्रेंखितानां हार तरलमणीनांराइमभिराकृष्यहृदयामिव हठा त्प्रवेशयंतीभिःप्रभामुचामाभरणमणीनांमयू खैः प्रसारितैः वहुभिरिव वाहुभिरालिंगंती भिर्जृंभानुवंधवंधुरवदनारविंदावरणीकृतै रु त्तानैःकरकिसलयैः सरभसप्रधावितानिमा नसानीव निरुंधयंतीभिः मदनांधमधुकरकु लकीर्यमाणकर्णकुसुमरजःकणकूणितकोणा निकुसुमशरशरणिकाप्रहारमूर्च्छामुकुलिता नीवलोचनानिचतुरं संचारयंतीभिः

विकटेत्यादिनाउद्दीपनभावमेव पोषयतिवराटको रज्जुःवृहद्भिरि तिवृहत्वेनहृद्यत्वमेषामाह वृहत्वादेवचवक्ष्यति अशेषमितिस्त नकलशैरितिस्तनैःकिलरज्जुवेष्टितमुखैःरसोजलमुद्ध्रियते रसो भिलाषोजलंचवंधुरंहृद्यं कूणितः संकोचितःमदनादिशब्देविद्य मानेपिमदनांधेत्याभिप्रायेणकुसुमशरग्रहणं अत्रपक्षेकर्णपदंत्यज्यते अनिमेषदर्शनसुखरसराशिमिवश्रीहर्षप्रतिबिंबितमितिअथचर सोजलादिः विमलेमणिभाजनादावंतर्वर्त्यपिप्रतिबिंबितोलक्ष्यते

अन्योन्यमत्सरादाविर्भवद्भंगुरभ्रुकुटिविभ्रम
क्षिप्तैः कटाक्षैः कर्णेन्दीवराणीव ताडयंती
भिरनिमेषदर्शनमुखरसरसराशिमंथरितप
क्ष्मणाचक्षुषापीतमिवकोमलकपोलपालीप्र
तिबिंबितंवहंतीभिरभिलाषलीलानिर्निमित्त
स्मितैश्चंद्रोदयानिवमदनसाहायकायसंपाद
यंतीभिः अंगभंगवलनान्योन्यघटितोत्तानक
रवेणिकाभिः स्फुटनमुखरांगुलीकांडकुंडली
क्रियमाणनखदीधितिनिवहानिभेनाकिंचित्क
रकामकार्मुकानीव रुषाभंजतीभिर्वारविला
सिनीभिर्विलुप्यमानसौभाग्यमिव सर्वतःस्प
र्शस्विन्नवेपमानकरविसलयगलितचरणारविं
दांचरणग्राहिणींविहस्यकोणेनलीलालसांशि
रसिताडयंतं अनवरतकरकलितकोणतया
चात्मनः प्रियांवीणामिवाश्रियमापिशिक्षयंतं

करवेणिकापरस्परानुबंधस्थितकरद्वयांगुलि विन्यासः ८३
विलुप्यमानसौभाग्यादिनाताः सुभगाइत्यर्थः कोणोवीणा
दिवादनभांडं प्रियामिति वीणायाः श्रियाश्च विशेषणं

निः स्नेहइति धनैः अनाश्रयणीय इतिदोषैः निग्रहरुचिरितीन्द्रियैः दुरुपसर्पइति ॥ कलिनानीरसइतिव्यसनैः भीरुरित्ययशसा दुर्ग्रहाचित्तवृत्तिरिति चित्तभुवा स्त्रापरइतिं सरस्वत्याशंठइति परकलत्रैः काष्ठामुनिरिति

निःस्नेहइत्यादावेतैरेकमप्यनेकधागृह्यमाणमितिसंबंधः शंठः प्रजननाक्षमः काष्ठापराधारातत्प्रधानोमुनिः काष्ठामुनिः अतिशयवांस्तपस्वीनेथः परवशः शंतनुर्नामराजाभीष्मस्यपितावाहिन्यागंगायाःपतिः अयंतुतस्मादपिमहतीनांवाहिनीनांसेनानांपतिः शंतनुरितिपंचमीविभक्तइतिपंचमी भीष्मोजितकाशी जितेन्द्रियःयतस्त्वयित्वत्पुत्रवासत्यस्मद्दौहित्रस्यकुतोराज्यमिति यदाहिदाशाधिपतिनास्वसुतामत्स्योदरोद्भता मात्स्यावतीनामास्मै पित्रर्थमर्थ्यमाना तदा एतेन प्रतिज्ञातं नाहंराज्यंविवाहंवाकरिष्यामीतिअतएवब्रह्मचार्येवाभूत् राजाचततोपिजितकाशितमःजितकाशीवा जितेनजयेनकाशतेशोभतेयःतथाहिभीष्मेणरामोजितः सर्वराजमहितं चकाशिराजंचाजित्वाभ्रात्रर्थंमंबादिकन्यात्रयमनैषीत् राजातु ततोपिजितकाशितमःद्रोणश्चापाचार्यः सचापेधनुषिलालसः

यतिभिः धूर्त्तइतिवेश्याभिः नेयइतिसुहृद्भिःक मेकरइतिविप्रैः सुसहायइतिशत्रुयोधैःएकम प्यनेकधागृह्यमाणं शंतनोर्महावाहिनीपतिं भीष्माज्जितकाशिनं द्रोणाच्चापलालसंगुरुपु त्रादमोघमार्गणंकर्णान्मित्रप्रियं युधिष्ठिराद्ब हुक्षमंभीमादनेकनागायुतबलंधनंजयान्महा भारतरणयोग्यं कारणमिव कृतयुगस्य बीज मिव विबुधसर्गस्य उत्पत्तिद्वीपमिव दर्पस्य एकागारमिव करुणायाः प्रातिवेशिकमिव पु रुषोत्तमस्य खनिपर्वतमिव पराक्रमस्य सर्व विद्यासंगीतकगृहमिव सरस्वत्याः द्वितीया

चपलंनकरोतीत्यर्थःयद्वाचःसमुच्चये अपगतालालसायस्यसोप लालसःनिरभिलाषइत्यर्थःगुरुपुत्रोश्वत्थामा तस्यसफलशरता तथाशस्त्रोपसंहारोक्षमयाचितोपि कस्यचिदेकस्य मारणमंतरेण नतदुपसंजहारततउत्तरायाउदरस्थे परीक्षिति पातितेतस्मिंस्त दुपसंहृतवान्अन्यत्रामोघामार्गणा याचकायस्येति मित्रःसूर्यःसु हृच्चामित्रंक्षमाक्षांतिःभूश्च अनेकानिबहूनि अनन्यरूढशानिचएक शब्दस्यचसाधारणार्थंतृच् बलंसामर्थ्यंसैन्यंचधनंजयोर्जुनः महाभारतानांकुरूणांयोरणःसंग्रामः अन्यत्रमहतोभारस्य कार्य धुरायास्तरणंनिर्वाहणम् ८४

मृतमंथनदिवसमिवलक्ष्मीसमुत्थानस्यवल
दर्शनमिववैदग्ध्यस्यएकस्थानमिवस्थितीनां
सर्वस्वकथनमिव कांतेः अपवर्गमिवरूपपर
माणुसर्गस्य सकलदुश्चरितप्रायश्चित्तमिव
राज्यस्यसर्वबलसंदोहावस्कंदमिवकंदर्पस्य
उपायमिव पुरंदरदर्शनस्य आवर्त्तनमिव ध
र्मस्य कन्यांतःपुरमिव कलानां परमप्राणमि
व सौभाग्यस्य राजसर्गसमाप्त्यवभृथस्नान
दिवसमिव सर्वप्रजापतीनां गंभीरंचप्रसन्नं
चत्रासजननं चरमणीयंच कौतुकजननंचपु
ण्यंचचक्रवर्त्तिनंहर्षमद्राक्षीत् दृष्ट्वा चानुगृ
हीतइवनिगृहीतइवसाभिलाषइव

प्रातिवेशिकं प्रतिविंबं स्वनिराकरः अपवर्गः समाप्तिः संदोहः समूहः अवभृथोयज्ञांतः गंभीरंप्रसन्नंचेति परस्परापेक्षंबोद्धव्यं तथाचसतिगंभीरत्वेप्रसन्नत्वंऋजुत्वंचेन्नस्यात्ततोजिह्मप्रकृतित्वंप्र सज्येत एवंत्रासेत्यादौबोद्धव्यं तथाचकालिदासः भीमकां तैर्नृपगुणैः सबभूवोपजीविनां अधृष्यश्चाधिगम्यश्चयादोरत्नै रिवार्णवः इतिदिलीपंप्रतिवर्णितवान् कौतुकजननमपुण्यत्वात् अपि संभाव्यते अतआहपुण्यमिति गंभीरंचप्रसन्नंचेत्यादौसर्व त्रविरोधउद्भाव्यः गंभीरंसतमिस्त्रंप्रसन्नंनिर्मलंनभवतीतिअनुगृ हीतइवेत्यादि एवंविधमहीपतिप्रसादवशात् निगृहीतइवेति संकोचवशात् साभिलाष इवेति तस्यदर्शनीयत्वात्

तृप्तइवरोमांचमुचामुखेन मुंचन्नानंदवाष्पवारिबिंदून्दूरादेवविस्मयस्मेरःसमचिंतयत्असो यंसुजन्मासुगृहीतनामातेजसांराशिःचतुरुदधिकेदारकुटुंबीभोक्ता ब्रह्मस्तंभफलस्यसकलादिराजचरितजयज्येष्ठमल्लोदेवः परमेश्वरो हर्षः एतेनचखलुराजन्वतीपृथ्वीनाऽस्यहरेरिववृषविरोधीनि बालचारितानिनच पशुपतेरिव दक्षोद्वेगकारीण्यैश्वर्यचरितानि नचशतक्रतोरिवगोत्रविनाशपिशुनाः प्रवादाः नयमस्येवातिवल्लभानि दंडग्रहणानि नवरुणस्येव निस्त्रिंशग्राहसहस्त्ररक्षितारत्नालयाः

तृप्तइवेति तथैव तस्यकृतार्थत्वात् विरोधोह्यत्रसुबोधः केदारंक्षेत्रं ब्रह्मस्तंभं जगत् फलं रत्नादियच्चस्तंभस्यफलंधान्यादितद्भोक्ताकर्षकोभवति ८५ राजन्वती प्रशस्तराजयुता वृषोधर्मः अरिष्टासुरोदांतरूपश्च बालेतिबालाहिविवेकहीनत्वाद्धर्मविरुद्धमाचरंति अस्यतुतस्यामपिदशायांधर्मविरोधाभावः दक्षः कुशलःप्रजापतिभेदश्च महेश्वरपक्षे ऐश्वर्यशब्दोमुख्यवृत्तिः इतरत्र गौणः गोत्रंकुलंकुलपर्वतागोत्राः अतिवल्लभानीति अतिशब्देनयुक्तदंडत्वमाह दंडः करोयमायुधंचनिस्त्रिंशग्राहाः खड्गहस्ताःतत्रजलचरभेदाश्च रत्नालयाभांडागाराणि समुद्राश्च

न धनदस्येव निष्फलाः सन्निधिलाभाःनाजि नस्येवार्थवादशून्यानि दर्शनानि नचंद्रमस इव वहुलदोषोपहताः श्रियः चित्रमिदमत्य मरंराजत्वंअपिचास्य त्यागस्यार्थिनः प्रज्ञा याः शास्त्राणि कवित्वस्यवाचः सत्त्वस्यसाह सस्थानानि उत्साहस्यव्यापाराःकीर्त्तेर्दिङ्मु खानिअनुरागस्य लोकहृदयानिगुणगणस्य संख्या कौशलस्य कलाः नपर्याप्तोविषयःअ स्मिंश्चराजनि यतीनांयोगपट्टकाः पुस्तकर्म णां पार्थिवविग्रहाः षट्पदानां दानग्रहणक लहाः वृत्तानां पादच्छेदाः

निष्फला ऐश्वर्यादिफलप्राप्तिशून्याःदानादिविना कृताश्च सन्नि धिः सन्निधानं एतस्यदर्शनं सर्वस्यफलदायिभवतीत्यर्थः अन्य त्रसन्निधयः शोभनानि निधनानि अस्यदर्शनानि जिनस्येव ना र्थवादशून्यानि अर्थोधनंतस्यवादः अनेनेदंलब्धमिति तेनशून्या नि सर्वंतद्दर्शिनोर्थेनयुज्यंते जिनस्य पुनरर्थवादशून्यानि महा यानयोगाचारमाध्यमिकदर्शनानि वहुलाःप्रभूतादोषारागाद्याः वहुलदोषाश्चकृष्णपक्षरात्रयःश्रियःसमृद्धयः शोभाश्च पर्याप्तः परिपूर्णः

अष्टापदानां चतुरंगकल्पनाः पन्नगानांद्विज
गुरुद्वेषाःवाक्यविदामधिकरणविचार इति
समुपसृत्य चोपवीती स्वस्तिशब्दमकरोत्
अथोत्तरेणनातिदूरेराजधिष्ण्यस्य गजपरि
चारकोमधुरमपरवक्त्रमुच्चैरगायत् करिकलभ
विमुंचलोलतां चरविनयव्रतमानताननःमृग
पतिनखकोटिभंगुरो गुरुरुपरिक्षमतेनतेंकुशः
राजातुतच्छ्रुत्वादृष्ट्वाच तंगिरिगुहागत

योगपट्टकाःयतीनामुपकरणं पर्यंकवंधनार्थंतेयतीनांचतुर्थाश्रमिणामेव न पुनर्योगेनयुक्ताः पट्टकाः कूटप्रधानानिलेख्यपत्राणि केषांचित् एवमन्यत्रापिपुस्तकर्मलेप्यं पार्थिवविग्रहामृण्मयशरीराणिराजाभिः सहवैराणिचदानग्रहंमदजलंदानंऋणव्यवहार इच वृत्तानांगुरुलघुनियमात्मकानां समाश्च समविषमानांपादच्छेदा भागविरामाश्चरणकर्त्तनानिच अष्टापदानांचतुरंगफलकानां चत्वार्यंगानि सेनाया हस्त्यश्वरथपत्तयः तेषांकल्पना रचना चतुर्णांमंगानां पाणिपादस्यच छेदःद्विजगुरुर्गरुडोपि वाक्यविदां मीमांसकानां अधिकरणविश्रांतिस्थानानि

सिंहबृंहितगंभीरेणस्वरेणपूरयन्निवनभोभाग मपृच्छत् एषसवाणइति यथा ज्ञापयतिदेवः सोयमितिविज्ञापितोदौवारिकेणनतावदेनम कृतप्रसादः पश्यामिइतितिर्यङ्नीलधवलांशु कशारां तिरस्कारिणीमिव भ्रमयन्नपांगनीय मानतरलतारकस्यायामिनीं चक्षुषःप्रभांपरि वृत्य प्रेष्ठस्यपृष्ठतो निषण्णस्य मालवराजसू नोरकथयत् ॥

राज्ञां च धर्मनिर्णयस्थानानि अधिकबलोवारणः संग्रा मइतिकेचित् उपवीतीदक्षिणावीतीकरः उक्तंच उद्धृतेदक्षिणे पाणावुपवीत्युच्यतेद्विजइति गजपरिचारक इति अन्यगजप रिचारकस्यस्वजातिसमुचितंवस्तुराज्ञः प्रकृतस्मारकंजातं ८६ तत्रकरिणांस्वभावतएव रागित्वादस्याऽपिरागवत्त्वाकुंजगतास्मृ तिः संजतेतिभंगुरोवक्रः मृगपतिनखकोटिवद्वक्रइत्ति स्पष्टा व्याख्यागुरुःभारः शासिताचउपरिपृष्ठदेशप्रभुभावेचअंकुशइवां कुशइत्यपि अतआह तच्छ्रुत्वेति बृंहितंगार्जितं अंशवएवांशु काः अंशुकंच वस्त्रं तिरस्कारिणीजवनिका प्रेष्ठस्यातिप्रियस्य ॥

महानयंभुजंगइति तूष्णींभावेनतुञ्चगमितन
रेन्द्रवचसितस्मिन्मूकेचराजलोकेमुहूर्त्तमिव
तूष्णींस्थित्वाबाणोव्यज्ञापयत् देवाविज्ञातत
त्त्वइवाश्रद्दधानइवनेयइवाविदितलोकवृत्तांत
इवच कस्मादेवमाज्ञापयासिस्वैरिणोविचित्रा
श्चलोकस्य स्वभावाःप्रवादाश्च महद्भिस्तुय
थार्थदर्शिभिर्भवितव्यं नार्हसिमामन्यथा सं
भावयितुं अविशिष्टमिव ब्राह्मणोस्मिजातः
सोमपायिनांवंशे वात्स्यायनानां यथाकाल
मुपनयनादयः कृताः संस्काराः सम्यक्प
ठितः सांगोवेदः श्रुतानि यथाशक्ति शास्त्रा
णि दारपरिग्रहादभ्यागारिकोस्मि

नेयः परवशः स्वैरिणः स्वतंत्राः सोमपायिनां सोमपानां ८७
शिक्षाकल्पोव्याकरणंज्योतिषंनिरुक्तंछंदोविधिरितिषडंगानिवे
दस्य अभ्यागारिकोगृहस्थः सम्यग्वृत्तिस्थितोवा कामेभुजंग
तेतिकामभुजंगता शृंगारित्वं कामे मदने भुजंगताज्ञेया न माह
शेषु नहिमेकाचिद्भुजंवाहुंगताप्राप्तेत्यर्थः लोकद्वयेत्यादिना
त्रिवर्गस्यानुपघातंदर्शयतिशास्त्रविरोधप्रसंगात् शतायुर्वैपुरुषः
कालमन्योन्यानुवद्धंपरस्परस्यानुपघातेनत्रिवर्गंसेवेतत्यतएवाह

कानिभुजंगतालोकहृदयाविरोधिभिस्तुचापलैः शैशवमशून्यमासीत् अत्रानपलापोस्मि अनेनैवच गृहीतविप्रतीसारमिदमेहृदयंइदानीं तु सुगतइव शांतमनासि मनाविव कर्त्तरिवर्णाश्रमव्यवस्थानां समवर्त्तिनीवच साक्षाद्दंडभृतिदेवे शासति सप्तांबुराशिरशनामशेषद्वीपमालिनींमहीं। कइवाविशंकःसर्वव्यसनवंधोरविनयस्य मनसाप्यभिनयं कल्पयिष्यति आसतां तावन्मानुष्यकोपेताः स्वत्प्रभावादलये।पिभीता इव मधुपिवंति रथांगनामानोपिलज्जंतइवाभ्यनुवृत्तिव्यसनैः प्रियाणांकपयोपि चकिताइव चपलायंते शरारवोपिसानुक्रोशाइवश्वापदगणाः पिशितानिभुंजतेसर्वथाकालेनमांज्ञास्यतिस्वामी स्वयमेव अनपचीनाचित्तवृत्तिग्राहिण्योहि भवंति प्रज्ञावतां प्रकृतयइत्यभिधाय तूष्णीमेवाभूत् भूपति

शैशवमित्यशून्यमित्यनेनतदेकासक्तत्वंपरिहराति अनपलापोनिरपन्हवः विप्रतीसारः पश्चात्तापः सुगतोवुद्धः समवर्त्तीयमः मनुष्यस्यभावोमानुष्यकंरथांगनामानश्चक्रवाकाः चपलायंते चपलत्वमाचरंति शरारवोहिंस्राः श्वापदगणाः प्राणिसमूहाः

रप्येवमस्माभिः श्रुतमित्यभिधाय तूष्णीमेव। भवत् संभाषणासनदानादिना तु प्रसादेनैन मन्वग्रहीत् केवलममृतदृष्टिभिः स्नपयन्निव स्नेहगर्भेण दृष्टिपातमात्रेणांतर्गतां प्रीतिमकथयत् अस्ताभिलाषिणि चलंबमाने सवितर्युत्थाय राजलोकोऽभ्यंतरं प्राविशत् ॥ बाणोऽपि निर्गत्य धौतारकूटकोमलातपत्विषि निर्वाति वासरे अस्ताचलकूटकिरीटे निचुलमंजरीभासि तेजांसि मुंचति वियन्मुचि मरीचिमति रोमन्थमंथरकुरंगकुटुंबाध्यास्यमानम्रदिष्ठगोष्ठीनपृष्ठास्वरण्यस्थलीषु शोकाकुलकोककामिनीकूजितकरुणासु तरंगिणीतटीषु वासविटपोपविष्ट

पिशितं मांसं अनपचीना मृष्टा अविपरीतेत्यर्थः निर्दोषा वा ८८ बाणोपीत्यादौ बाणोऽप्यस्मिन्सति निवासस्थानमगादिति संबंधः रीतिः स्त्रियामारकूटमित्यमरः निर्वाति शाम्यति निचुलो वेतसवृक्षः भुक्तोद्गीर्णाहारचर्वणं रोमंथः म्रदिष्ठं मृदुतमं गोष्ठी पूर्वं गोष्ठीनं गोष्ठात् खञ् भूतपूर्वे उक्तं च गोष्ठं गोस्थानकं तत्तु गोष्ठीनं भूतपूर्वकमिति कोकाश्चक्रवाकाः तरंगिणी नदी आलवालमावापः

वाचाटचटकचक्रवाले ष्वालवालावर्जितसे
कजलकूटेषु निष्कुटेषु दिवसविहृति प्रत्याग
तंप्रस्नुतस्तनंस्तनंधयेधयतिधेनुवर्गेमुद्धतक्षी
रक्षुभिततर्णकव्राते क्रमेणचास्तधराधरधातुधु
नीपूरप्लावितइव लोहितायमानमहासिमज्जति
संध्यासिंधुपानपात्रेपातंगेमंडलेकमंडलुजल
शुचिशयचरणेषुचैत्यप्रणतिपरेषुपाराशरिषु
यज्ञपात्रपवित्रपाणौप्रकीर्णवर्हिषि उत्तेजसि
जातवेदसि हवींषि वषट्कुर्वतियायजूकजने
निद्राविद्राणद्रोणकुलकलिलकुलायेषु कापेय
विकलकपिकुलेष्वारामतरुषुनिर्झिगमिपतिज
रत्तरुकोटरकुटीकुटुंबिनि कौशिककुले मुनिक
रसहस्रप्रकीर्णसंध्यावंदनोदविंदुनिकर इव

कुटाघटाःनिष्कुटाःस्वगृहारामाःस्तनंधयःतर्णकःचवत्सः धुनी
नदीसिंधुःसमुद्रःशयःकरः चैत्यमायतनंपाराशरिषुभिक्षुषुवर्हिषि
कुशाःवषडितिदानक्रियासुमोचनमंत्रः वषट्कुर्वति जुह्वति।व्या
र्थः यायजूकोत्यर्थंयजनशीलः॥ ८९ ॥

दंतुरयति तारापथस्थलीं स्थवीयसि ता रकानिकुरंबे अवराश्रयिणिशर्वरीशवरीशि खंडे खंडपरशुकंठकाले कवलयति वाले ज्यो तिःशेषं सांध्यमंधकारावतारे तिमिरतर्जन निर्गतासुदहनप्रविष्टदिनकरकरशाखास्विव स्फुरंतीषुदीपलेखासु अररसंपुटसंक्रीडनक थितावृत्तिष्विव गोपुरेषु शयनोपजोषजुषि जरतीकथितकथेशिशयिषमाणे शिशुजनेज रन्माहिषमषीमलीमसतमासि जनितपुण्यज नप्रजागरे विजृंभमाणे भीषणतमे तमीमुखे मुखरितविततज्यधनुषि वर्षतिशरनिकरमन वरतमशेषसंसारशेमुषीमुषि मकरध्वजे ॥

निद्राणोलसः द्रोणः काकः कलिलाआकुलाः कुलायोनीड मस्त्रियां कापेयंचापलंकौशिकाउलूकाः स्थवीयसिस्थूलतरे शि खंडोजूटकः खंडपरशुः शिवः कराएव शाखास्तदाकारत्वादं गुलयश्च करशाखाः अररःकपाटः संक्रीडनंशब्दः आवृत्तिः स्थगनं गोपुरंस्यात्पुरद्वारं द्वारमात्रेपिगोपुरं उपजोषः सुखं तू ष्णींभावोवा जरतीवृद्धा शिशयिषमाणे सुषुप्सति यक्षाः स्युः पुण्यजनाः तमीरात्रिः शेमुषीबुद्धिः ॥

रताकल्पारंभशोभिनि शंभलीभाषितभाजि भजतिभूषां भुजिष्याजने सैरंध्रीवध्यमानर शनाजालजल्पाकजघनासु जनीषु वशिक विशिखाविहारिणीषु अनन्यजानुप्लवासु प्रचलितास्वभिसारिकासु विरलीभवति व रटानांवेशंतशायिनीनांमंजुनिमंजीरशिंजिते जडे जल्पितेनिद्राविद्राणद्राघीयसिद्रावयती वच विरहिहृदयाणि सारसरसिते भाविवास रवीजांकुरनिकर इवच विकीर्यमाणे जगति प्रदीपप्रकरे निवासस्थानमगात् अकरोच्च चेतसि अतिदाक्षिणः खलुदेवो हर्षः यदेवमने कबालचरितचापलोचितकौलीनकोपितोपि मनसास्निह्यतीवमयि यद्यहमक्षिगतः स्यांन मेदर्शनेनप्रसादंकुर्यात्इच्छतितुमांगुणवंतं

आकल्पोवेशः शंभलीकुट्टनीभुजिष्यादासीसैरंध्रो प्रसाधनोप चारज्ञा जनी वशिका शून्या विशिखा रथ्या १० अनन्य जः कामः अनुप्लवः सहायः कांतार्थिनीतुयायाति संकेत सा भिसारिका हंसस्य योषिद्वरटावेशंतः पल्वलं कासारमस्यल्पसरः

उपदिशंति हि विनयमनुरूपप्रतिपत्त्युप
दानेन वाचं विनापि भर्त्तव्यानां स्वामिनो
पिच धिङ्मां स्वदोषांधमानसमनादरपीडि
तमेवमतिगुणवति राजन्यन्यथा चान्यथ.चिं
तयंतं सर्वथा तथाकरोमि यथायथावस्थि
तं जानाति मामयंकालेनेत्येवमेवावधार्यचा
परेद्युर्निष्क्रम्यकटकात्सुहृदां बांधवानांच भ
वनेषु तावदातिष्ठद्यावदस्य स्वयमेव गृहीत
स्वभावः पृथिवीपतिः प्रसादवानभूत् अ
विशच्च पुनरपि नरपतिभवनंस्वल्पैरेवचाहो
भिः परमप्रीतेन प्रसादजन्मनो मानस्य प्रे
म्णोविस्त्रंभस्य द्रविणस्य नर्मणःप्रभावस्य
चपरांकोटिमानीयतनरेन्द्रेणेति ॥ इतिश्री
बाणविरचितेहर्षचरितेराजदर्शनंनामद्विती
यउच्छ्वासः संपूर्णः ॥ २ ॥ ❀❀

मंजीरं नूपुरं दक्षिणोनुकूलः कौलीनंजनापवादः अक्षिगतोद्वे
ष्यः विस्रंभस्याश्वासस्यद्रविणस्यधनस्य नर्मणःपरिहासस्य ॥ इ
तिश्रीशंकरविरचिते हर्षचरितसंकेतेद्वितीय उच्छ्वासः समाप्तः
॥ २ ॥ ॥ ११ ॥

ऊँनिजवर्षाहितस्नेहावहुभक्तजनान्विताः सु
कालाइवजायंते प्रजापुण्येनभूभुजः १ साधू
नामुपकर्त्तुंलक्ष्मींधर्तुंविहायसागंतुं नकुतूहालि
कस्यमनश्चरितंचमहात्मनांश्रोतुम् २ अथक
दाचिद्विरलितवलाहकेचातकातंककारिणिक्व
णत्कादंवेदर्दुरद्विषिमयूरमदमुषि हंसपथिक
सार्थसर्वातिथौधौतासिनिभनभसिभास्वरभा
स्वति शुचिशशिनितरुणताराणगलच्छुना
सीरशरासने संदत्सौदामनीदाम्नि

निजेतिनिजआत्मीयः वर्षोलोकः वृष्टिश्च वर्षं वर्षमपिनिर्जस
मुचितकालप्राप्तंस्नेहःप्रीतिरार्द्रताच भक्ताः अनुरक्ताः ओदनाश्च
भक्तंभक्तरूपाणांभूभृतांसुकालानांच प्रजापुण्यंहेतुः अनेनमहा
नुभावपुष्पभूतिवर्णना सूचिता १ साधूनामित्यादिनापि भैर
वाचार्योपकारकरणंस्वर्यलक्ष्मीदर्शनं विहायसागमनं भैरवाचा
र्यस्य महात्मचरितश्रवणकुतूहलंच निजभ्रात्रादीनांसूचितं २
अथेत्यादावेवंविधे शरत्समयारंभे वंधून्द्रष्टुंबाणोब्राह्मणाधिवा
समगादितिसंवंधः विरलिताःनपुनरेकांततोपगताः वलाहकाः
मेघाःचातकाःस्तोककाख्याःपक्षिणःकादंवाःकृष्णहंसाःदर्दुराः
मंडूकाः हंसाएवपथिकसार्थाः तेषांनिर्मलजलदानादनाद्या
त्सर्वातिथित्वंशुचिर्निर्मलःशुनासीरइन्द्रःसौदामनीविद्युत्

दामोदरनिद्राद्रुहिद्रुतवैदूर्यंवर्णार्णसिघूर्णमा
नमिहिकालघुमेघमोघमघवति।निमीलन्नीप
निष्कुसुमकुटजे निर्मुकुलकन्दलेकोमलकम
लेमधुस्यंदीन्दीवरेकल्हाराल्हादिनिशेफालि
काशीतलीकृतनिशि यूथिकामोदिनि मोद
मानकुमुदावदातदशदिशि सप्तच्छदधूलि
धूसरसमीरेस्तवकितवंधुरवंधूकवध्यमाना
कांडसंध्ये नीराजितवाजिनि

दामोदरोहरिः अस्य निद्रांद्रे।ग्धियस्तस्मिन् तदा किलहरिः
विबुध्यत इतिवार्त्ता अर्णोजलं घूर्णमाना भ्रमंती या मिहि
का नीहारः तद्दलघवः तुच्छाये मेघास्तैर्मोघोनिष्फलो मघवा
निंद्रोयत्रतस्मिन्वर्षाभावादिन्द्रस्य मोघत्वं इन्द्रादेशेनहि मेघाव
र्षंति मेघवद्गर्ज्जितमित्यन्ये नीपाः कुटजाःकंदलाश्चवृक्षभेदाः क
ल्हाराणि सौगंधिकापरनामानि श्वेतोत्पलानि जलकुसुमपत्रि
केत्यन्ये शेफालिकापुष्पभेदःरात्रावेव विकसति यूथिका हरिणि
का मोदमानानि बिकसंतिसप्तच्छदाःसप्तपर्णाख्यावृक्षभेदाःवंधु
राहृद्याःवंधूकाः बंधुजीवाख्याः वृक्षभेदाःनीराजिताःकृतशांति
विधानाः १२

उद्दामदंतिनि दर्पक्षीवोक्षकेक्षीयमाणपंकच
क्रवाले वालपुलिनपल्लवितसिंधुरोधसि प
रिणामाश्यानश्यामाके जनितप्रियंगुमंजरी
रजसिकठोरत्रपुसत्व चिकुसुमस्मेरशरेशर
त्समयारंभे राज्ञःसमीपाद्बाणोवंधून्द्रष्टुंपुन
रपि तं ब्राह्मणाधिवासमगात् समुपलब्धभू
पालसम्मानातिशयपरितुष्टास्त्वस्य ज्ञातयः
श्लाघमाना निर्ययुः क्रमेणच कांश्चिदभि
वादयमानः कैश्चिदभिवाद्यमानः ॥ कै
श्चिच्छिरसि चुंव्यमानः कांश्चिन्मूर्ध्नि समा
जिघ्रन् कैश्चिदालिंग्यमानः कांश्चिदालिंग
न् अन्यैराशिषानुगृह्यमाणः परानन्नुगृह्णन्
न्वहुवंधुमध्यवर्त्तीपरंमुमुदे संभ्रांतपरिजनो
पनीतंचासनमासीनेषु गुरुषुभेजेभजमानश्च

क्षीवाणिवोक्षकानि दांतसमूहा यत्र तस्मिन् चक्रवालंसमूहः वालंतत्क्षणस्रुतजलंसिंधवोनद्यः श्यामाकोनीवारः प्रियंगुः व्रीहिभेदःत्रपुसं लाडुकम् ॥

अर्घादिसत्कारं नितरांननंद प्रीयमाणेनचम
नसासर्वांस्तान्पर्यपृच्छत् कच्चिदेतावतोपि
दिवसान्सुखिनोयूयमप्रत्यूहावा सम्यक्करणप
रितोषितद्विजचक्राक्रातवीक्रियाक्रियते यथा
वदविकलमंत्रमांजिभुंजते हवींषि हुतभुजः य
थाकालमधीयतेवावटवः प्रतिदिनमविच्छिन्नो
वेदाभ्यासः कच्चित्सएवाचिरंतनोयज्ञविद्या
कर्मण्यभियोगः तान्येव व्याकरणे परस्पर
स्पर्धानुबंधाबंध्यदिवसदर्शितानि व्याख्या
नमंडलानि सैववापुरातनीपरित्यक्तान्यकर्त्त
व्या प्रमाणगोष्ठी सएववामंदीकृततरशास्त्रर
सोमीमांसायामतिरसः कच्चित्तएवाभिनव
सुभाषितसुधावर्षिणः काव्यालापा इति

संभ्रांतः सत्वरःसत्कारंपूजां कच्चिदितीष्टप्रश्ने प्रत्यूहोविघ्नःसम्य
क्करणं यथाशास्त्रसंपादनं क्रतूनांयज्ञानामियं क्रातवी अधीयते
इति वेदपाठोबालानामेवोचितः १२ प्रमाणं तर्कविद्या
मीमांसा ब्रह्मनिदर्शनं अतएवाह अतिरसइति

अथते तमूचुः तातसंतोषजुषांसततसन्निहित
विद्याविनोदानांवैतानवह्निमात्रसहायानांकि
यन्मात्रं नः कृत्यं सुखितयासकलभुवनभुजि
भुजंगराजदेहदीर्घेरक्षातिक्षितिंक्षितिपभुजेस
र्वदासुखिनएववयंविशेषेणतु त्वायि विमुक्तकौ
सीद्ये परमेश्वरपार्श्ववर्त्तिनि वेत्रासनमधिति
ष्ठति सर्वेच यथाशक्तियथाविभवंयथाकालंच
संपाद्यंते विप्रजनोचिताःक्रियाकलापा इत्येव
मादिभिरालापैः स्कंधावारवार्त्ताभिश्च शैश
वातिक्रांतक्रीडानुस्मरणैः पूर्वजकथाभिश्च वि
नोदितमनाःतैःसह सुचिरमतिष्ठत् उत्थाय
मध्यंदिने यथाक्रियमाणाःस्थितीरकरोत्

तातइति पूजावचनं वैतानः क्रातवः कौसीद्यमालस्यं निष्प्रयत्ना
तेत्यर्थः अत्रत्यादौ सुदृष्टिः पुस्तकवाचकः आजगामेतिसंबंधः
१४ दुगूलेति एकस्माद्दुगूलपट्टाद्दीर्घांच्छिन्नवागृहीते शिखंडच
पांगपांडुत्वेन कार्कश्यमपिदर्शितं पौंड्रे पुंड्रदेशजे गोरोचना
रक्षाद्रव्यभेदःमौलयःकेशाः अनुचेतिअदीर्घतयाकुसुमापीडकस्य
श्रोत्रियत्वंविनीतत्वं चास्य दर्शितं निविडेन संहतपुष्पेण

भुक्तवंतंच तं सर्वेज्ञातयःपर्यवारयन् अत्रांत रेदुगूलपट्टप्रभवेशिखंडयपांगपांडुनीपौंड्रेवा ससी वसानः स्नानावसानसमयेवंदितयार्ता र्थमृदागोरोचनयाच रचिततिलकः तैलामल कमसृणितमौलिरनुच्चचूडाचुंबिना निविडेन कुसुमापीडकेन समुद्भासमानःअसकृदुपयु क्ततांबूलविरलाधरकांति रेकशलकांजनज नितलोचनरुचिरचिरभुक्तोविनतमार्यं वंशं च दधानः पुस्तकवाचकः सुदृष्टिराजगाम नातिदूरवर्त्तिन्यांचासंद्यांनिषसादस्थित्वा च मुहूर्त्तमिवतत्कालापनीतसूत्रवेष्टनमपि नख किरणैर्मृदुमृणालसूत्रैरिवावेष्टितं पुस्तकं

रुचिरंनैर्मल्यंभोजनंभुक्तमचिरंभुक्तंयस्यसःअनेनतस्यानवलिप्तत्व मुक्तं आसंद्यावेत्रपीठिकायांस्थित्वेत्यादौ पुराणं पपाठेतिसंबंधः सनोडेसमीपे प्रपाठकोवाचकः प्रपठनंवात स्यतत्रवाछेदः इयन्मात्रं वाचितं नान्यदिति तेनचिन्हीकृतंलक्षीकृतंग्रंथपति रागस्वरूपमिति

पुरोनिहितशरशलाकायंत्रकं निधायपृष्ठतः सनोडसन्निविष्टाभ्यां मधुकरपारावताभ्यां दत्ते स्थानके प्राभातिकप्रपाठकच्छेदचिह्नी कृलमंतरमुत्क्षिप्य गृहीत्वाच कतिपयपत्रलघ्वीं कपाटिकां क्षालयन्निव मषीमलिनान्यक्षराणिदंतकांतिभिरर्चयन्निव सितकुसुममुक्तिभिर्ग्रंथ मुखसान्निहितसरस्वतीनूपुररवैरिव गमकैर्मधुरैराक्षिपन्मनांसि श्रोतृणां गीत्या पवमानप्रोक्तं पुराणं पपाठ तस्मिंश्च तथा श्रुतिसुभगगीतिगर्भं पठति

गमकाः असाधारणानि स्वराणां निमीलनानि यानिलक्ष्येदवांतरमार्गं इतिप्रसिद्धास्तैर्गमकैः स्वरयतिविशेषैः पवमानोवायुः १९ वन्दीस्तुतिपाठकः पृथुरादिनृपोपि पवमानंवायुप्रोक्तमपिगीतपक्षेवंशेन वेणुनाअनुगमोययोस्तौ विवादिनौस्वरौ विश्रुत्यंतरौगांधारनिषदौस्वरौयत्रतत्करणमपदः सनालआविद्धःस्वरसन्निवेशः उच्चारणस्थानं वा भारतं भरतमुनिकृतोग्रंथः श्रीकंठः

सुदृष्टौनातिदूरवर्त्ती वन्दीसूचीवाणः तारमधु रेणगीतिध्वनिमनुवर्त्तमानः स्वरेणेदमार्यायु गलमपठत्तदपिमुनिगीतमतिपृथु तदपि ज गद्यापि पावनं तदपि हर्षचरितादभिन्नं प्रति भातिहिमे पुराणमिदं वंशानुगमविवादिस्फु टकरणंभरतमार्गभजनगुरु श्रीकंठविनिर्यातं गीतमिदंहर्षराज्यमिव तच्छ्रुत्वा वाणस्यच त्वारः पितामहमुखपद्मा इव वेदाभ्यासपवि त्रमूर्त्तयउपाया इव सामप्रयोगललितमुखा गणपतिरधिपतिस्तारापतिः श्यामलइतिपि तृव्यपुत्राभ्रातरः प्रसन्नवृत्तयोगृहीतवाक्याः कृतगुरुपदन्यासाः

श्रीयुक्तः कंठः वैस्वर्यादिदोषाभावात् यद्वाश्रीकंठोहरएवसर्वंवि द्यानांततएवोत्पत्तेः हर्षराज्यमपीदृशमेव तथाच वंशंकुलं अनु गच्छत्यनुसरतिबत्तद्वंशानुगं तथाअविद्यमाना विवादिनोयत्र तदविवादितैाराज्यंन केचित्तत्रविवदंते करणमधिकरणंयत्रावि द्यापरीक्षाधर्मनिर्णयोवाक्रियते व्यापारोवाभरतोनामपूर्वराजा भूत् श्रीकंठोदेशभेदःगीतमपि हर्षस्य प्रमोदस्य राज्यमिव त स्यविजृंभमाणत्वात् तच्छ्रुत्वेत्यादै वाणस्य चत्वारः परस्प रस्य मुखानि व्यलोकयन्निति संबंधः

न्यायवादिनः सुकृतसंग्रहाभ्यासगुरवः लब्ध साधुशब्दाल्लोकाइव व्याकरणेपि सकल पुराणराजर्षिचरिताभिज्ञाः महाभारतभाविता त्मानः विदितसकलेतिहासामहाविद्वांसोमहा कवयो महापुरुषवृत्तांतकुतूहलिनः सुभाषि तश्रवणरसरसायणावितृष्णाः ॥

तच्छ्रुत्वेत्यादिनाऽस्यप्रकरणस्य प्रकृतानुगुणत्वंदर्शितं तेषांचते प्रस्तावबोदित्वं मुखपद्मा अपिचत्वारःसामवेदभेदः सात्वंचमुख मारंभोपि प्रसन्ना शुद्धा सुबोद्धाच वृत्तिःवर्त्तनंसूत्रविवरणंच गृ हीतं आदृतंज्ञातार्थंचवाक्यंविवरणंवार्त्तिकंचयत् कारणात् का त्यायनोवाक्यकारउच्यते कृतागुरूणांसंबंधिनि पदे स्थानेन्यासः स्थितिर्येषांतेसर्वेणोपदेष्टृपदेस्थापितास्तेइत्यर्थः यद्वाकृतागुरुणि पदे न्यासोयैः महति पदेस्थिताइत्यर्थः अन्यत्रकृताभ्यस्ता गुरुपदेदुर्बोधशब्देन्यासोवृत्तिविवरणंयैः न्यायोयुक्तं उपपत्त्यनु पपत्तिविचारश्च सुकृतंपुण्यंसुष्टुविहितंच संग्रहःसंचयोव्याकरणं व्याडिकृतोग्रंथश्च गुरवोमहांतउपाध्यायाश्च साधुशब्दःसाधु वादः साधवोमीइत्येवंरूपोवा साधवः संस्कृताः शब्दाश्च पांडि त्यप्रकटनेनानेन द्रष्टुमिष्टस्य वस्तुनउत्कृष्टतोच्यते

वयसि वचसियशसितपसिसदसिमहसि व पुषियजुषिच प्रथमा:पूर्बमेवकृतसंगर।।विवक्ष वः स्मितसुधावलितकपोलोदराः परस्पर स्यमुखानिव्यलोकयन् अथतेषांकनीयान्क मलदलदीर्घलोचनः श्यामलोनाम वाणस्य प्रेयान् प्राणानामपि वशयिता दत्तसंज्ञस्तैः सप्रणयं दशनज्योत्स्नास्नापितककुभा मुखे न्दुनावभाषेतातवाणद्विजानांराजागुरुदार ग्रहणमकार्षीत्

सकलेत्यादि विशेषणत्रयेण द्विजराजादिवृत्तांतेभि ज्ञतोच्यते महापुरुषेत्यादिहर्षचरिते शुश्रूषायाहेतुः ॥ १६ ॥ सुभाषि तेत्यादि स्वकाव्यप्रशंसासूचनपरं सदसि सभायां संगरसंकेतः कनीयानित्यनेनप्रियवचनत्वमस्यदर्शितं ब्रूहिइतिदत्तसंज्ञः तात वाणेत्यादिना पूर्वराजदोषोद्भावनद्वारेण हर्षस्यगरीयस्तांख्याप यति अत्र कचिच्छब्दद्वारेणकचिच्चार्थद्वारेणयथायोग्यंदोषउद्भा वः चंद्रादिशब्दाभिधानेन राजत्वप्रतीतिनेत्यादिति द्विजानांरा जत्युक्तं गुरुर्बृहस्पतिःपित्राद्याश्च गुरवः अत्र कथा पुरा पूर्णचं द्रमुदितंवीक्ष्य कामयमानां गुरुपत्नींताराख्यामभिगच्छत् तद सहमानेनच बृहस्पतिना यदेन्द्राद्याः प्रोत्साहिताःतद्दानयनाय

पुरूरवा ब्राह्मणधनतृष्णया दयितेनायुषा
व्ययुज्यत नहुषः परकलत्राभिलाषीमहा
भुजंग आसात्

तदाचन्द्रेणशुक्रः शरणमाश्रितः ततःशुक्रप्रेरितैर्दैत्यैः सहतेषा
मन्योन्यं दिव्यवर्षसहस्रं युद्धमासीत् तारापि नारदबोधिता सग
र्भा सती पुनः गुरुमेवाभिगतेति दयितेनायुषा प्रियेणजी
वितेन पुत्रेण आयुर्नाम्नाकथा चात्र पुरूरवाः पूर्वादिशंजेतुंग
च्छन्केनाप्याहृतप्रभूतधनेन विप्रेणयज्ञे निमंत्रितोलोभाक्षिप्त
स्तद्धनंजिहीर्षुस्तच्छापान्नष्टःतस्मिन्मृतेसविप्रोनृपं विनाप्रजानि
वर्त्ततेतिज्ञात्वा तदायुषा राजर्षिमायुनामानमजीजनदिति भुजं
गोविटोपिपुरावृत्रंहत्वाब्रह्महत्ययाशक्रःपलाय्यमृणालच्छिद्रांतरे
यदातिष्ठत्तदानहुषोयज्वा शूरैश्चदेवैरिन्द्रत्वं नीतोदर्पाच्छचींप्रा
र्थयमाणोवृहस्पत्युपदेशात्तयोक्तोयद्यायानेनापूर्वेणागच्छेति ततो
ब्रह्मर्षीन्वाहनीकृत्यव्रजन्कामवशात्त्वरमाणःपादेनाताडयत्सर्प
सर्पेतिचोदयन्नगस्त्येन सर्पोभवेतिशप्तः सर्पोभवन्नपपातेति
नरकगामी बभूव स्वाचारभ्रष्टत्वात्पतितश्चाभूत् वृषपर्वणो
सुरराजस्य दुहित्रा शर्मिष्ठया कलहायमाना अस्मद्भृत्यसुता
वशकीभूत्वा स्पर्धते इत्युक्त्वाकूपांतःपातितांशुक्रसुतांदेवयानीं
ज्ञात्वा ययातिर्वनविहारीपाणिंगृहीत्वोज्जहार गतें ययातौप
रिभवोद्विग्ना वनएवावसत अथनारदाद्यथावृत्तं ज्ञात्वा वृषपर्वा

यथातिराहितब्राह्मणीपाणिग्रहणः पपात ।
सुद्युम्नः स्त्रीमयएवाभवत् सोमकस्य प्रख्याता जंतुवधानिर्घृणता मांधाता मार्गणव्यसनेनसपुत्रपौत्रोरसातलमगात् ।

शुक्रस्यप्रार्थनामकरोत् संदिष्टाचकुमारी शतपरिचारवती यंशर्मिष्ठायदामेदास्यंकरोति तदागच्छामीतिशुक्रशापभीतेनवृषपर्वणा संपादितमनोरथादेवयानीपुनरपिदासीभूतयाशर्मिष्ठयासहवने क्रीडंतीययातिमायांतंदृष्ट्वावभाषेकाद्यमांत्यक्त्वापाणिग्राहोमहानुभावोगतोभूरितिततोययातिर्ब्राह्मणीत्वादनंगीकुर्वंस्तात्पित्राशोकविधुरेणशुक्रेणपापमास्तुक्रियतामयांविधिरितिवुद्ध्वातांस्वीचक्रे कालेनचासौपपातेति सुद्युम्नोराजोशोभनंद्युम्नंबलमस्येतिचस्त्रीमयोमहिलाकृतिः कांतानुरक्तश्चयोत्रयमुपयोक्ष्यति सस्त्रीत्वमाप्स्यत इतिभगवता भवान्याभ्यर्थितेन भवेनशप्तः सन्सरसः पीत्वातोयं सुद्युम्नोमृगयाविहारीस्त्रीमयोभूदिति जंतुर्नामसोमकस्य राज्ञः पुत्रः जंतवः प्राणिनश्च सोमकस्य राज्ञोजंतुर्नामैकः पुत्रोभूत् सचैकपुत्रत्वादपुत्रत्वंवरमितिजानन्नुद्विग्नः पुरोधसाभ्यधायिवहून्पुत्रांश्चेदिच्छासितदस्य सुतस्यवपयाहोमःक्रियतां ततोयावत्योधूममाजिघ्रंति तापुत्रैर्युज्यंतइतिसचापिघृणामपहाय तथाकारितवानिति

पुरुकुत्सः कुत्सितं कर्म तपस्यन्नपि मेकलकन्यकायामकरोत् कुवलाश्वो भुजंगलोकपरिग्रहादश्वतरकन्यामपि न जहार पृथुः प्रथमपुरुषकः परिभूतवान्पृथिवीं ॥

मार्गणं याचूत्राशराश्च मार्गणाः मार्गणेषु व्यसनं युद्धं व्यसनं रसातलमगमदधस्ताज्जगाम विनष्ट इत्यर्थः रसातलं पातालं च मांधाता च भुवं जित्वा स्वर्गं जेतुं गतः शक्रेणोक्तं पातालं जित्वागतस्य तवदास्यं यास्यामि स च तद्वचनादविचार्यैव रसातलं गतस्तत्र हरप्रसादासादितत्रिशूलेन लवणनाम्ना दानवेन ससुतसैन्यों तमनीयत इति मेकलकन्यका नर्मदा पुरुकुत्सः पुरा तपश्चरन्नर्मदायां स्नानं कुर्वन्काम्यंगनामालोक्य कामाविष्टो नीतिमुत्ससर्जेति भुजंगाविटाश्रपि अश्वतरकन्यां वडवामपि कुवलयाश्वो राजा मृगयाक्रीडाप्रसंगेन घर्मातुरो मज्जनरभसेन सरसीमवतीर्णो रसातलं प्राप्तोश्वतराभिधां नागकन्यामूढवानिति प्रथम आद्यः प्रधानश्च कुत्सितः पुरुषः पुरुषकः पृथुरादिनृपो भूधराक्रांतां सर्वांगां विलोक्य चापकोट्या भुवः पर्यंतेषु चिक्षेप धरणकारणभूतभूभृत्परिभवाद्भुवो विभवः अत एवास्यकापुरुषत्वं विष्णुपुराणे त्वा कृष्टकार्मुकेन पृथुना दोहिमे भत्तव्यभरणोपायानित्यनुबध्यमाना भूर्भुवनानि वभ्राम ततः शरणमलब्ध्वा सास्य सर्वाः सस्यसंपदो जनयदिति वर्णितं एतस्मात्परिभूता भूदिति कुकलासः प्राणिभेदः तद्भावेपि तस्यां दशायामपि किं पुना राज्यस्येति निन्द्यत्वं वर्णः शुक्लादब्राह्मणादिश्च नृगो राजा दानप्रस्तावे कस्यचिद्विप्रस्य संबंधिनीं गामविज्ञायैव द्विजाय ददौ

नृगस्य कृकलासभावेवर्णसंकरः समदृश्यत सौदासेन न रक्षिता पर्याकुलीकृताभूमिः नलमवशाक्षहृदयंकलिरभिभूतवान् संवरणोमित्रदुहितरि विक्लवतामगात् दशरथइष्टरामोन्मादेन मृत्युमवाप ॥

कदाचिच्चतस्यागोः स्वामीतांगांपरिज्ञायतंययाचेनचतस्माद्द्विजे ततस्तौद्वावपिराजद्वारंराजाविज्ञापनाययगतौ ग्राम्यभोगासक्तराजदर्शनमलभमानौचक्रोधात्कृकलासोभवेति राज्ञः शापंदत्वाकस्मैचिद्द्वांवितीर्ययथागतंप्रतिजग्मतुरिति नराान्क्षिणोति तिनरक्षितानपालिताचसौदासोनामराजामृगयाखिन्नःपथिगच्छन्कदाचिन्मुनिंशक्रनामानंमार्गमध्येस्थितमपसर्पेत्यवदत् पंथादेयाब्राह्मणायेतिवचनात् न्यायमनुवर्त्तमानोयावन्नचालितस्तावद्द्विजाकशयाभिहतः अथरोषावेशाद्गच्छमनुष्यभक्षोराक्षसोभवेतिनंशशाप वशमायत्तं अक्षहृदयमक्षज्ञानं अक्षाणीन्द्रियाणिहृदयंचतस्यनलोराजाद्यूतव्यसनीतत्स्वरूपानभिज्ञश्चकलिनाभिभूतइतिप्रसिद्धं मित्रोरविःसुहृच्चमित्रंतपतीनाममित्रस्यरवेर्दुहिताभूत् तस्यांसंवरणोनामराजाव्यसनीबभूव रामोदशरथसुतः रामा स्त्रीच दशरथोमृगयासक्तोघटपूरणरवंश्रुत्वा वृंहितशंकयाशब्दपातिनाशरेणमुनिपुत्रंव्यापादयत्तेनच वोधितान्वयःपित्रोः समीपंतंनिनाय तद्वचनाच्छल्यमुद्धरति नृपे शिशुर्मृतः अथचसदारेण वृद्धतापसेन पुत्रादहमिव त्वमपिप्राप्स्यस्यंतामिति शप्तो रामवियोगात्प्राणांस्तत्याजेति ॥ १७ ॥

कार्त्तवीर्योगोब्राह्मणातिपीडनेन निधनमया
सीत् मरुत्त इष्टवहुसुवर्णकोपिदेवद्विजवहु
मतोनवभूव

गोनिमित्तंब्राह्मणस्यजमदग्नेरतिपीडनं निधनमयासीज्जामदग्न्येने हतइत्यर्थः कार्त्तवीर्योगवांकोटेरप्यधिकतरां धेनुमपहरन्नजमदग्निं व्यापादितवान् अथचतत्सुतेन रामेणक्रोधात्परशुच्छिन्नवाहुसह स्रोसर्वक्षत्रियैःसहमृत्युंलेभे इष्टःकृतः अभिमतश्च देवद्विजोवृह स्पतिः अन्यत्र देवाश्चाद्विजाश्चेतिद्वन्द्वः मरुत्तोनाम राजावहुसु वर्णकाख्येन क्रतुनापि यक्ष्यमाणोदेवपुरोध संमायाजयेतियाच मानस्तेनमनुष्योयमेवद्दष्टइतिसचोपहसतिधिषणे नारदेनोक्तःय थागच्छास्यैवभ्राता संवर्त्तकोनाम ग्रहगृहीतच्छन्नावाराणस्यां स्थितःतंप्रार्थयस्वेत्युक्त्वाचनारदोग्निंविवेशसचनारदोक्तचिह्नैस्तं भगवत्प्रणामंकृत्वानिर्यातंपरिज्ञायवहुशोगालीर्ददतमपि अनुद्वि जमानोयाजनायप्रार्थयामाससंवर्त्तकेनकथितंच नेदंत्वोक्त याव त्तंवक्ष्यामिदेवेभ्यश्चश्रुत्वायज्ञभागोनदातव्यइति राज्ञायथोक्तमनु तिष्ठस्तेन याजितोदेवद्विजस्य नाभिमतोभवादिति

शंतनुरपिव्यसनादेकाकीवियुक्तोवाहिन्याविललाप विजिने पांडुर्वनमध्यगतोमत्स्यइव मदनरसाविष्टःप्राणान्मुमोच युधिष्ठिरो गुरुभयविषण्णहृदयः समरशिरसिसत्यमुत्सृष्टवान् इत्थंनास्ति राजत्वमपकलंकमृते देवदेवादमुतःसर्वद्वीपभुजोहर्षात्

अतिव्यसनादत्यंतसंगात् वाहिनीनदीसेनाच महाभिषःपुराब्रह्मसदसिगंगायाश्चामरग्राहिण्याश्चलितवाससोंगदर्शनहृतहृदयःशृंगारपदानिवदन्ब्रह्मणाशप्तः पतित्वा क्षत्रियगृहेशंतनुर्नामाभूत् गंगापिमत्कृतेयभिमांदशांप्राप्तइतिमत्वासखेदमवतरंतीधेनुहरणकुपितवासिष्ठशापसंपन्नमनुष्यलोकावतरणदुःखितैर्वसुभिर्विदितवृत्तांतैरभ्यधायि तत्र नृपेचेत्तवप्रीतिस्तद्वयं त्वद्गर्भेवोत्पत्स्यामहे जातमात्राश्चवयंत्वयास्वजलेक्षेप्तव्याइति सातुतथेत्यंगीकृत्यवनेविहरंतंप्रार्थ्यमानंशंतनुमवोचत् यदहंकरोमि तत्रत्वयानिषेधोनविधेयोनचाहं त्वया जन्मप्रष्टव्येति तथेति तेनांगीकृतवता वहुतरंकालमरंस्त अथयःकश्चित्सूनुरुदपादिसर्वस्तया स्वजलेक्षिप्तः एवंसप्तस्वतीतेषुगंगामासेव्यनिःसंतानोयंमाभूदितिमन्वानैः सप्तभिरेववसुभिः कृतात्मसन्निधिर्भीष्मोजातः ततस्तमपिजलेक्षिपंतीशंतनुनानिषिद्धा सापराधोभवानित्युक्त्वा साप्रतिजगाम ततस्तद्वियोगविधुरधीर्वहुविललापेतिव्यसननिमित्तकः सेनयावियोगेनचविलापोविजिगीषोरनुचितएव

अस्यहि वहून्याश्चर्याणि श्रूयंते तथाह्यत्र बलजिता निश्चलीकृताश्चलंतः कृतपक्षाःक्षितिभृतःअत्रप्रजापतिना शेषभोगिमंडलस्योपरिक्षमाकृता

वनंतोयंविपिनंचमदनः कामः फलविशेषश्च मदनं पांडुर्वनेमृगरूपया ब्राह्मण्या सह सुरतकर्मसक्तंमृगरूपंकर्दमाख्यं मुनिं शरेण जघानतेनच म्रियमाणेनस्त्रीसंभोगस्थोमारिष्यसीति शप्तोमाद्यासह स्मरार्त्तः क्रीडान्विपन्नइति गुरोर्द्रोणाचार्यस्य भयेन गुरुणामहताचत्रासेन युधिष्ठिरोवलानि दग्धुमुद्यतं द्रोणाचार्यं रणमूर्ध्न्यश्वत्थामाहतइत्युक्त्वापुत्रशोकाकुलं असत्येनासूनत्याजयत् इति इत्थमिति इत्थं कृतयुगादारभ्य कलिप्रारंभपर्यंतं राज्ञां नास्त्यपकलंकं राजत्वमितिवलाजित्प्रजापतिमुखाःशब्दाशक्ति यथार्था वेदितव्याःबलंसैन्यंवलाख्यश्चासुरः निश्चलीकृता इति सहायाभावाच्छत्रुषुयानंनाविदधिरेइति अन्यत्र स्थावरत्वं लंबिताः पक्षाः सहायाःपतत्राणि क्षितिभृतोराजानः गिरयश्च प्रजापतिना राज्ञाब्रह्मणाच शेषस्यावशिष्टस्य भोगिमंडलस्यराजसमूहस्योपरिविषये क्षांतिः कृताअन्यत्रशेषाख्यस्य भोगिनो नागस्य मंडलमाभोगस्तत्पृष्ठे भूमिर्निहिता पुरुषोत्तमोनरोत्कृष्टोराजाहरिश्च ॥

अत्र पुरुषोत्तमेनसिंधुराजं प्रमथ्य लक्ष्मीरा त्मीकृता अत्रबलिना मोचितभूभृद्बष्टनोमुक्तो महानागः अत्र देवेनाभिषिक्तः कुमारःअत्र स्वामिना एकप्रहारप्रपातितारातिना स्था पिता शक्तिःअत्र नरसिंहेनस्वहस्तविशामि तारातिना प्रकटीकृतोविक्रमःअत्रपरमेश्वरेण तुषारशैलभुवोदुर्गाया गृहीतः करःअत्रलो कनाथनदिशांमुखेषु परिकल्पिता लोकपा लाःसकलभुवनकोशश्चाग्र्यजन्मनां विभक्तः इत्येवमादयःप्रथमकृतयुगस्येव दृश्यंते महा समारंभाःयतो स्यगृहीतनाम्नः पुण्यराशेः पूर्वपुरुषवंशानुक्रमेणादितः प्रभृति चरित मिच्छामः श्रोतुम्

सिंधुराजोसिंधुदेशाधिपतिः क्षीरोदधिश्चलक्ष्मीश्छत्रचामरादिरू पा देवताकातिश्च बलिनाबलवतासुरेश्वरेणच भूभृद्राजाश्रीकुमा राख्यः श्रीकुमारोनाम राजा किल दर्पशातेनापजातमदेन ह स्तिनावेष्टितः ततः श्रीहर्षेणाकृष्य खड्गं तस्मान्मोचितोसो दंतीच रोषाद्वनेपरित्यक्तइति वार्त्ता भूभृच्च पर्वतोमंदराख्यःमहा नागो दर्पशातो वासुकिश्च मोचितभूभृद्बष्टनोमृतमंथमार्थे

मंथनार्थंकुमारः कुमारगुप्ताख्यः कुमारोवायो दर्पशातान्मो चितः कुमारोगुहः पुत्रश्चकुमारः स्वामीप्रभुः कुमारश्चअरातयः शत्रवः तारकश्चासुराधिपतिः शक्तिः सामर्थ्यंआयुधभेदश्च नरसिंहउत्तमनरोनृसिंहरूपोहरिश्च स्वहस्तेनेति नतुसाधनवले नअन्यत्रतुचक्रादिनिजायुधेन परमेश्वरेण सार्व भौमेन ॥ नतुमंडलमात्रस्यभोक्ता हरेण दुर्गायादुर्गमायागौर्याश्च करो दंडः पाणिश्च लोकनाथो राजाहरि वुद्धश्च दिशांमुखेषु सीमासुलोकनाथाः सीमापतयः इन्द्राद्या दिक्पालाश्च कोशोगंजंमध्यंग्रन्थभेदश्च अग्र्यजन्मानो द्विजाःआदिनृपाः श्रमणाश्च९८एवमादयइति नत्वेतावंत एवप्रथमकृतयुगस्यैवेति पर्वतशातनादयोवृतांताः अभवन्

सुनहान्कालोनःशुश्रूषमाणानामयस्कांतम
णयइवलोहानिनीरसनिष्ठुराणिक्षुल्लकानाम
प्याकर्षंतिमहतांमनांसिगुणाःकिमुतस्वभाव
स्वरसमृदूनीतरेषांकस्यनद्वितीयमहाभारते
भवेदस्य चरितेकुतूहलं

मणयइवेति मणिशब्देनापेमयानांगुणानांरत्नत्वमुक्तं लोहान्यपिनीरसनिष्टुराणि क्षुल्लकाःखलाः वालाइत्यन्ये

आचष्टांभवान् भवतुभार्गवोऽयंवंशः शुचिनानेनराजर्षिवंशश्रवणेनसुतरांशुचितर इत्येवमभिधायतूष्णीमभूत् वाणस्तुविहस्याब्रवीत् आर्यनयुक्त्यनुरूपमभिहितं अघटमानमनोरथमपि भवतांकुतूहलमवकल्पयामिशक्याशक्यपरिसंख्यानशून्याः प्रायेणस्वार्थतृषः परगुणानुरागिणाप्रियजनकथाश्रवणरसरभसमोहिताचमन्ये महतामपिमतिरपहरतिप्रविवेकं पश्यत्वार्यःक्वपरिमाणपरिमाणंवटुहृदयंक्व समस्तब्रह्मस्तंभव्यापिदेवस्यचरितंक्वपारिमि तवर्णवृत्तयः कतिपयेशब्दाः क्वसंख्यातिगास्तद्गुणाःसर्वज्ञस्याप्ययमविषयः वाचस्पतेरप्यगोचरः सरस्वत्याअप्यतिभारःकिमुतास्मद्विधस्यकः

आचष्टामाख्यातु भार्गवइति भृगुगोत्रत्वं अवकल्पयामीनिश्चिनोमि शक्यमिदमित्येवंरूपेणपरिसंख्यानेनगणनयास्वार्थतृषो गृध्नवः शून्याः शक्याशक्यविवेकं गृध्नवोनजानं तीत्यर्थःवटुःद्विजशिशुःब्रह्मस्तंभंजगत्

खलुपुरुषायुषशतेनशक्नुयादविकलमस्यच रितंवर्णयितुंएकदेशेतुयदिकुतूहलंवः सज्जा वयंइयमधिगतकतिपयाक्षरलवलघीयसी जिह्वाकोपयोगंयास्यति भवंतः श्रोतारो वर्ण्यतेहर्षचरितंकिमन्यत् पश्यतुपरिणत प्रायोदिवसः पश्चाल्लंबमानकपिलकिरण जटाभारभास्वरोभगवान्भार्गवोरामइवसमं तपंचकरुधिरमहाह्रदेमज्जति संध्यारागप टलेपूषाश्वोनिवेदयितास्मीतिसर्वेचतेतथेति प्रतिपद्यत नातिचिराद्दुत्थायसंध्यामुपासितुं शोणमयासीत् ॥

पुरुषायुषेत्यादिनायोग्येपिमयिवर्णयितरिवर्णनीयस्यभूयस्त्वं ९९ अल्पीयस्त्वाच्चायुषःसामस्त्येनवर्णनंनघटतइतिप्रतिपादितं अत एवाहएकदेशइति सज्जावर्णनाभिमुखाइतिभवंतइतिनतुयादृश तादृशाः हर्षचरितमितिनतुयदेवाकिंचित् स्यमंतपंचकंकुरुक्षे त्रंतथेतिएवमास्त्वितिप्रतिपद्यंतअंगीकृतवंतः

अथमधुमदपल्लवितमालवीकपोलकोमलातपेमुकुलितेह्निकमलिनीमलनाद्विलोहिततमेतमौलिहिरवौलंवमानेरवि रथतुरगमार्गानुसारेणयममहिषइवधावतिनभसितमसिक्रमेणचगृहतापसकुटी रकपटलावलंविषुरक्तातपच्छेदैःसहसंहृतेषुवल्कलेषुकालिकल्मषमुषि पुष्णतिगगनमग्निहोत्रधामधूमे सनिपमेयजमानजनेमौनव्रातिनिंविहारवेलाविलोले पर्यटति पत्नीजनेविकी र्यमाणहारितश्यामाकशालिपूलिकासुदुग्धासुहोमकपिलासुहूयमानवैताननतनूनपाति पूतविष्टरोपविष्टेकृष्णाजिनजाटिले जाटिनिजपति वटुजनेब्रह्मासनाभ्यासिनि ध्यायति योगिगणे

अथेत्यादौ अस्मिन्नस्मिन्सतिबाण स्तथैवगोष्ट्यातस्थावितिसबधः कपोलकमलोगंडसदृशः मुकुलितेप्राप्तसंकोचे कुटीरं जरद्गृहं पटलंछादनं विहारोवह्निसंधुक्षणमग्निहोत्रार्थं पूलकः वरंडः परिमाणभेदः १०० तनूनपाद्वह्निः विष्टरमासनं

तालध्वनिधावमानानंतांतेवासिनि अल
सवृद्धश्रोत्रियानुमतेनगलद्ग्रंथदंडकोद्गारि
णि संध्यांसमवधारयति वढरविटवटुसमाजे
समुन्मज्जतिचज्योतिषितारकास्येयखप्राप्त
प्रदोषारंभेभवनमागत्यप्रविष्टः स्निग्धै
र्वैधुभिश्चसार्धंतयैवगोष्ठ्यातरुथौनीतप्रथम
यामश्चगणपतिभवने परिकल्पितंशय
नीयमसेवतइतरेषांतु सर्वेषांनिमीलितदृ
शामपिअनुपजातनिद्राणां कमलवनाना
मिवसूर्योदयंप्रतिपालयतांकुतूहलेनकथमपि
साक्षपाक्षयमगात् अथयामिन्यास्तुर्येयामेप्र
तिवुद्धः सएवंवन्दीश्लोकद्वयमगायत

तालध्वनिः अंगुलिजः शब्दः अंतेवासिनः शिष्याः श्रोत्रि
योवेदोपाध्यायः तदनुमतेनसंध्यांससंधारयति बदनव्यग्रत्वा
द्गलताविस्मरतः ग्रंथदंडकाद्गगणात् उद्गिरतियस्तास्मिन्वढ
रामूर्खाः विटाभुंजगप्रायाः वटवोवालाश्चगृहश्रेत्रियैर्वाला
संध्यावंदनाय प्रवर्त्तयंतोनिर्विवेकत्वात् ॥तुर्यश्चतुर्थः

पश्चादंघ्रिंप्रसार्यत्रिकनतिविततं द्राघयि
त्वांगमुच्चैरासज्याभुग्नकंठोमुखमुरसिसटाधू
लिधूम्रा विधूयघासग्रासाभिलाषी दनव
रतचलत्प्रोथतुंडस्तुरंगोमंदंशब्दायमानोवि
लिखतिशयनादुत्थितःक्ष्मांक्षुरेण ॥ १ ॥
कुर्वन्नाभुग्नपृष्ठोमुखनिकटकटिः कंधरामा
तिरश्चींलोलेनाहन्यमानंतुहिनकणमुचांचच
ताकेसरेण निद्राकंडूकषायकषतिनिविडि
तश्रोत्रशुक्तिस्तुरंग स्त्वंगत्पक्ष्माग्रलग्नप्र
तनुबुसकणं कोणमक्ष्णःखुरेण ॥ २ ॥
बाणस्तुतच्छ्रुत्वासमुत्सृज्य निद्रामुत्थायप्र
क्षाल्यवदनमुपास्यसंध्यामुदिते भगवतिसवि
तरिगृहीत तांबूलस्तत्रैवातिष्ठत् अत्रांतरेसर्वे
स्यज्ञातयः

त्रिकंपृष्ठकटीसंधिः द्राघयित्वादीर्घतरीकृत्वा आभुग्नोनमि
तः कंठोयस्यसत् ॥ १०१ ॥ मुखमुरसिआसज्यकृत्वाधूम्राः
धूसराः प्रतानस्योपरिप्रोथः प्रतानमुत्तरौष्ठमध्यंवक्रास्येवदनंतुंड
माननंलपनंमुखं तुहिनमवश्यायःकेसराणिललाटतटस्थाः के
शाःअश्वकुकटिकालंबनः केशपाशोवाकषायमापिंगलं त्वग
दुच्चंकोणंप्रांतं ॥ २ ॥

समाजग्मुःपरिवार्यचासांचक्रुःअसावपिपूर्वोद्घातेनाविदिताभिप्रायः तेषांपुरोहर्षचरितंकथयितुमारेभे श्रूयतांअस्तिपुण्यकृतामधिवासोवासवावासइववसुधामवतीर्णः सततमसंकीर्णवर्णव्यवहारस्थितिः कृतयुगव्यवस्थः स्थलकमलवनवहलतयापोत्रोन्मूल्यमानमृणालैः रुद्गीतमेदिनीसारगुणैरिवकृतमधुकरकोलाहलैरुल्लिख्यमानक्षेत्रः क्षीरोदपयःपायिपयोदसिक्ताभिरिवपुंड्रेक्षुवाटसंततिभिर्निरंतरः प्रतिदिशमपूर्वपर्वतकैरिवखलधानधामाभिर्विभज्यमानैः सम्यकूटैः संकटसीमान्तःसमन्तादुद्घातघटीसिच्यमानैः जीरकजूटैर्जटिलितभूमिरुर्वराशवरीयोभिः शालीयैरलंकृतः

उद्घातःकथाप्रस्तावःअस्तीत्यादौश्रीकंठनामाजनपदोस्तीतिसंबंधः पुण्यकृतोदेवाअपिअधिवासोवसतिःवासवावासःस्वर्गःपोत्रंहलमुखंसाराउत्कृष्टाःअतिमाधुर्यात्क्षीरोदस्याद्युत्प्रेक्षानिरंतरोनिर्विवरः तद्देवकल्पितत्वादपूर्वत्वंखलधानधामाभिःखलपालैः उद्घातः अरघट्टः जीकरःअजाजी जूटःसमूहः उर्वरासर्वसस्याढ्याभूःवरीयोभिरुत्तरैः १०२ शालीयैशालीक्षेत्रैः

पाकविशरारुराजमाषनिकर किर्मीरितैश्च स्फुटित मुद्गफलकोशीकपिशितैर्गोधूमधाम भिस्थलीपृष्ठैरधिष्ठितोमहिषपृष्ठप्रतिष्ठित गायद्गोपालपालितैश्चकीटपटललंपटचटका नुसृतैरवटुघटितघंटाघटीरटितरमणीयै रट द्भिरटवीहरवृषभपीतमामयशंकयाबहुविभ क्तक्षीरोदमिवक्षीरंक्षरद्भिर्वाष्पच्छेद्यतृणतृष्ठै गोधनैर्धवलितविपिनोविविधमख होमधू मांधशतमन्युसक्तैर्लोचनै रिवसहस्रसंख्यैः कृष्णशारैः शारितोद्देशः धवलधूलीमुचांके तकीवनानांरजोभिः पांडुरीकृतैः प्रमथोद्धूल नधूसरैः

युगपत्पाकसंभवाद्विशरारुत्वं किर्मीरैः शबलैः कोशीशिंबि का गोधनस्यक्षतपृष्ठत्वात्कीटसंभवः अवटुः ग्रीवाघंटेवघटी आमयःअजीर्णंहरवृषभेनपीतंसंतमजीर्णसंभावनया बहुधावि भक्तंवाष्पच्छेति सौकुमार्यकथनपरंविपिनंगहनंमुक्तैः पतितैः लोचनान्यपिकृष्णशाराणि सहस्रसंख्यानिच कृष्णशारामृगभे दाश्चप्रमथागणाः प्रवेशैर्मार्गैः ॥

शिवपुरस्येवप्रवेशैः प्रदेशैरुपशोभितः शाक
कन्दल श्यामलितग्रामोपकंठकाश्यपी
पृष्ठः पदेपदेकरभपालीभिः पीलुपल्लवप्र
स्फोटितैः करपुटपीडितमातुलंगीदलरसो
पलिप्तैः स्वेच्छाविचितकुंकुमकेसरकृतपुष्पप्र
करैः प्रत्यग्रफलरसपानसुखसमर्पथिकेवन
देवतादीयमानामृतरसप्रपागृहैरिव द्राक्षां
मंडपैः स्फुरत्फलानांच वाजलग्नशुकचंचु
रागाणामिव समारूढकपिकुलकपोलसंदि
ह्यमानकुसुमानांदाडिमीनांवनैर्विलोभनीयो
पनिर्गमो

प्रवेशैःमार्गैः काश्यपीभूः करभपालीभिरित्थंभूतलक्षणेतृतीया
करभोवालोष्ट्रः पीलुवृक्षभेदः प्रपापानीयशालिका ३ प्रस्फोटि
तैः नीराजनीकृतैः उपनिर्गमनानिनिर्गमनमार्गाः उद्या
नानीतिकेचित्

वनपाल पीयमान नारिकेलरसासवैश्चपथि
कलोकलुप्यमानपिंडखर्जूरै र्गोलांगूललि
ह्यमानमधुरामोद पिंडीरसैश्चकोरचंचुजर्ज्ज
रितारुकैरुपवनैरभिरामः तुंगार्जुनपाली
परिवृतै श्चगोकुलावतारकलुषितकूलकीला
लैरध्वगशतशरण्यै रण्यधरावन्धैरवंध्यव
नरंध्रः करभीयकुमारकपाल्यमानैरौष्ट्रकैरौर
भ्रकैश्चकृतसंवाधोदिशिदिशि रविरथतुरग
विलोभनायेवविलोठनमृदितकुंकुमस्थली र
ससमारब्धानामुत्प्रोथपुटै रुन्मुखैरुदरशायि
किशोरकजवजननायप्रभंजनमिवच पिबं
तीनावातहारिणीनामिवस्वच्छंदचारिणीनां
वडवानांवृन्दैर्विचरद्भिराचितः ॥

अर्जुनाः ककुभवृक्षाः कीलालंतोयंधरावंधास्तडाकानि करभे
भ्योहिताः करभीयाः औष्ट्रकैरुष्ट्रसमूहैः कृतसंवाधः आवृतः
किशोरकावत्साः प्रभंजनंवातः वडवाअश्वाः॥

अनवरतक्रतुधूमांधकारप्रवृत्तै र्हंसयूथैरिव वार्णैर्धवलितभुवनः संगीतगतमुरजरवमत्तै र्मयूरैरिवविभवै र्मुखरितजीवलोकः शशिकरावदातवृत्तैर्मुक्ताफलैरिवगुणिभिः प्रसाधितः पथिकशतविलुप्यमानस्फीतफलै र्महातरुभिरिव सर्वातिथिभिरभिगमनीयो मृगमदपरिमलवाहिमृगरोमाच्छादितै र्हिमवत्पादैरिवमहत्तरैः स्थिरीकृतः प्रोद्दंडसहस्रपत्रोपविष्टद्विजोत्तमै

धूमांधकारप्रवृत्तैर्वर्णैर्धवलितभुवनइतिविरोधछाया हंसानामपि अंधकारप्रवृत्तत्वंतमसिप्रचारात् वृत्तैराविर्भूतैःहंसपक्षेपलायितैः वृत्तंचरितंपरिवर्तुलंचगुणिभिः शौर्यादिगुणयुक्तैःससूत्रैश्चफलमैश्वर्यमपि अभिगमनीयःसेव्यः ४ मृगमदःकस्तूरिकामृगरोमशब्देनतत्कृतवस्त्रमुच्यते यस्यरांकामितिसंज्ञातथाचरांकवंमृगरोमजं अन्यत्रमृगाणांरोमाणिपादाःप्रत्यंपतर्पताः महत्तरैर्वृद्धैःविपुलैश्च सहस्रपत्राणिपद्मानिद्विजोत्तमाःपक्षिश्रेष्ठाब्राह्मणाश्चद्विजोत्तमाः

नारायणनाभिमंडलैरिवतोयाशयैर्मंडित : म
थितपयःप्रवाहप्रक्षालितक्षितिभिः क्षीरोदम
थनारंभैरिवमहाघोषैः पूरिताशःश्रीकंठोनाम
जनपदयत्रः त्रेताग्निधूमास्रुपातजलक्षालिता
इवा क्षीयंतपच्यमानचयनेष्टकादहनदग्धानी
वाद्दश्यंतनदुरितानिछिद्यमानयूपदारुपरशुपा
टितइवव्यदीर्यताधर्मः मखशिखिधूमजलधर
धाराधौतइवननाशवर्णसंकरः दीयमानाने
कगोसहस्रशृंगखंडयमानइवापलायतकलिः

मथितं तक्रंविलोडितंचपयः क्षीरंउभयत्रापिमथनमंथात्क्षीरो
दस्यघोषोगोष्टः शब्दश्चआशाआशंसादिशश्चदक्षिणाग्निर्गा
र्हपत्याहवनीयास्त्रयोग्नयः अग्नित्रयमिदं त्रेतेत्यमरसिंहः अने
कार्थवर्गेपि त्रेताग्नित्रितयेयुगे त्रेताग्निरूपोग्निरित्यग्निप्रकर्षा
र्थैर्त्रेतापदं अन्यथातादृशस्याग्नेर्ग्रहणं प्रसज्येतकुत्सानिलो
कायतादीनांवेदविरुद्धानिदर्शनादीनि कुत्सिताश्च दृष्टयः
कुदृष्टयः यत्रत्रेताग्नयोहूयंते तत्रक्षालिताआविर्भावाद्दृष्टिर्निर्म
लाभवतिचयनंचित्याविशिष्टाग्निस्थानं घनधाराधौतोह्यवश्यंसं
कीर्णवर्णोनीलादिर्नश्यतिवर्णाश्चविप्राद्याः

सुरालयशिलाघट्टनटंकनिकरनिकृत्ताइव
व्यदीर्यंतविपदः महादान विधानकलकला
भिद्रुताइव प्राद्रुवन्नुपद्रवाः दीप्यमानसत्र
महानससहस्त्रसंतापिताइव व्यलीयंतव्या
धयः वृषविवाहप्रहतपुण्यपटहपटुरवत्रासिता
इवनोपासर्पन्नपमृत्यवः ॥ सन्ततब्रह्मघोषव
धिरीकृता इवापजग्मुरीतयः धर्माधिकारप
रिभूतमिवनप्राभवद्दैवंतत्रचैवंविधेनानारामा
भिरामकुसुमगंधपरिमलसुभगो यौवनारं
भइवभुवनस्यकुंकुममलनापिंजरितवहुमहि
षीसहस्त्रशोभितोन्तः पुरनि

टंकः पाषाणदारणः सत्रंसदादानं महानसंपाकस्थानं वृषविवा
होनीलवृषोत्सर्गो यत्रचतसृभिःगोभिःसहदांतोरण्येस्वैरविहारा
यपरित्यज्यतेब्रह्मघोषोवेदध्वनिः अतिवृष्टिरनावृष्टिर्मूषकाः
शलभाःशुकाःअत्यासन्नाश्चराजानःषडेतईतयः स्मृताइति ५
तत्रचेत्यादौस्थाण्वीश्वराख्योजनपदविशेष इतिसंवंधः आरामा
उपवनानिरामाश्चभार्याः गंधस्यपरिमलस्य आभोगःअनुभवः
संस्कारः मलनंनिवर्त्तनं समालंभनंच माहिषीमुख्याजायापि

वेशइवधर्मस्यमरुदुद्धूयमानचमरीवालव्यज
नधवलितप्रान्त एकदेशइवसुरराज्यस्यज्व
लन्मखशिखि सहस्रदीप्यमानदशदिगन्तः
शिविरसन्निवेश इवकृतयुगस्यपद्मासन स्थि
तब्रह्मर्षिध्यानाधीयमानसकलाकुशलप्रशमः
प्रथमोवतारइवब्रह्मलोकस्यकलकलमुखरम
हावाहिनीशतसंकुलोविक्षेपइवोत्तरकुरूणाई
श्वरमार्गणसन्तापानभिज्ञसकलजनोविजि
गीषु

मरुतोवातादेवाश्वाशिविरसन्निवेशःकटकवंधः कृतंप्रातिसमाहि
तं युगंद्वयं स्वपक्षपरपक्षरूपंयेन सराजोच्यतेकृतंयुगंवाद्योयुगभे
दःपद्मासनमासनभेदः पद्ममेवासनंच ब्रह्मर्षय उत्तमाद्विजाः
ब्रह्मा चासावृषिश्चयद्वापद्मासन स्थितोब्रह्माचऋषयश्चेतिंद्वद्वः
वाहिन्योनद्यः सेनाचविपक्षो बलं मेरुसमीपवासिनोजनाःउत्त
रकुरवः ईश्वरमार्गणः राजदंडसाधनया च्चाहरशरश्चेश्वरमार्ग
णः संतापानभिज्ञेति ईश्वरशरणाहि सस्त्रीकं त्रिपुरं दग्धं

रिवत्रिपुरस्यसुधारससिक्तधवलगृहपंक्तिपां डुरः प्रतिनिधिरिव चन्द्रलोकस्यमधुम त्तमत्तकाशिनीभूषणरवभरितभुवनोनामाभि हारइवकुवेरनगरस्य स्थाण्वीश्वराख्योजन पदविशेषः यस्तपोवनमितिमुनिभिः कामा यतनमिति वेश्याभिः संगीतशालेति लास कैः यमनगरमितिशत्रुभिः चिन्तामणिभूमि रित्यर्थिभिः वीजक्षेत्रमितिशस्त्रोपजीविभिः गुरुकुलमिति विद्यार्थिभिः गंधर्वनगरमि तिगायनैः विश्वकर्ममन्दिरमितिविज्ञानिभिः लाभभूमिरितिवैदेहकैः द्यूतस्थानमितिभा गार्थिभिःसाधुसमागमइतिसद्भिः वज्रपंजर मितिशरणागतैः विटगोष्ठीतिविदग्धैः सुकृ तपरिणामइतिपार्थिवैः

योधजनास्तेहियुद्धेदेवै हता इत्याहुःजेतात्रविजिगीषुः सुधाम कालामृतयोः मत्तकाशिनीमुख्यास्त्री यक्षिणीचनामाभिहारः पर्यायांतरं लासकैर्नटैः ॥ ६ ॥ वैदेहकैः वणिग्भिः द्यूतस्था नमिति साधुभागोदीयते तत्रवंदिभ्यः अभिवांछित संपत्तेःसुकृ तपरिणामता ॥

असुविवरमितिवातिकैः शाक्याश्रमइतिश मिभिः अप्सरः पुरमितिकामिभिः महोत्स वसमाजइतिचारणैः वसुधारेतिविप्रैरगृह्यत यत्रचमातंगगामिन्यःशीलवत्यश्चगौर्योविभ वरताश्चश्यामाः पद्मरागिण्यश्चधवलद्विजशु चिवदनामदिरामोदिश्वसनाश्चचंद्रकांतवपु षः शिरीषकोमलांग्यश्च अभुजंगगम्यः कं चुकिन्यश्च

वातिकैर्विवरव्यसनिभिराचार्यैः शाक्योबौद्धः चारणैः कुशील वैः वसुधाराधनप्रवाहः मातंगेत्यादयोविरोधाः मातंगोहस्ती चंडालश्चयाः प्रमदाः चंडालानपि गच्छंतिताकथंशीलवत्य इतिविरोधः सर्वत्रज्ञेयः गौर्यः गौरांग्यः विभवेएश्वर्येरक्तःयत्र विगतोभवः तत्रकथंगौरीरतेति विगतंभवेरतं यस्यावाश्यामाः श्यामलांग्यःपद्मरागिण्योलोहितमणिभूषणाः श्यामारात्रयः कथंपद्मरागिण्यः रात्रौपद्मानांसंकोचात् द्विजैर्दंतैः शुचिवद नाः मदिरावन्मदिरयावा आमोदीश्वसनः मुखमारुतोयासांध वलद्विजवच्छुचिवदनंताःकथंमदिरामोदिश्वसनाः चंद्रवत्कांति वपुर्यासांशिरीषपुष्पवत् सुकुमारांग्यश्चंद्रकांतस्यवपुर्यांताः कथंशिरीषकोमलांग्यः भुजंगाविटः कंचुकस्त्राणांवासोवारवः णाख्ययाश्चकंचुकिन्यः सर्पिण्यः ताःकथंभुजंगैर्न गम्याः ॥

पृथुकलत्रश्रियः दरिद्रमध्यकलिताश्चलाव
ण्यवत्योमधुरभाषिण्यश्चअप्रमत्ताः ॥ प्रस
न्नोज्ज्वलरागाश्च अकौतुकाः प्रौढाश्च
प्रमदाःयत्रचप्रमदानांचक्षुरेवसहजंमुंडमाला
मंडनंभारः कुवलयदलदामानि अलकप्रति
बिंबान्येवकपोलतलगतान्यक्लिष्टाः श्रवणा
वतंसाः ॥ पुनरुक्तानि तमालकिसलयानि
प्रियकथाएवसुभगाः कर्णालंकाराः

कलत्रंजघनंदरिद्रंक्षामंमध्यमुदरंयासांकलत्रस्यपरिवारस्यपृथ्वीः
श्रीःताःकथंदारिद्र्याणांनिर्धनानांमध्येकाक्षिताःसंख्याताभवंति ला
वण्यंसौन्दर्यंमधुरंहृद्यं लावण्यरसवतानांमधुरभाषितंविभाव्यते
अप्रमत्ताःप्रमादशून्याःप्रसन्नोमनोहरोउज्वलोमनोहारीप्रसन्ना
चसुरातया उज्वलोमुखरागोयासांताःकथमप्रमत्ताःअक्षीवाअ
कौतुकाःअकरकंकणाविवाहितानांहिकरकंकणोवबध्यते रुद्रा
क्षदर्पसिद्धार्थशिखिपक्षोरगत्वचः कंकणौषधयश्चेतिकौतुका
ख्याःप्रकीर्तिताःमुंडमालारूपंमंडनंमुंडमालामंडनं ७ सहजकृ
त्रिमं अनेककुवलयदलदामाभ्यासोत्कर्षःनतुकुवलयदलदाम
संभवेपिप्रातिनिधिरूपतापादनं भारइत्यनेनैषएवार्थःप्रकटितः
एवमक्लिष्टाइत्यादौबोद्धव्यं

आडंवरः कुंडलादिःकपोलएवसततमालोक
कारकाःविभवोनिश्वासमणिप्रदीपाः निःश्वा
साकृष्टमधुकरकुलान्येवरमणीयं मुखावरणं
कुलस्त्रीजनाचारोजालिकावाणीएवमधुरावी
णावाह्यविज्ञानंतंत्रीताडनंहासाएवाति शय
सुरभयःपटवासाःनिरर्थकाः कर्पूरपांसवः अ
धरकांतिविसरएवोज्वलतरोंगरागःनिर्गुणो
लावण्यकलंकःकुंकुमपंकःवाहवएवकोमलत
माःपरिहासप्रहारवेत्रलताःविषप्रयोजनानि
मृणालानियौवनोष्मस्वेद निन्दवएवविद
ग्धाः कुचालंकृतयःहारस्तुभारःश्रोण्यएव
विशालस्फाटिक शिलातलचतुरश्राराणि
णांविश्रमकारण

आडंवरः स्फुटः जालिकाशिरोवस्त्रभेदः चतुरश्रारम्याः
विश्रमकारणमितिगुरुत्वात्

मनिमित्तंभवनमणिवेदिकाः कमललोभनि
लीनान्यलिकुलान्येवमुखराणिपदाभरणका
नि निःफलानीन्द्रनीलनूपुराणि नूपुर
रवाहता भवनहंसाएवसमुचिताः संचरण
सहायाः एश्वर्यप्रपंचाः परिजनाःतत्रच
साक्षात्सहस्राक्ष इवसर्ववर्णाधरंधनुर्दधानः
मेरुमयइवकल्याणप्रकृतित्वे मन्दरमयइव
लक्ष्मीसमाकर्षणे जलनिधिमय इवमर्यादा
यां आकाशमयइवशब्दप्रादुर्भावे शशिमय
इवकलासंग्रहे वेदमयइवाकृत्रिमालापत्वे धर
णिमय इवलोकधृतिकरणे पवनमय इवसर्व
पार्थिवरजोविकारहरणे गुरुर्वचासिपृथुरासि

तत्रचेत्यादौ तत्रपुष्पभूतिर्नामराजासीदितिसंबंधः वर्णाविप्राद्याः
शुक्लाद्याश्चकल्याणंश्रेयःसुवर्णंच मंदरेणक्षीराब्धामृतमंथनेपुष्य
भूतिना भैरवाचार्यवेतालसाधने८मर्यादाआचारःसीमाचशब्दो
घोषोपिप्रादुर्भावःप्रकाशताकलागीताद्याःलेखाश्चाकृत्रिमःसत्य
युक्तोपौरुषेयश्च धृतिर्धैर्यंधारणंच पार्थिवोराजापृथिवीसम्बंधी
चरजोविकाराराग्राद्याः रेणुकार्याणि गुर्वित्यादिनावक्तो त्कर्षा
णानांगुर्वादिमयत्वंसूचयति गुरुरुपदेष्टागुरुर्महान् गभीरशब्द
त्वात् वृहस्पति श्च पृथुर्विपुलश्चा दिराजश्चकश्चित्॥

विशालोमनसि जनकस्तपसि सुयात्रस्तेज सिसुमंत्रोहरसि वुधः सदसि अर्जुनोयशसि भीष्मोधनुषि निषधोवपुषि शत्रुघ्नःसमरे शूरः शूरसेनाक्रमणे दक्षःप्रजाकर्मणि सर्वादिराज जतेजः पुंजनिर्मितइवराजापुष्पभूतिरितिना म्नावभूव पृथुनागौरिवेयंकृतेति यःस्पर्धमान इवमहींमहिषींचकार निसर्गस्वैरिणी

विशालोविस्तीर्णोविशालाद्याश्चनृपाअभवत् अथविशालोना मवोधिसत्वःसएवशांतः शांतमनाइत्यपिप्रतीतिरस्ति जनकोज नयिताजनकइवतपस्वीच सुयात्रइतिशोभनायात्रायस्यसोपि क र्तव्यावधारणंमंत्रःसशोभनोयस्येतिचवुधःपंडितःग्रहश्चअर्जुनःशु क्लोपिभीष्मोभयानकोगांगेयश्च निषधोधर्षणीयःकठिनोवा नल स्यचपिता।गिरिभेदोवा शूरोविक्रांतःयदूनांराजाच दक्षश्चतुरःप्रजा पतिश्च महिषीमहादेवीमापिनिसर्गःस्वभावःस्वैरणीस्ववशा १

स्वरुच्यनुवोधिनीभवतिहिमहतांमतिःयतस्त
स्य केनचिदनुपदिष्टासहजैवशैशवादारभ्यान
न्यदेवताभक्तोभगवतिभक्तिसुलभेभुवनभृतिभू
तभावनेभवच्छिदिभवेभूयसीभक्तिरभूत्अकृतवृ
षभ ध्वजपूजाविधिर्नस्वप्नेप्याहारमकरोत्
अजमजरममरगुरुमसुरपुररिपुमपरिमि तग
णपतिमचलदुहितृपतिमखिलभुवनकृतचरण
नतिं पशुपतिंप्रपन्नोन्यदेवताशून्यममन्यतत्रै
लोक्यम् भर्तृचित्तानुवर्तिन्यश्चानुजीविनांप्रकृ
तयः तथाहिगृहेगृहेभगवानपूज्यत खंडपर
शुःवरस्यहोमालवाल

खंडपरशुः शिवः ववुरवहन्होमालवालमाग्निकुंडं

विलीयमानवहलभुग्गुलगन्धगर्भाः स्नपन क्षीरशीकरक्षोदक्षारिणः बिल्वपल्लवदाम दुलोल्लाहिनः पुण्यविषयेषुवायवः शिव सपर्य समुचितै रुपायनैः प्राभृतैश्चपौराः पदोपजीविनः सचिवाभुजवलनिर्जिताश्च करदीकृताः महासामन्तास्तंसिषेविरे तथा हिकैलासकूटधवलैः कनकपत्रलतालंकृत विषाणकोटिभिः महाप्रमाणैः संध्याव लिवृषैः सौवर्णैश्चस्नपनकलशैरर्घभाजनैश्च धूपपात्रैश्चपुष्पपट्टैश्चमणियष्टीप्रदीपैश्चब्रह्म सूत्रैश्च महार्हमाणिक्यखंडखचितैश्च ॥

सपर्यापूजा उपायनंढौकनिकास्वयमानीयते प्राभृतंकोशलि कासास्त्रिभिःप्रहीयते करदीकृताः दंडजाः कृताः कूटंशृंगयत्रव समपुष्पाणिसूत्रैःक्रियतेसपुष्पपट्टः ० ज्वलन्माणिशिखरा स्वर्ण यष्टियंष्टिप्रदीपा ब्रह्मसूत्रैयज्ञोपवीतैः

मुखकोशैः परितोषमस्यमनसिचक्रुः अन्तः पुराण्यपिस्वयमारब्धवालेय तण्डुलखंडनानि देवगृहोपलेपनलोहिततरकरकिसलयानिकुसुमग्रथनव्यग्रसमस्तपरिजनानितस्याभिलषितमन्ववर्तन्ततथाचपरममाहेश्वरःस भूपालोलोकतःशुश्रावभुविभगवन्तमपरमिवसाक्षाद्दक्षमखमथनंदाक्षिणात्यंवहुविधविद्याप्रभावप्रस्यातैर्गुणैः शिष्यैरिवानेकसहस्रसंख्यैर्व्याप्तमर्त्यलोकं भैरवाचार्यनामानं महाशैवम् उपनयन्तिहिहृदयमदृष्टमपिजनंशीलसंवादाःयतःसराजाश्रवणसमकालमेव तस्मिन्भैरवाचार्येभगवति द्वितीयइवकपर्दिनि दूरगतेपिगरीयसीविवन्धभक्तिंश्चाचकांक्षमनोरथैरप्यस्यसर्वथादर्शनं

मुखयुक्ताः कोशाः मुखकोशाः येलिंगोपरिदीयते वलयैर्हिता वालेया छदिरुपधिर्वलेक ग्रथनशब्द श्चिन्तयोग्रथ्नमिति भाव्यं अभिलषितमन्ववर्तन्तेत्यनेनचित्तानुवृत्तिः शुद्धांतानां दर्शिताभुवीति भूस्थत्वेप्यसुलभत्वदर्शनमस्योक्तं ॥१०॥ शील संवादाश्चारित्रसादृश्यानि कपर्दिनिशिवे ॥

अथकदाचित्पर्यस्तेस्ताचलचुंबिनिवासरेन्तः
पुरवर्तिनं राजानमुपसृत्यप्रत्याहारीविज्ञा
पितवती देवद्वारिपरिव्राडास्तेकथयतिचभै
रवाचार्यवचनाद्देवम नुप्राप्तोस्मि इति ॥
राजातुतच्छुत्वासादरंक्कासावानयात्रैवप्रवेश
यैनमितिचाब्रवीत् तथाचाकरोत्प्रतीहारीन
चिराच्चप्रविशंतप्रांशु माजानुभुजंभैक्षक्षाममम
पिस्थूलास्थिभिरवयवैः पीवानमिवोपलक्ष्य
माणं पृथुतमांगमुतुंगवलिभंगस्थपुटललाटं
निर्मांसगंडकूपकं मधुबिंदुपिंगलपरिमंडला
क्षमीषदावक्रघोण मतिप्रलंबैककर्णपाशम
लाबुबीजविकटोन्नतदंतपंक्तिंतुरगानूकश्लथा
धरलेखं लंबचिबुकायततरलपनं अंसावलं
बिना काषायेण योगपट्टकेनविरचितवैक
क्ष्यकं हृदयमध्यनिबद्धग्रंथिनाचरागेणवस्त्र
खंडशः कृतेनधातुरसारुणेनकृतोत्तरासंगं

नचिराच्चेत्यादौमस्कारिणमद्राक्षीदिसंबंधः प्रांशुं दीर्घंजानूरूप
र्वंउक्तंचजंघातुप्रसृताजानूरुपर्वाष्ठीवदस्त्रियां पीवरंस्थूलंस्थपुटं
निम्नोन्नतं ललाटमलिकंगोधिः गंडकूपोक्ष्णोरधोदेशः घोणाना
सिकाअलाबुःतुंबीउक्तंचतुंब्यला बूउभेसमे तुरगानामधस्तादो
ष्टोनूकः अधोधरस्यचिबुकंलपनंमुखं ॥ १३ ॥ उत्तरासंगमुप
रिप्रावरणं

पुनरुक्तवालप्रग्रहवेष्टननिश्चलमूलेन वद्धमृत्परिशोधनवंशत्वक्तितउनाकोपीनसनाथशिखरेण खर्जूरपुटसमुद्गकगर्भीकृतभिक्षाकपालकेन दारवफलकत्रयत्रिकोणत्रियष्टिनिविष्टकमंडलुना वहिरुपपादितपादुकावस्थानेन स्थूलदशासूत्रनियंत्रितपुस्तकापूलकेन वामकरधृतेनयोगभारकेनाध्यासितस्कंधं इतरकरगृहीतवेत्रासिनं मस्करिणमद्राक्षीत् क्षितिपतिरपिउपगतमुचितेनचैऽनमादरेणागृहीत् आसीनंचपप्रछ क्वभैरवाचार्य इतिसादरनरपतिवचनमुदितमनास्तुपरिव्राटतमुपनगरं सरस्वतीतटवनावलंविनि शून्यायतनेस्थितमाचचक्षे भूयश्चावभाषेत्रर्चयतिहिमहाभागंभगवानाशीर्वचसाइत्युक्त्वाचोपनिन्ये योगभारकादाकृष्यभैरवाचार्यप्रहितानिस्त्रवन्ति वहलालोकलिप्तान्तः पुराणिपंचराजतानिपुंडरीकानि ॥

पुनरुक्तंपौनःपुण्येनकृतंप्रग्रहोरज्जुःतितउःचालनीपरिपवनशब्दवाच्यःकोपीनंगुह्यदेशउपचारातदाच्छादनंच खर्जूराख्यस्यवृक्षस्यचसंबंधिभिःपुटैः क्लिष्टैःपत्रैश्चसमुद्गकः कपालभंगःभिक्षायैक्रियतेदारवेकाष्टसंबंधिनिफलकत्रये त्रयःकोणास्तेषुयास्तस्रोयष्टयःतासुनिविष्टः कमंडलुयंत्रतेनयोगभारकेणमात्राभारिकयामस्कारिणंपरिव्राजकमूराजतानिरोप्यानि ॥ १२ ॥

नरपतिस्तुप्रियजनप्रणयभंगकातरंदाक्षिण्य
मनुरुध्यमानोग्रहणलाघवंचलंघयितुमसम
र्थोदोलायमानेनमनसास्थित्वाकथंकथम
प्यतिसौजन्यनिघ्नस्तांनिजग्राहजगादचस
र्वफलप्रसवहेतुःशिवभक्तिरियंनोमनोरथदुर्ल
भानिफलतिफलानियेनैवमस्मासुप्रीयतेभग
वान्भुवनगुरुभैरवाचार्यः श्वोद्रष्टास्मिभगव
न्तमित्युक्त्वाचमस्कारिणंव्यसर्जयत् अनयाच
वार्तयापरांमुदमवाप अपरेद्युश्चप्रातरेवोत्था
यवाजिनमधिरुह्यसमुच्छ्रितश्वेतातपत्रः समु
द्धूयमानधवलचामरयुगलः कतिपयैरेवराज
पुत्रैः परिवृतोभैरवाचार्यसवितारामिवशशीद्र
ष्टुंप्रतस्थे गत्वाचाकिञ्चिदन्तरंतदीयमेवाभि
मुखमापतंतमन्यतमंशिष्यमद्राक्षीत् अप्राक्षी
च्चक्कभवानास्तेइतिसोऽकथयत् अस्यजीर्णमा
तृगृहस्योत्तरेणविल्ववाटिकामध्यास्तेइति ग
त्वाचतंप्रदेशंअवततारप्रविवेशचविल्ववाटिकां

लंघयितुमुत्सो ढुंनिघ्नः स्ववशः अन्यतममपरं उत्तरेणोत्तरस्यां
दिशि (अथेत्यादौभैरवाचार्यं ददर्शेतिसंबंधः कार्पटिकाव्रातेन;

अथमहतः कार्पटिकबृन्दस्यमध्येप्रातरेवस्ना तंदात्तष्टपुष्पिकमनुष्ठिताग्निकार्यं कृतभस्मरे खापरिहारपरिकरे हरितगोमयोपलिप्तक्षि तितलवितते्व्याघ्रचर्मण्युपविष्टं कृष्णकंवल प्रावरणानिभेनासुरविवरप्रवेशाशंकया पा तालान्धकारावासमिवाभ्यसंतंउन्मिषताविं द्युत्कपिलेनात्मेतजसामहामांसविक्रियक्रीत नमनःशिलापंकेनेवशिष्यलोकंलिपन्तंजटी कृतैकदेशलंवमानरुद्राक्षशंखगुटिकेनोद्वंव द्धेनशिखापाशेन वध्नन्तामिवाविद्यावलेपदुर्वि दग्धानुपरिसंचरतःसिद्धान् धवलकतिपय शिरोरुहेणवयसापंचपंचाशतंवर्षाण्यतिक्रा मन्तं खालित्यक्षीयमाणशंखलोमशकर्णश ष्कुलीप्रदेशंपृथुललाटतटंतिरश्यामभस्म ल लाटिकयावहुशःशिरोर्ध्वधृतदग्धगुग्गुलसं तापस्फुटितकपालास्थिपांडुरराजिशंका मि वजनयन्तं ॥

अष्टपुष्पकाप्रागुक्तपरिहारोत्रमर्यादा ॥ १२ ॥ शंखेललाट स्थि उक्तंचशंखोनिधौललाटास्थि गुडकाखंडिकाउपरी त्याद्य भिप्रायेणोक्तमूर्ध्ववदनेति प्रशस्ताशिखाशिखापाशः अवलेपो हंकृतिःखालित्यंखल्वाटता शंखोललाटास्थिशष्कुलीकुहरं ॥

सहजललाटवलिभंगसंकोचितकूर्चभागंवभ्रु
भासंभ्रूसंगत्यानिरंतरमायामिनी मेकामे
वभ्रूलेखां विभ्राणं ईषत्काचरकनीनिके
न रक्तापांग निर्गता शुभ्रतानेनमध्यधवल
भासाइंद्रायुधेनवातिदीर्घेण लोचन युगलेन
परितोमंडलमिवा नेकवर्णराग मालिखंतं
सितपीत लोहितपताका वलीशवलंशिव व
लिमिवादिक्षुविलिपन्तंतार्क्ष्यतुंडकोटिकुटिला
ग्रघोण दूरविदीर्णसृक्किसंक्षिप्तकपोलंकिंचि
द्दंतुरतया सदाहृदयसन्निहित हरमौलिच
न्द्रातपेनैव निर्गछतादंतालोकेनधवलयन्तं
दिशांजालं जिव्हाग्रस्थितसर्वशैवसंहितातिं
भारेण वमनाक्प्रलंवितौष्टंप्रलंवश्रवणपाली
प्रेंखिताभ्यां स्फाटिककुंडलाभ्यांशुक्रवृहस्प
तिभ्यामिव सुरासुरविजयविद्यासिद्धिश्रद्ध
यानुवध्यमान

कूर्चमस्त्रीभ्रुवोर्मध्यं काचरापीतवर्णा तुंडमुखंकोटिः प्रांतः चंच
ग्रं ॥ १४ ॥ प्रांतावोष्टस्यसृक्किनी प्रकोष्टमंतरंविद्यादरत्निमणिवं
धयोः (पूष्णोरविभिदस्यपुरादक्षयज्ञगतस्यहरांनिंदतोमध्यनागते
किमर्थमागतोसीतिमुष्टिप्रहारेणहरेणदंताभग्ना तत्करस्यैशन
पावनत्वात्तत्रभक्तिः अखिलस्यरसस्यकूपादुदंचनायघटीयंत्रमा
लापि भ्रम्यते

वद्धविविधौषधिमंत्रसूत्रपंक्तिना सलोह
वलयेनैकप्रकोष्टेन शंखखंडपूषणोदंतमिव
भगवताभवेनभग्नभक्त्याभूषणीकृतंकलयंत
अखिलरसकूपोदंचनघटीयंत्रमालामिवरुद्रा
क्षमालांदाक्षिणेनपाणिनाभ्रमयंतं उरसीदो
लायमानेनापिंगलाग्रेणकूर्चकलापेनसंमार्ज
यंतमिवांतर्गतंनिजरजोनिकरं अतिनिविडनी
ललोममंडलनिचितंचध्यानलब्धेनज्योतिषा
दग्धमिवहृदयदेशंदधानंईषत्प्रशिथिलवलिव
लयवध्यमानतुंडमुपचीयमानास्फिक्मांसपिंड
कं पांडुरपवित्रक्षौमावृतकौपीनं सावष्टंभ
पर्यंकवंधमंडलितेनामृतफेनश्वेतरुचायोगप
ट्टकेनवासुकिनेवाप्रतिहितानेकमंत्रप्रभावावि
र्भूतेनप्रदक्षिणीक्रियमाणं अरुणतामरससुकुमा
रतलस्यपादयुगलस्यनिर्मलैर्नखमयूखजाल
कैर्जर्जरयंतमिवमहानिधानोद्धरणरसेन र
सातलम्

दोलायमानत्वेनसंमार्जनसंभावना कलापग्रहणंमार्जनीसादृ
श्यार्थं रजोरागोरेणुश्चविचितंव्याप्तंतुंडमुदरंस्फिजावुभे इतिप्र
सिद्धस्त्रियांस्फिजौकटीप्रोथावित्यमरःफेनवत्तेश्चश्वेता १५ वासु
किनेवेतिनसामान्यनेतिप्रभावपरिशोधकं जर्जरयन्तंखण्डशःकु
र्वाणम् ॥

तोयक्षालितशुचिनाधौतपादुकायुगलेनहंस मिथुनेनेवभागीरथीतीर्थयात्रापरिचयागते ना मुच्यमानचरणांतिकं शिखरनिखातकु व्जकालायसकंटकेनवैणवेनविशिखिकादंडे नसर्वविद्यासिद्धिविघ्नविनायकापनयनांकुशे नेवशततपार्श्वे वर्तिनाविराजमानं अवहुभा षिणंमंदहासिनं सर्वोपकारिणंकुमारब्रह्म चारिणमतितपस्विनंमहामनस्विनंकृशक्रो धं अकृशानुरोधमहानगरमिवादीनप्रकृति शोभितंमेरुमिवकल्पतरुपल्लवराशिसुकुमार छायंकैलासमिवपशुपतिचरणरजः पवित्रि तशिरसं शिवलोकमिवमाहेश्वरगणानुयातं जलनिधिमिवानेकनदनदीसहस्त्रप्रक्षालित शरीरं ॥

तोयेत्यादि हंसमिथुनस्यापिविशेषणं शिखरेत्यादिनाकुशस। हश्यंबिशाखिकादंडस्योकंनिखातउत्कीर्णः कालायसंशस्त्रभे दःविशाखिका खनित्रिकाविघ्नइवविनायकोगजाननः प्रकृतिः स्वाभावोमायादिकाचराशिवत्तेनचसुकुमाराः गणाः समूहाः प्रमथाश्वनदनदीयेकशेषायुक्तः सहस्त्रेषुतैः प्रक्षालितशिराः

जाह्नवीप्रवाहमिवबहुपुण्यतीर्थस्थानं शुचिं धामधर्मस्यतीर्थंतथ्यस्यकोशंकुशलस्यपत नंपूतनायाः शालांशीलस्यक्षेत्रंक्षमायाःशा लेयंशालीनतायाःस्थानंस्थितेराधारंधृतेरा करंकरुणायानिकेतनंकौतुकस्यारामंरामणी यकस्यप्रासादंप्रसादस्यागारंगौरवस्यसमा जं सौजन्यस्यसंभवंसद्भावस्य कालंकलेःभ गवन्तं साक्षादिवविरूपाक्षं भैरवाचार्यंददर्श भैरवाचार्यस्तुदूरादेवराजानंदृष्ट्वाशशिनमि वजलनिधि श्चचाल प्रथमतरोत्थिताशिष्य लोकश्चोत्थायप्रत्युज्जगामसमर्पित श्रीफलो पायनश्चजह्नुकर्ण समुद्गीर्यमाण गंगाप्रवाह ह्रदगभीर यागिरास्वस्तिशब्दमकरोत्

तीर्थेषुयन्स्थानंवसनंतेनशुचिंतीर्थस्नानैः कनखलाद्यवस्थिति भिश्चशुचिः १६ शालीनताविनीतत्वंनिकेतनंगृहंतत्रहिसर्व स्यकौतुकोजायतेशश्यपिराजानंचदूरादेव दृष्ट्वाजलनिधिश्चल तिगांभीर्यांच्चजलनिधिरेवेत्युक्तंविल्वं श्रीफलंगंगेत्यादिनापवि त्रत्वमाह

नरपतिरपिप्रीतिविस्तार्यमाणधवलिम्नाच क्षुषाप्रत्यर्पयन्निवबहुतराणिपुंडरीकवनानि ललाटपट्टपर्यस्तेनचोदंशुनाशिखामणिना महेश्वरप्रसादमिवतृतीयनयनोद्गमेनप्रका शयन्नावर्जितकर्णपल्लवपलायमानमधुकरः शिवसेवासमुन्मूलिता शेषपापलवमुच्यमा नइवदूरावनतः प्रणाममभिनवंचकार आ चार्योप्यागच्छात्रोपविशेति शार्दूलचर्मात्मा यमदर्शयत् उपदर्शितप्रश्रयस्तुराजामत्तहं सकलगद्गदस्वरसुभगां मधुरसमयीं महान दीमिवप्रवर्तयन्वाचंव्याजहारभगवन्नार्हसि मामन्यनृपस्खलितैः खलीकर्तुं अशेषराज कोपेक्षितायाराजलक्ष्म्याःखल्वपशालिपरा धःद्रविणदौरात्म्यंवायदेवमाचरतिमयिगुरुः अभूमिरयमुपचाराणामलमतियंत्रणयादूर स्थितोपिमनोरथशिष्यः

धवलिम्नेत्यनेनपुंडरीकानां धवलत्वमाहप्राभृतपुंडरीकानांराज तत्वात् आवर्जितनमितंस्वरवज्ञतेनसुभगात् शार्दूलोव्याघ्र ॥ १७ ॥ अंतः करणंमनः गौरवमुत्कर्षोभारवत्त्वंच ॥

अयंजनोभगवतांमाननी यंचगुरुवन्नोल्लघन
महतिगुरोरासनंआसतांच भवंतएवात्रइति
व्याहृत्यपरिजनोपनीतेवाससि निषसादभै
रवाचार्योपिप्रीत्यानतिक्रमणीयं नृपवचन
मनुवर्तमानः पूर्ववत्तदेवव्याघ्राजिनमभज
तत्रासीनेचसराजकेपरिजने शिष्यजनेच
समुचितमर्घ्यादिकं चक्रेक्रमेणचनृपमाधुर्य
हृतान्तः करणशशिकरनिकरविमलादशन
दीधितीः स्फुरन्तीः शिवभक्तीरिवसाक्षा
द्दर्शयन्नुवाच तात अतिनम्रतैव तेकथयति
गुणानांगौरवं सकलसंपत्पात्रमासिविभवानु
रूपास्तुप्रतिपत्तयः जन्मनःप्रभृत्यदत्तदृष्टिर
स्मिस्वापतेयेषुयतः सकलदोषकलापानले
ष्वधनैर्धनैरविक्रीतं क्वचिच्छरीरकमास्तिभैक्षर
क्षिताः संतिप्राणाः दुर्गृहीतानिकानिचिद्विद्य
न्तेविद्याक्षराणि

अदत्त दृष्टि रिति ननुमया धनान्यलभ्यानि स्वापतेयेषुधने
षुसंरक्षिता इति यदि कदा चित्क्वचिदुप योगंयास्यंतीति अ
नेन प्राणादि दान मे वोचित मित्यु क्तम् ॥ १९ ॥

भगवाच्छिवभट्टारकपादसेवयासमुपार्जिताकि
यत्यपिसन्निहितापुण्यकाणिकास्वीक्रियतांय
दत्रोपयोगार्हं प्रतनुगुणग्राह्यानिकुसुमानीव
हिभवन्ति सतांमनांसिअपिचविद्वत्सम्मताः
श्रूयमाणाअपिसाधवः शब्दाइवसुधीरेपिहि
मनसियशांसिकुर्वंतिविवशंविशतः कुतूहल
स्यफेनधवलैः स्रोतोभिरिवापाह्रियमाणोगु
णगणैरनीतोस्मिकल्याणिन इतिराजातुतं
प्रत्यवादीत् भगवन्अनुरक्तेष्वपिशरीरादि
षु साधूनांस्वामिनएवप्रणयिनः युष्मद्दर्श
नादुपार्जितमेवचापारिमितं कुशलजातंअने
नैवागमनेनस्पृहणीयंपदमारोपितोस्मिगुरु
णा इतिविविधाभिश्चकथाभिश्चिरंस्थित्वा
गृहमगात् अन्यस्मिन्दिवसेभैरवाचार्योपिरा
जानंद्रष्टुं ययौतस्मैचराजा सान्तःपुरंसप
रिजनं सकोशमात्मानंनिवेदितवान् सचवि
हस्योवाच

सकलसंपत्पात्रस्येयतःकियतीवसुसम्पातिर्भविष्यतीत्याशंक्याह प्र
तन्वित्यादि गुणाउत्कर्षा स्तंतवश्चकुसुमानीवेति कुसुमसादृश्येन
मनसस्सौकुमार्यमप्युक्तं साधवःशिष्टाःशब्दाइवसाधवः संस्कृता
विद्वत्संमताश्चफेनवत्तैश्च

तात क्वविभवाः क्वचवयंवनवार्धिताःधनोष्मणाम्लायंत्यलंलतेवमनस्विताखद्योतानामिवास्माकामियमपरोपतापिनीराजते तेजस्विता भवादृशाएवभाजनंभूतेरितिस्थित्वा चकंचित्कालंजगामपरि व्राट्तेनैवक्रमेण पचराजतानिपुंडरीकान्युपायनीचकार एकदातुश्वेतकर्पटावृतंकिमप्यादायप्राविशत् उपविश्य चपूर्ववत्स्थित्वामुहूर्तमब्रवीत् महाभागवन्तमाहभगवान् यथास्मच्छिष्यःपातालस्वामिनामाब्राह्मणः तेनब्रह्मराक्षसहस्तादपहृतोमहासिरट्टहासनामासोऽयंभवद्भुजयोग्योगृह्यतामित्यभिधायापहृतकर्पटावच्छादनात्परिवाराद्दाचकर्ष ॥

धवलैर्गुणगणैः स्रोतोभिश्चस्वमिनएवप्रणयिनइति अनुक्तान्यपिशरीरादीनिप्रणयिनांस्वायत्तानीत्यर्थः

शरद्गगनतलमिवापिंडतांनीतं कालिन्दीप्रवाहमिवस्तंभितजलं नन्दकजिगीषयाकृष्ण कोपितं कालियमिवकृपाणतांगतं लोकविनाशायप्रकाशितधारासारं प्रलयकाल मेघखंडमिवनभस्तलात्पातितं दृश्यमानविकट दन्तमंडलं हासमिवाहिंसायाः हरिवाहुदंडमिवकृतदृढमुष्टिग्रहंसकलभुवनजीवितापहरणक्षमेन कालकूटेनेवानिर्मितं कृतान्तकोपानलतप्ते नेवायसाघटितं अतितीक्ष्णतयापवनस्यर्शेनापिरुषवक्कणन्तं मणिसभाकुट्टिमपतत्प्रातिविंवछद्मनात्मानमपिद्विधवपाटयंतं अतिशिरच्छेदलग्नैः

खद्योताःकीटमणयः ॥ १९ ॥ महाभागेतिप्रस्तुतानुगुणमामंत्रणं परिवाशदाचकर्षकृपाणमितिसंवंधः ॥ पिंडशस्त्रंउक्तंचलोहोस्त्रीशस्त्रकंतीक्ष्णंपिंडंकालाय सायसीतिस्तंभितंधृतं रक्षितमंतज्जलंयस्यतं किलकृपाणस्यवापानीयंयंत्रेणाक्रियते नंदकोविष्णुखड्गः कालियोनागभेदः धाराणामासारः धारारूपश्चासारःदंतमंडलंदंतचक्रवालं दशनसमूहश्चमुष्टिःत्सरुः असुरभेदश्चअतितीक्ष्णतयेति तैक्ष्ण्यंतानवाद्भवतितनुचपरस्यरस्यर्शेनक्कणातितथाचातितीक्ष्णोति दंडप्रकृतिःरोषेणहुंकरोति

कचैरिवाकिरणैः करालितधारंमुहुर्मुहुस्तडिदु
न्मेषतरलैः प्रभाचक्रच्छुरितैर्जर्जरितातपरवं
डशाच्छिदंतामिवादिवसंकटाक्षमिवकालरात्रेःक
र्णोत्पलमिवकालस्यउँकारमिवक्रौर्यस्यअल
कारमहंकारस्यकुलमित्रंकोपस्य देहंदर्पस्य
सुसहायंसाहसस्य अपत्यंमृत्योः आगमन
मार्गलक्ष्म्याः निर्गमनमार्गकीर्तेः कृपाणम्
अवनिपतिस्तुतंगृहीत्वाकरेणायुधप्रीत्याप्र
तिमानिभेनालिंगन्निवसुचिरंददर्श सन्दिदे
शचवक्तव्योभगवान्परद्रव्यग्रहणावज्ञादुर्वि
दग्धमपिहिममनोयुष्मद्विषयेनशक्नोतिवचन
व्यतिक्रमव्यभिचारमाचरितुमिति परिव्राट्तु
गृहीतेतस्मिन्परितुष्टःस्वस्तिभवतेसाधयाम
इत्युक्त्वानिरयासीत् नृपश्चप्रकृत्यावीररसानु
रागीतेनकृपाणेनामन्यतकरतलवर्तिनींमेदि
नीम्

कचैः केशैः ॥ २० ॥ करालिताव्याप्ताः साधयामः स्वकर्म
सिद्धिंविदध्मः मंगलत्वाद्गच्छामइतिनोक्तम् ॥

अथव्रजत्सुदिवसेष्वेकदा भैरवाचार्योराजान
मुपह्वरे सोपग्रहमवादीत् तातस्वार्थालसा
परोपकारदक्षाश्च प्रकृतयोभवंति भव्यानांभ
वादृशांचार्थिदर्शनंमहोत्सवः प्रणयनमाराध
नंअर्थग्रहणमुपकारः भूमिरसिसर्वलोकमनो
रथानांयेनाभिधीयसेश्रूयतांभगवतोमहाका
लहृदयनाम्नोमहामंत्रस्यकृष्णस्रगंवरानुलेपे
ना कल्पेनकल्पकाथितेनमहाश्मशानेजप
कोट्याकृतपूर्वसेवोस्मितस्यवेतालसाधनाव
सानासिद्धिः असहायैश्चसादुरवापात्वंचाल
मस्मैकर्मणेत्वयिचगृहीतभरेभविष्यंत्यपरेस
हायास्त्रय एकः सएवास्माकंटिटीभनामावा
लमित्रंमस्करीयोभवंतमुपतिष्ठतेद्वितीयः स
पातालस्वामीअपरोमच्छिष्यएकर्णतालना
मद्राविडःयदिसाधुमन्यसेततोनीयतामयंदि
ङ्नागहस्तदीर्घोगृहीताट्टहासोनिशामेका

उपह्वरेप्रच्छन्ने सोपग्रहंसाभ्यर्थंतंप्रणयनं याचनं २१ ॥ मन
रथाना मिति रथाश्चभूमौवहंति आकल्पेनवेशेनइतिकर्तव्यता
कलापोपदेशकोग्रंथः कल्पः अलंपर्याप्तः उपतिष्ठतइतिसंग
तिकरणेतङ्परिग्रहणंस्वीकारः ॥ २२ ॥ दीक्षितःकृतनियमःअ
धिवासोनियमदिवसादाद्येहनि

मेकदिङ्मुखार्गलतांवाहुरितिकृतवचासिचत स्मिन् अंधकारंप्रविष्टइवदृष्टप्रकाशः प्रा प्तोपकाशवकाशः प्रमुदितेनांतरात्मनान रेन्द्रः समभाषत भगवन्परमनुगृहीतोस्म्यने नशिष्यजनसामान्येनानिर्देशेनकृतपरिग्रहामि वात्मानमवैमीतिननन्दचेतननरेन्द्रव्याहृतेन भैरवाचार्यः चकारचसंकेतं अस्यामेवागामि न्यामसितपक्षचतुर्दशीक्षपायामियत्यांवेला याममुष्मिन्महाश्मशानसमीपभाजिशून्याय तने शस्त्रद्वितीयेना युष्मताद्रष्टव्यावयमिति अथातिक्रांतेष्वहःसु प्राप्तायांचतस्यामेवकृ ष्णचतुर्दश्यांशैवेनविधिनादीक्षितः क्षितिपो नियमवानभूत् कृताधिवासंचसंपादितगंध पुष्पधूपमाल्यादिपूजंखड्गमट्टहासमकरोत् ततः परिणतेदिवसेकेनापिकर्मसाधनाय कृ तरुधिरवलिविधानास्विऽवलोहितायमानासु दिक्षुरुधिरवलिलंपटासुचवेतालजिव्हास्विव लंवमानासुचरविदीधितिषु नरेन्द्रानुरागेण गृहीतापरदिशि स्वयमिवाद्रक्यालतां वि कीर्षतिसावितरि ॥

यथाशास्त्रंविधिनामंत्रन्यासादिः पर्वपूजेतियावत् ततइत्यादीत तोस्मिन्सतिराजा नगरान्निरगादिति सं वं धः

यातुधानीष्विव वर्धमानासु तरुछायासु पा तालवासिषु विज्ञायदानवेष्विवोत्तिष्ठत्सुत मोमंडलेषु नभसिपुंजीभवतिरौद्रंकर्मदिदृ क्षमाणइव नक्षत्रगणेविगाढायांशर्वर्यांसुप्त जननिः शब्देस्तिमितेनिशीथेराजासान्तःपु रंपरिजनंवंचयित्वा वामकरस्फुरत्स्फुरोद क्षिणकरेणोत्खातंखड्ग मट्टहासमादायवि स र्पताचखड्गप्रभापटलेन नीलांशुकपटेनेवदर्श नभयादवगुंठितनिखिलगात्रयष्टिः अनादि ष्टयाप्यनुगम्यमानोराजलक्ष्म्यापृष्ठतः परि मलल‍ग्नमधुकरवेणिव्याजेनकेशेष्विव कर्म सिद्धि माकर्षन्नेकाकीनगरान्निरगात् अग्ग न्नतमुद्देशं अथप्रत्यजग्मुस्तेत्रयः द्रौणिकृप कृतवर्माणइव सौप्तिकेसन्नद्धाः स्नाताः स्त्रग्वि णोगृहीतविकटवेशाःकुसुमशेखरसंचारिभिः क्रियमाणमं त्रशिखावंधाइवगुंजद्भिः षट्चर णैः उष्णीषपट्टिकांछलामममध्यघटितविकट स्वस्तिकाग्रथीन्महामुद्रावंधा ॥

यातुधानीषुराक्षसीषु पुंजीभवतीतिकृष्णशब्द्यांनक्षत्र गणपुंजी भावो लक्ष्यते दिदृक्षयोपीतस्ततःपुंजीभवंति विगाढायांघना यांनिशीथेर्धरात्रेनलिख्यादिसहोपमेयं २३ सुप्तेषुभवंसौप्तिकंधृ ष्टद्युम्ना धिष्ठिताक्षौहिणीविनाशायदुर्योधनप्रेरितादिवार्जुनाधि ष्ठितानांनींकचिदेषां शक्यमितिरात्राववस्कंदमयछन्निति वाचां सन्नद्धःसकवचःउक्तंचसन्नद्धोवर्मितः सज्जोदंसितोव्यूढकंकटः

निवधारयंतोमूर्धभिः एकश्रवणविवरविततवि मलदंतपत्रप्रभालोकलेपधव लितकपोलैर्मुखै रापिबंतइव निशाचरापचयाचिकीर्षयाशार्वरमं धकारंइतरकर्णावलंबिनां रत्नकुंडलानामच्छा च्छयारुचागोरोचनयेवमंत्रपरि जप्तयासमाल ब्धाः स्वयप्रतिविंवगर्भाक्कर्मसिद्धयेदत्तपुरुषो पहारानिवोल्लासयन्तो निशितान्निस्त्रिंशान् न्निस्त्रिंशांशुसन्तानसीमंतिततिमिरा मात्मीया त्मीयदिग्भागसंरक्षणाय त्रिधेवात्रियामांपाट यंतःसार्धचन्द्रैः कलधौतवुद्बुदावलितरलता रागर्णैर्निशाय इवपरुषासिधारानिकृतैः ख ण्डैर्गृहीतैश्चर्मफलकैरकांडशवरी मपरांघट यन्तः कांचनशृंखलाकलापनियमितनिविड निष्प्रवाणयःवद्धासिधेनवः टौटभकर्णताल पातालपातालस्वामिनः निवेदयंतश्चत्मानम्

अपचयोहानिः गोरोचनये वेतिंसहोपमेयं उल्लासयंतश्चालयं तः सार्धचन्द्रै रितिनिशायांखद्गेषुचंद्रखंडस्यसंभाव्यमानत्वादे वमुक्तं नतुवस्तुवृत्तेनकृष्णचतु र्दशीक्षपापांचंद्रः संभवतीतिकल धौतंहेमरौप्पंवात्रुद्बुदावलिर्विन्दुपंक्तिः चर्मफलकैः स्फटकैः ए कस्यावतमानत्वादाहापरामि वेति २४ ॥ निष्प्रवाणिनववं स्त्रउक्तंचत्रनाहतंनिष्प्रवाणितंत्रकंचनवांवरेत्रासिधेनुः कृपाणं

अवनिपतिस्तुकोऽत्रकइतिशीनपृछत् आच
चक्षिरेचस्वंनामत्रयोपितेतै रेवचानुगम्यमा
नोजगामतांवलिदीपालोकजर्ज रितग्गुजुल
धूपधूमगृह्यमाणादिग्भागतया विक्षिप्यमानर
क्षासर्षपावदग्धांधकारपलायमाननिशामिव
समुपकाल्पितसर्वोपकरणां निःशब्दांचगंभीरां
चभीषणांच साधनभूमिंतस्यांचकुमुदधूलिध
वलनभस्मनालिखितस्य महतोमंडस्यमध्ये
स्थितंदीप्ततरतेजः प्रसरंपृथुपरिवेशप्रक्षिप्त
मिवशरत्सवितारं मथ्यमानक्षीरोदावर्तवर्ति
नमिवमन्दिरं रक्तचंदनुलेपिनोरक्तस्त्रगंवराभ
रणस्योत्तानशयस्य शवस्योरस्युपाविश्य जा
तजातवेदसिमुखकुहरेप्रारब्धाग्निकार्यंकृष्णो
ष्णीषं कृष्णांगरागंकृष्णप्रतिसरंकृष्णवास
संकृष्णतिलाहुतिनिभेनविद्याधरत्वतृष्णाया

कोत्रकइतिवाक्यैकदेशोयंअत्रकः कः स्थितइत्यर्थः वलीत्य
दिनार्धदग्धत्वसंभावनंअर्धदग्धस्यपलायनमुचितं नचवहुदग्ध
स्यपलायंश्चादिग्भागान्गृह्णाति सर्षपोगौरसिद्धार्थः तस्यांचेत्या
दौभैरवाचार्यमपश्यदितिसंवंधः पृथुपरिवेशेत्यादिना भीषणीय
त्वमुक्तं परिवेशः परिधिः परिक्षिप्तंपरिवलितंशरादिसवितादीप्त
तरतेजःप्रसरोभवतीतिशरद्ग्रहणं जातउत्पन्नोनतूत्क्षिप्तः प्रति
सरोहस्तसूत्रं ॥

मानुषनिर्माणकारणकालुष्यपरमाणू निवक्ष यमुपनयंतं आहुतिदानपर्यस्ताभिः प्रेतमुख स्पर्शदूषितंप्रक्षालयंतामिवाशुशुक्षाणिं करन खदीधितिभिः धूमालोहितनचक्षुषाक्षतजा हुतीमिवहुतभुजिपातयन्तंईषद्विवृताधर पुट प्रकटितसितदशनाशिखरेण दृश्यमानमूर्तमं त्राक्षरपंक्तिनेवमुखेन किमपिजपंतं होमश्र मस्वेदसलिलप्रतिविंविताभि रासन्न दीपि काभिर्दहन्तमिव सिद्धयेसर्वावयवान् अंसाव लंविना वहुगुणेनविद्याराजेनवब्रह्मसूत्रेणप रिगृहीतं भैरवाचार्यमपश्यत् उपसृत्यचाक रोन्नमस्कारं अभिनन्दितश्चतेनस्वव्यापार मन्वतिष्ठत् अत्रांतरेपातालस्वामी शातक्र तवीमाशामंगीचकारकर्णतालः कौवेरींपरि व्राट्प्राचेतसीम्

दिक्षुकांडसूत्रप्रतिवंधइति अन्यातिलानांकृष्ण त्वात्परिमाणूना मपिकालुष्यकथनं ॥ २५ ॥ क्षतजेतिप्रस्तावनानुगुण्येनरक्ता हुतिःसंभाव्यतेजपवशादीषदित्याद्युक्तं ईषद्विवृतत्वादेवशिख रग्रहणंप्रातिविंवादानोपपादनार्थं मासन्नपदंगुणास्तंतवोगुणनं गुणः पौनःपुन्यमावर्तनंच उत्कर्षोवागुणाःविद्याराजोमंत्र विशेषः। शातक्रतावीपूर्वांअंगीचकारेत्यनेनसर्वेषांस्वस्वदिचिपरि गृहीतत्वमुक्तंकौवेरीमुत्तरां प्राचेतसींपश्चिमाम्

राजातुत्रैशंकवेन ज्योतिषांकितांककुभमलं कृतवान् एवंचावस्थितेषुदिक्पालेषु दिक्पालभुजपंजरप्रविष्टे विस्रब्धं कर्मसाधयतिभैरवंभैरवाचार्ये अतिचिरंकृतकोलाहलेषु निष्फलप्रयत्नेषुप्रत्यूहकारिषुशान्तेषुकौणपेषु गलत्यर्धरात्र समयेमंडलस्यनातिदवीयस्युत्तरेणाकस्मात्प्रलयमहावराहदंष्ट्रा विवरमिवदर्शयन्तीक्षितिरदीर्यत सहसैवचतस्माद्विवराद्दाशावारणोत्क्षिप्त इवालानलोहस्तंभःमहावराहपीवरस्कंधपीठो नरकासुरइवभुवोगर्भादुद्भूतः बलिदानवइवभित्त्वोत्थितःपातालंइन्द्रनीलप्रासाद इवोपरिज्वलितरत्नप्रदीपः स्निग्धनीलघननिविडकुटिलकुंतलकांतमौलि रुन्मीलन्मालती मुंडमालः गद्गदतयास्वरस्यस्वभावपाटलतयाचचक्षुषःक्षीवइवयौवनमदेन

त्रिशंकुरिक्ष्वाकुवंश्यःशापाच्चंडालतांप्राप्तोयज्ञेन स्वर्गमारुरुक्षुरर्धपथेदेवैर्निवारितोदक्षिणस्यांदिश्युदेति तेनत्रैशंकवेनज्योतिषांकितांककुभंदिशंदक्षिणां दक्षिणस्यामित्युक्तोनिष्टप्रतीतिरितित्रैशंकवेनेत्युक्तंविस्रब्धमिति एतदर्थमेवराज्ञादीनांपरिग्रहः प्रत्यूहोविघ्नःकौणपेषुराक्षसेषु सहसैवादौकुवलयश्यामलःपुरुषउज्जगामेतिसंबंधः ॥ २६ ॥

वलाद्गलदामकः करसंपुटमृदितयामृदादिङ्नागकुंभाभावंसकूटौपुनः पुनःपंकयन्सान्द्रचन्दनकर्दमदत्ते स्थयवस्थास्थासकैरतिसितजलधरशकलशारितइवशारदाकाशैकदेशः केतकीगर्भपत्रपांडुरस्यचंडातकस्योपरिक्षामतरीकृतकुक्षिः कक्ष्यावंधंविधायविलासविक्षिप्तेनधवलव्यायामफालीपटांतेन धरणीतलगतेनधार्यमानइवपृष्ठतः शेषेणास्थिरस्थूलोरुदंडोभूमिभंगभयेनेवमन्थराणिस्थापयन्पदानिनिर्भरगर्वगुरुकथमपिशैलमिवगात्रमुद्वहन् दर्पेणमुहुर्मुहुरुच्छ्वसिद्भिगुणिते दोष्णिवामेतिर्यगुत्क्षिप्ते चदक्षिणजंघाकांडे कुंडलितेचंडास्फोटनटांकारैः कर्मविघ्ननिर्घातानिवपातयन् एकेन्द्रियविकलमिवजीवलोकं कुर्वन्कुवलयश्यामः पुरुषउज्जगामजगादचाविहस्य ॥

लोहस्तंभेति लोहशब्देन सारता कृष्णता चोक्तागर्भान्मध्यादुदराच्च घनाःनिविडाः निविडकूलाः अतिकुंचिताः कुंतलकेशाः मौलिःचूडाकिरीटंच उक्तंचचूडाकिरीटंकेशाश्चसंहतमौलय स्त्रयः) स्थासकैः चंद्रकैः फालीकक्ष्यावंधः शेषेणेतिशेषोधवलो धराणितलगतश्च पटांतेनापिविशेषेणावतिष्ठतेफोटनवाल्हावादे शब्दाः एकेन्द्रियमर्थांचलोत्रं ॥ २७ ॥

नरसिंहनादनिर्घोषघो रया भारत्याभोविद्या धरीश्रद्धाकामुककिमयंविद्यावलेपः सहायम दोवायदस्मैजनाय अविधायवलिंवालिशइ वसिद्धिमाभिलषिसि कातेदुर्बुद्धिरियंएताव ताकालिनक्षेत्राधिपति रस्यमन्नाम्नैवलब्धठय पदेशस्यनागतस्ते श्रोत्रोपकंठंश्रीकंठनामा नागोहंअनिच्छ।तिमयिका।शक्तिग्रहेगणस्या पिंगंतुंगमने भूनाथोप्ययमनाथस्तपस्वीय स्त्वादृशैः शैवापसदैरुपकरणीक्रियतेसहस्वे दानींसहामुनादुर्नरेन्द्रेणदुर्नयस्यफलं इत्य भिधायचानिष्ठुरैः प्रकोष्टप्रहारैस्त्रीनपिटीटिभ प्रभृतीनभिमुखंप्रधावितान्स्वशरीरावरणकृ पाणानपातयत् अथापूर्वाधिक्षेपश्रवणादश स्त्रव्रणैरप्यमर्ष स्वेदच्छलेनानेकसमीरपीतम सिधाराजलंवमद्भिरवयवैरापिरोमांचनिभे न मुक्तशरशतशल्प निकरभरलघुमिवात्मानं रणायकुर्वद्भिः

निर्घोषोदिक्षुव्याप्ति रत्र विद्याधरीत्यादिहेपणार्थमामंत्रणं श्रद्धा ग्रहणंफलाभावप्रतिपादनाय अस्मादित्यादिसर्वंगर्भेयमुक्तिः वालिशोमूर्खः अभिलषसीति फलाभावसूचनपदं अपसदोध मः दुर्नरेन्द्रेणकुराज्ञा दुर्नरेन्द्रमंत्रतंत्रानभिज्ञ सशरीरेत्यादिनतुन रेन्द्रवत् अशस्त्रान् अथेत्यादीनरनाथःसावज्ञमवादीदितिसंबंधः

अट्टहासेनापिप्रतिविंविततारागणेन स्पष्टदृ
ष्टधवलदन्तमालमवज्ञयाहसतेवकथ्यमानस
त्वावष्टंभःपरिकरवंधविभ्रमभ्रमितकरनखकि
रणचक्रवालेन व्यपगमनाशंकया नागदम
नमंत्रमंडलवंधेने वनन्दन्दशदिशोनरनाथः
सावज्ञमवादीत् अरेकाकोदरकाकमयिस्थि
तेराजहंसेनजिह्मी ।षिवालियाचितुंअमीभिःकिं
वापरुषभाषितैः भुजवीर्यंनिवसति नवाचिप्र
तिपद्यस्वशस्त्रंअयंनभवसि अगृहीतहेतिष्व
शिक्षितोमेभुजः प्रहर्तुमितिनागस्तुअनादृत
तरंएहिकिंशस्त्रेण भुजाभ्यामेवभनज्मिभवतो
दर्पमित्यभिधाया स्फोटयामास नरपतिरपि
निरायुधमायुधेनयुधिलज्जमानोजेतुमुत्सृज्य
सचर्मफलकमट्टहासमासिंचाधोरुकस्योपरि
ववन्धवाहुयुद्धायकक्ष्याम् ॥

कथ्यमानेत्यादि अ शस्त्रवर्णश्चावयश्चवैदृहासेनच ॥ २८ ॥
मंडलंगारुडशास्त्रप्रसिद्धमैन्द्रादिंककाकोदरः सर्पः काकेतिनि
न्दायांकाकस्यचवलियाचनमुक्तं राजहंसोनृपवरोहंसभेदश्चहेति
रायुधं आस्फोटयामास वाहोकरघातमकार्षीत् असिमिति प्र
शंसार्थः सामान्यपदप्रयोग इतिरुद्रटः ॥

युयुधातेचनिर्दयास्फोटन स्फुटितभुजरुधिर शीकरसिच्यमानौशिलास्तंभाविपतद्भिर्बाहु दंडैः शब्दमयमिवकुर्वाणौभुवनंतौनाचिराच्च पातयामास भूतलेभुजंगंभूपतिःजग्राहचके शेषुउच्चखानच शिरच्छेतुमट्टहासंअपश्यच्च वैकक्ष्यकमालांतरेणास्ययज्ञोपवीतं उपसंह तशस्त्रव्यापारश्चावादीत् दुर्विनीतआस्ति तेदुर्नयनिर्वाहवीजमिदंयतोविस्त्रब्धमेवा च रसिचापलानीत्युक्त्वोत्ससर्जतं अनंतरंचस हसैवातिवहलांज्योत्स्नांददर्शश रदिविकस तां कमलवनानामिवचघ्राणावलेपिनमामोद माजिघ्रन्झटिति चनूपुरशब्दमशृणोत्व्यापा रयामासचशब्दानुसारेणदृष्टिं अथकरतल स्थितस्याट्टहासस्यमध्येताडितमिव नीलज लधरोदरेस्फुरंतीप्रभयापिवंतीमिव त्रियमां तामरसहस्तांको मलांगुलिरागराजिजाल कानिचचरणलग्नानि

वैकक्ष्यमालांतरितत्वेन पूर्वमदर्शनंयज्ञोपवीत स्याह ॥ २३ ॥ अथेत्यादावट्टहासस्यमध्येस्फुरंतींस्त्रियमपश्य दितिसंबंधः ता मरसंपद्मं(वहुविधेति प्रकृते कुसुमानिशकुनयश्चसूत्रमयाितत रंगामुष्टि दानक्षताभंग्योवीचयश्चश्रीतस्वच्छत्वंमशुकस्योदाधि सीलत्वेन

वेलावालविद्रुमलतावनानीवाकर्षंतींकरपंक
जसंकोचाशंकयाशशांकमंडलमिवखंडशःकृ
तंनिर्मलचरणनखनिवहविभनविभ्रतींगुलफा
वलंविनूपुरपुटतयास्थितनिविडकटकावलि
वन्धनादिवपरिभ्रश्यागतांवहुविधकुसुमशकु
निशतशोभिता त्पवनचालिततनुतरंगादति
स्वच्छादंशुकादुदधिसलिलादिदोत्तरंती उद
धिजन्मप्रेम्णात्रिवलिच्छलेनात्रिपथगयेवप
रिष्वक्तमध्यांअत्युन्नतस्तनमंडलांदृश्यमान
दिङ्नागकुंभामिव ककुभंमध्यलग्नैरावतक
रशीकर निकर मिव शर त्तारागणतारं हा
रमुरसादधनांधवलचामरैरिवचमन्दमन्दनि
श्वासदोलायितैर्हारकिरणैरुपवीज्यमानां स्व
भवलोहितेन मदान्धगन्धे भकुंभास्फालन
संक्रांत सिन्दूरेणेव करद्वयेनद्योतमानां ॥

उत्तरंतीमितिअंशुकाछादितथाउदंचंत्याउत्तरणमिवांशुकाल्लक्ष्य
तइति वर्णाभिप्रायेण त्रिपथगेतिनाममदेदानेलग्नः सक्तःसमद
इत्यर्थः आहिस्तिपृष्टेनयातीति मदांधेत्यादि उक्तम् हस्तिवाहि
त्वालक्ष्म्याएवमुक्तम ॥३० ॥

हरशिखंडेन्दुद्वितीखंडेनैवकुंडली कृतेनज्योत्स्ना
मुचादन्तपत्रेणविभ्राजमानां कौस्तुभगभ
स्तिस्तवकेनेवचश्रमणलग्नेना शोककिसल
येनालंकृतामहतामातंगमदमयेनातिलकेनाह
श्यछत्रछाय मंडलेनेवाचिराहितललाटांत्रापा
दतलादासीमंता च्चंद्रातपधवलेनचन्दनेना
दिराजयशसेव धवलीकृतांधरणितलचुंविनी
भिः कण्ठकुसुममालाभिः सरिद्भिरिवसागरा
दृष्टाभिरधिष्टितांमृणालकोमलैरवयवैःकमल
संभवस्त्वमनक्षरमाचक्षाणांस्त्रियमपश्यत् अ
संभ्रांतश्चपप्रच्छभद्रेकासिकिमर्थं वादर्शनप
थमागतासीतिसानुस्त्रीजनविरुद्धेनावष्टंभेना
भिभवंतीवाभाषततंवीर विद्धिमांनारायणोरः
स्थलीलीलाविहारहारिणींपृथुभरतभगीरथा
दिराजवंशपताकांसुभटभुजजयस्तं भविला
ससालभंजिकां रणरुधिरतरंगिणीतरंगक्री
डादोहददुर्ललितराजहंसीं सितनृपच्छत्रष
ण्डशिखंडिनीं

धरणितलचुंविनीभिर्मालाभिः सरिद्भिश्च हरिणीमितिहारिणीकि
लस्थाल्यालीलयाविहरति वंशान्वयथवंशेवेणौपताकोत्क्षिप्यते
स्वभटेत्यादिविशेषणेतवीरानुरागित्वमस्यादर्शितं स्तंभेचसाल
भंजिका उत्कीर्णपुत्रिकाक्रियते ॥ ३१ ॥

अतिनिशितशस्त्रधारावन भ्रमणविभ्रमासिं हींअसिधाराजलकमलिनींश्रियं अपहृता स्मितत्वामुनाशौर्यरसेन याचस्वददामितेव रमभिलषितामितिवीराणां त्वपुनरुक्ताःपरो पकाराःयतःराजातांप्रणम्य स्वार्थविमुखो भैरवाचार्यस्यसिद्धिंययाचे लक्ष्मीस्तुदेवी प्रीततरहृदयाविस्तीर्णमाणेनचक्षुषा क्षीरो देनेवोपरियर्यस्तेनाभिषिंचन्ती भूपालमेव मस्त्वित्यब्रवीत् अवादीच्चपुनःअनेनसत्वो त्कर्षेणभगवच्छिवभट्टारकभक्त्या चासाधा रण्याभवान्भुविसूर्याचन्द्रमसोस्तृतीय इ वाविच्छिन्नस्यप्रतिदिनमुपचीयमानवृद्धेः शु चिसुभगसत्यत्यागशौर्य शौण्डपुरुषप्रका ण्डप्रायस्यमहतः राजवंशस्यकर्ताभविष्यति यस्मिन्नुत्पद्यतेसर्वद्वीपानांभोक्ताहारिश्चंद्रइव हर्षनामाचक्रवर्ती त्रिभुवनविजिगीषुर्द्वितीयोमांधातेवयस्यायंकरःस्वयमेवकमलमपहा यग्रहीष्यतिचामरमिति वचसोंतेतिरोबभूव

षण्डावनंतत्रशिखंडिनीमयूरीअपुनरुक्ता भूयोभूयःक्रियमाणा पिचेत्यर्थंपरोपकारकरणपरत्वेनप्रीतत्वम् अभिषिंचंतीतिअभि षेकोराज्ञउचितःशौण्डःप्रसक्तः प्रकाण्डशब्दःप्रशंसावाचीद्वि तीयःस्पर्धावान् ॥

भूमिपालस्तुतदाकर्ण्यहृदये नातिमात्रम
प्रीयतभैरवचार्योपि तस्यादेव्यास्तेनवचसा
कर्मणाचसम्यगुपपादिते नसद्यएवकुंतली
किरीटीकुंडलीहारीकेयूरी मेखलीमुद्गरीख
ड्गीचभूत्वावापविद्याधरत्वं प्रोवाचराजन्दू
रव्यापिनःफल्गुचेतसा मलसानांमनोरथाः
सतांतुभुविविस्तारवत्यः स्वभावेनैवोपकृत
यःस्वप्नेप्यसंभावितां दातुमिमांदक्षिणांक्षमः
कोन्योभवन्तमपहाय संपत्कणिकामपि
प्राप्यतुलेवलघुप्रकृति रुन्नतिमायातित्वदी
यैर्गुणैरुपकरणीकृतस्यत्वत्त एवचलब्धा
त्मलाभस्यानिर्लज्जताएव मस्यमूढहृदयस्य
तदिच्छामियेनकेन चित्कार्यलवोपपादनो
पयोगेनस्मरयितुमस्मान मितिप्रत्युपकार
दुष्प्रवेशास्तुभवन्तिधीराणां हृदयावष्टंभाः
यतस्तंराजा भवत्सिद्धैवपरिसमाप्तकृत्यो
स्मिसाधयतुमान्योयथा समीहितंस्थानमि
तिप्रत्याचचक्षे तथोक्तश्च भूभुजाजिगमिषुः
सुहृदंसमालिंग्यटीटिभादीन्कुवलयवनेनेवा
वश्यायशीकरस्त्रा विणासास्रेणचक्षुषावीक्ष
माणःक्षितिपतिंपुनरुवाचतातब्रवीमियामीति

कुण्डलंकर्णवेष्टनंहारोमुक्ताहारःकेयूरमंगदंद्दोभूषाफल्गुत्र्रसारं
प्रत्याचचक्षे यहार्षीत्प्रयामीत्यादिवक्रोक्त्याचेतःस्थितंसर्वंव्याह

नस्नेहसदृशंत्वदीयाः प्राणाइतिपुनरुक्तंगृह्य तामिदंशरीरकमितिव्यतिरेकेनार्थकरणंतिल शःक्रीतावयमितिनोपकारानुरूपंवान्धवोसी तिदूरीकरणमिव त्वयिस्थितंहृदयमित्यप्रत्य क्षंत्वाद्विरहानुकारिणीका ऐयंनः सिद्धिरस्य श्रद्धेयंनिष्कारणस्तवोपकारइत्यनुवादः स्म र्तव्यावयमित्यवज्ञासर्वथाकृतघ्नालापेष्व ऽस ज्जनकथासुचचेतसिकर्तव्यो यंस्वार्थनिष्ठुरोज नइत्यभिधाय वेगच्छिन्नहारोच्छालितमुक्ताफ लनिकरताडिततारागणंगगनतलमुत्पपात य यौचसीमंतितग्रहग्रामः सिद्धाचितंधामश्रीकं ठोपिराजन्पराक्रमक्रीतः कर्तव्येषुनियोगेना नुग्राह्योग्राहितविनयो ऽयंपरिजनइत्यभिधा यराज्ञानुमोदितस्तदेवभूयोभूविवरंविवेश

नस्नेहसदृशमिति स्नेहानुरूपनिषेधेन स्नेहइवसुतरामाविष्कृतए व उक्तंहिप्रतिषेध इवेष्टस्ययद्विशेषाभिधित्सया ३२ आक्षेपइति तंसंतः शंसंतिकवयः सदेतिएवंत्वदीयाः प्राणाइत्यादौव्यतिरेकः पृथग्भावः आवांकिलैकएवार्थः तिलशइति यावान्किलायमु पकारो वहुगुणस्तावंतोनावयवास्तिलशोविभागेनास्माकंकारणा यातना सीमन्तितोद्विधाकृतः ग्रामः समूहः

नरपतिस्तुक्षीणभूयिष्टायांक्षपा यांप्रवातुमार ब्धे प्रवुद्ध्यमानकमलिनीनिः श्वाससुरभौव नदेवताकुचांशुकापहरणपरिहासरुवे दिनीव सावश्यायशीकरेपरिमलाकृष्टमधुकृति कुमु दनिद्रावाहिनि निशापरिणतजडेतुषारले षिनिवनानिले विरहविधुरचक्रवाकचक्र निः श्वसितसन्तापितायामिवापरजलनिधिमवत रन्त्यांत्रियामायां स क्षादागतलक्ष्मीविलो कनकुतूहलिनीष्विवसमुन्मीलन्तीषुनलि नी षुउन्निद्रपक्षिणिक्षरतिकुसुमविसरमिव तुहि नकणनिकरं मृदुपवनलासितलते काननेक मललक्ष्मी प्रवोधमंगलशंखेष्विवरसत्स्वन्त र्वद्धध्वनन्मधकरेषु मुकुलायमानेषु कुमुदेषुउ ज्जिहानरविरथवाजिविसृष्टैः प्रोथपवनैः प्रो त्सार्यमाणास्विववारुण्यांककुभि पुंजीभव न्तीषुश्यामालताकलिकासुतारकासुत

वनेस्यादावस्मिनस्मिन्स तिनरपतिर्नगरंविवेशेतिसंबंधः क्षीण भूयिष्टायांवहुतरक्षीणायां तुषारस्यशीतलेशाः संति तत्रतास्मि न्नीषच्छीतले सन्तपितायामेवेति संतापितश्चशीतलेस्थानम वतराति ॥ ३४ ॥ कुसुमविसरमिवेतिसमोपमालासितानर्तिताः उज्जिहानउद्गच्छन् श्यामारात्रिः सैवलतावतति: प्रियंगुलतिका। मकरिका तारामयोमृगोमृगशीर्षस्थितारोकुशाकारः ॥

मन्दरशिखराश्रयिणि मन्दानिलल्लोलितक
ल्पलतावनकुसुमधूलिविच्छुरितइवधूसरीभ
वतिसप्तर्षि मण्डलसुरवारणांकुशइवच्युतेग
लतितारामयेमृगे त्रीनपिटीटिभादीन्गृहो
त्वानागयुद्धव्यतिकरमलीमसानि शुचिनिव
नवार्यपपालीपसप्रक्ष गानिनगरंविवेश अ
न्यास्मिन्नहनितेषामात्मशरीरानंतरं स्नानभो
जनाच्छादनादिनाप्रीतिमकरोत् कतिपयदि
वसापगमेचपरिव्राड् भूभुजाव र्यमाणोपिव
नंययौपाताळस्वामिकर्णतालै तूशौर्यानुरक्तौत
मेवसिषेवाते संपादितमनोरथातिरिक्तविभ
वौच सुभटमंडलमध्येनिष्कृष्टमण्डलाग्रौसम
रमुखेषुप्रथममुपयुज्यमानौ कथान्तरेषु चान्त
रान्तरासमादिष्टौविचित्राणिभैरवाचार्य चरि
तानिशैशववृत्तांतांश्च कथयन्तौतैनेवसार्धंज
रमाजग्मतुरिति॥

आत्मशरीरानन्तर स्नानेति आत्मशरीरमनंतरं यस्यतादृशेन स्नानभोजना च्छादनादिना तेषुकृत्वापश्चादात्मनः करोतीत्य र्थः शौर्यानुरक्ताविति मभोगलोलुभौ अतिरिक्तोधिकः ॥ ३५ मंडलाग्रः खड्गः अंतरांतरामध्ये मध्येकथयंतौ इति स्थिरप्री

इतिश्रीबाणभट्टकृतौहर्ष चरितेमहाकाव्ये तृतीयउच्छासः ॥ ३ ॥ *

सिद्धये ॥ इतिश्रीशंकरकृतेहर्षचरित संकेतेतृतीय उच्छास संपुर्णाः ॥ ३ ॥ * ॥

ओंयोगस्वप्नेपिनेछन्तिकुर्वतेनकरग्रहं महान्तोनाममात्रेणभवंतिपतयोभुवः ॥ १ ॥ सकलमहीभृत्कम्यकृदुत्पद्यत एकएवनृपवंशेविपुलेपिपृथुप्रतिमोदंत इवगणाधिपस्य मुखे ॥ २ ॥

ओं योगमित्यादिनाप्रा द्धात् प्रत्युद्गतवैलक्षण्य मुच्यते भूपतीनांयोगोयुक्तिः गूढप्रत्याहाररसादनादिच्छद्मेत्यर्थं संवंधश्चकरग्रहोदंडग्रहणंविवाहश्च नाममात्रेणाति नामैवतेषांश्रुत्वाभुवनंकम्पतइत्यर्थः अर्थशून्येनसकलेनेत्यादिना भाविनीहर्षोत्पत्तिः सूचिता ॥ १ ॥ महीभृद्भिरिरापिकम्पोवेपथुश्चलनंच पृथुरादि राजोविस्तीर्णश्चप्रतिमासादृश्यं दन्तकोशश्चदन्तइवेति दंतोप्येकोगणाधिपस्य मुखेसमूहाधिपत्य प्रदानेच ॥ २ ॥

अथतस्मात्पुष्पभूतेर्द्विजवरस्वेच्छागृहीतको शोनाभिपद्मइवपुंडरीकेक्षणात् लक्ष्मीपुर: सरोरत्नसंचयइवरत्नाकरात् गुरुबुधकाविक लाभूत्तेजस्विभूनन्दनप्रायोग्रहगणइवो दय स्थानात् महाभरवाहनयोग्य: सागरइवस गरप्रभावात्

अथेत्यादीराजवंशो निर्जगामेतिसंबंध: द्विजवरा विप्रोत्तमा ब्रह्माचद्विजोत्तम: कोशो गंजाकर्णिकाच पुण्डरीकेक्षण: कम ललोचनोविष्णुश्च लक्ष्मी: पुर:सरायस्यलक्ष्म्या:पुर:सर:जातौ जातंयदुत्कृष्टंतद्रत्नमभिधीयते मणयश्चरत्नानिगुरवउपदेष्टार: बुधा: पंडिता:कवय:काव्यकृत:कलावन्तोगीतादिज्ञा: तेजस्वि न: शूरा: भूनंदनाराजान: इतरत्रगुरुर्बृहस्पति: उदय: प्रभावो पि महाभारोभूपालनरूपोविजयरूपोवा तस्यनिर्वाहणेयोग्य:स गरत्वप्रभावोयस्य तस्माद्राज्ञ: समागताश्च प्रभावस्तस्मात् भवादीतिपाठ सगरयस्यप्रकृष्टोभव उत्पत्तिर्यस्यतस्मात् अन्यत्र प्रसगरस्यय:प्रभवस्तस्मात् इतिव्याख्या

दुर्जयबलसनाथोहरिवंशइवशूरात् निर्जगा
मराजवंशोयस्मात् अविनष्टधर्मधवलाः प्र
जासर्गाइवकृतमुखात् प्रतापाक्रांतभुवनाः
किरणाइवतेजोनिधेः विग्रहव्याप्तदिङ्मुखा
गिरयइवभूभृत्प्रवरात् धरणीधारणक्षमादि
ग्गजाइवब्रह्मकरात् ॥

दुर्जयो दुरभिभवः बलंप्राणाः सैन्यंवातेनयुक्तः ततःकर्मधारयाः अन्यत्रदुर्जयोजितोविष्णुः बलोहलधरः ताभ्यांसनाथः शूरा द्विक्रांतात् शूरश्चयदूनांराजातस्मात् अविनष्टेनपूर्णेनधवलाः शुक्लाः अविनष्टधर्मान्धवांल्लांतीतिवा कृतमुखान्संस्कृतान् कृत युगादेश्चप्रतापश्चातपोरिपुभयजननीवार्ताच विग्रहोविरोधोदेह श्च ॥ २६ ॥ भूभृतांराज्ञांभूभृत्प्रभवोब्रह्मचधारणंपालनमुद्वहनं च ब्रह्मकरोतिइति ब्रह्मकरः तस्मात् सामानिगायतोब्रह्मणः करात् करिणउत्पन्ना इतिवार्ता ॥

उदधीन्पातुमुद्यताजलधराइवघनागमात् इ
छाफलदायिनः कल्पतरवइवनन्दनात् सर्व
भूताश्रय।विश्वरूपप्रकाराइवश्रीधरात् अजा
यन्तराजानः तेषुचैवमुत्पद्यमानेषुक्रमेणोद
पादिहूनहरिणकेसरीसिंधुराजज्वरो गुर्जरप्र
जागरः गांधाराधिपगंध द्विपपाकलः लाट
पाटवपाटज्वरः मालवलक्ष्मीलतापरशुः प्र
तापशीलइति प्रथितापरनामाप्रभाकरवर्ध
नोनामराजाधिराजः योराज्यांगसंगीन्यभि
षिच्यमानएवमलानिविमुमोचधनानियः पर
कीयेणापिकातरवल्लभेनरणमुखे तृणेनेवधृ
तेनालज्जतजीवितेनयःकरधृतधौतासिप्रति
बिंबितेनात्मनाप्यदूयत ॥

पातुंरक्षितुंग्रासीकर्तुंच घनश्रागमउपदेशोयस्य घनागमश्चवर्षा
काल: नंदयतीतिनन्दनः देवोद्यानंच सर्वेषांभूतानांप्राणिनामा
श्रय।ः आश्रयणीया: सर्वस्यवाभूतस्याश्रयाः सर्वेषांवाभूताः
पारमार्थिका: अतएवाश्रयणीयाः श्रीधरोहरिरपिहूनादयोजन
पदभेदाः प्रजागरोनिद्राक्षयःस्वेदंमूत्रंपुरीषंचमज्जांचेवमतंगजाः
यस्याघ्रायविमाद्यंति तंविद्याद्गंध हास्तिनं कूटपाकलोहस्तिज्वरः
यतोहूनाद्युन्मूलकोतएवप्रथितापरनाम। राजा राज्यांगान्यमा
त्याद्याः अभिषिच्यमानो राज्येप्रतिष्ठाप्यमानोयस्याभितः सि
च्यते सोंगसंगोनिमलानिमुंचति ॥

समितिषु सहायेनरिपुणांपुरः प्रधनेषुधनुषा पनमता योमानीमानसेना खिद्यत यश्चांत गतापरिमितरिपु शल्यशंकुकीलितामिवनि श्चलामुवाह राजलक्ष्मीयश्च सर्वासुदिक्षुस मीकृततटावट विटपाटवीतरुतृणगुल्मवल्मी कगिरिगहनै र्दंडयात्रापथैः पृथुभिर्भूत्योप योगाय व्यभजतेववसुधांवहुधायंचाल्पध्यु हृदोहृद्मात्मीयोपिसकलरिपुसमुत्सारकः परकीयइवततापप्रतापः यस्यचवह्निमयोहृ दयेपु जलमयोलोचनपुटेषु मारुतमयोनिः श्वसितेपु क्षमामयोंगेषु आकाशमयःशून्य तायांपंचमहाभूतमयोमूर्तइवाहृश्यत निहृत प्रतिसामन्तांतः पुरेषुप्रतापः ॥ ॥

क्वतरेति तृणंकानरेर्मुखेध्रियते तृणेनेनिसहशोपमामुखेतृणधारण मनौचित्यमेवपोषयति धौतपदेनार्थिवस्वीकारसामर्थं उक्तं समि दिधनंसंग्रामश्च निश्चलामनपायिनीं समीकृतास्तटावटायैर्विट पाटवीयुक्ते स्तरुभिस्तथातृणादिभिश्चगहनैः विटपाः शाखाः अटवीसमूहःगुल्मा जालकानि वल्मीकः पिपीलककृतोमृत्कू टः दंडंरगवलं तस्ययात्रापथैर्गमनमार्गैः सीमास्थानीयै ३.७ र्व्यभजत खंडशोव्यलभत भूशय्यादिवशेनपांसुभूतत्वात् का ठिन्याचक्षमामयः शून्यतायां निश्चेष्टत्वे ॥

यस्यचासंन्नेषुभृत्यरत्नेषु प्रतिबिंबितेवतु ल्यरूपासमलक्ष्यतलक्ष्मीःतथाचयस्यप्रतापाग्निनाभूतिःशौर्योष्मणासिद्धिः असिधाराजलेनवंशवृद्धिः शस्त्रव्रणमुखैःपुरुषकारोक्तिःधनुर्गुणाकिणेनकरगृहीतिरभूत् यश्चवैरमुपायनंविग्रहमनुग्रहंसमरागमंमहोत्सवंशत्रुंनिधिदर्शनं अरिबाहुल्यमभ्युदयंआहवाहूवनंवरप्रदानंअवस्कंदपातंदिष्टवृद्धिं शस्त्रप्रहारपतनं

आसन्नेष्विति आसन्नानिप्रतिबिंबगृहणानि भूतिः संपद्भस्म ऊष्माचानंदाधिकाशक्तिः सिद्धिः पाकोपिवंशोवेणुरपिव्रणानांमुखान्यग्राणिगुणान्येववामुखान्याननानि मुखैः किलोक्तिर्भवति करगृहीतिर्दंडग्रहणं किणश्चव्यायामहस्तएवभवति अज्ञातः शत्रुष्वभिगमोवस्कंदः दिष्टवृद्धि रानन्दवर्धनंधूमेनोत्प्रेक्षाकार्ष्णर्यात् ॥

वसुधाराममन्यत यस्मिंश्चराजतिनिरंतरैयू
थनिकरैरंकुरितमिवकृतयुगेनादिङ्मुखविस
र्पिभिरध्वरधूमैः पलायितमिवकलिनासमु
धैःसुरालयैरवतीर्णमिवस्वर्गेणसुरालयाशिख
रोद्धूयमानैर्धवलध्वजैः पल्लवितमिवधर्मेणव
हिरुपरचितविकटसभासत्रप्रपाप्राग्वंशमंड
पैः प्रसूतमिवग्रामैः कांचनमयसर्वोपकरणै
र्विभवैर्विशीर्णमिव ॥ ॥ ॥ ॥ ॥

ुधामक्रोल ममृतंच सभासदः उक्तंच समज्यापरिषद्गोष्ठीसभा
ामिति संसदः आस्थाने क्लीव आस्थानं स्त्रीनपुंसकयोःसदः
त्रंसदादानं सत्रमाछा दने यज्ञेसदादाने वनेपिचे ३८ ॥त्यु
ायत्रतोयदानं प्राग्वंशः पत्नीशाला उक्तंच प्राग्वंशःप्रागध
र्गेहाादिति वहिरुपपादिताः विकटाः सभासत्रप्रपाप्राग्वं
रूपायैस्तैः ॥

मेरुणाद्विजदीयमानैरर्थकलशैः फलितमिव भाग्यसंपदातस्यचजन्मान्तरेपिसतीपार्वतीव शंकरस्यगृहीतहृदयालक्ष्मी रिवलोकगुरोः स्फुरत्तरलतारकारोहिणीवकलावतः सर्वज नजननीवृद्धिरिवप्रजापतेः महाभूभृत्कुलोद्ग तागंगेववाहिनी नायकस्यमानसानुवर्तन चतुराहंसीवराजहंसस्यसकललोकार्चितच रणात्रयीवधर्मस्य ॥

तस्येत्यादौ तस्यचमहादेवी यशोवती नामाभूद्यास्यवक्षसि ललासेतिसंबंधः सतीसाध्वीशोभना वाजन्मांतरे श्यामा या संज्ञेषा शंकरस्ये त्यादीनि महामुनि शब्दान्तानि राज्ञि योज्यानि गृहीतमावर्तितंपरहृदयंचेतोवक्षश्च लोकगुरोर्हरे श्चतारका कनीनिकानक्षत्राणिचतारकाः जननीमाता ज न्यतेनयेनिजननीचभूभृद्गिरिराजि कुलंसमूहोपि वाहिनीसेना नदीच मानसंचेतः सरश्चवसुधाराधनवृद्धिः चरणौपादौकडादिं शाखाश्चचरणः धर्मोस्ति यस्यसधर्मः अर्श आदित्वादच् यद्वासाक्षा देवधर्मः ॥

दिवानिशममुक्तपार्श्वस्थिति रुंधतीवमहा
मुनेः हंसमयीवगतिषुपरपुष्टमयीवालापेषुच
क्रवाकमयीवपतिप्रेम्णप्राचूणमयीवपयो ध
रोन्नतौमदिरामयीवविलासेपुनिधीमयीवार्थ
संचयेषु वसुधारामयीवप्रसादेषु कमलम
यीवकोशसंग्रहेषुकुसुममयी वफलदानेषुसं
ध्यामयीववंद्यत्वेचंद्रमयीवनिरूष्मत्वे दर्पण
मयीवप्रतिप्राणीग्रहे षुसामुद्रमयीवपरचित्त
ग्रहणेःषुपरमात्ममयीवव्याप्तिषु स्मृतिमयी
वपुण्यवृत्तिषुमधुमयीवसंभाषणेषु अमृतम
यीवतृष्यत्सु दृष्टिमयीवभृत्येषु निर्वृतिमयी
वसखीषुवेतसमयीवगुरुषु गोत्रवृद्धिरिववि
लासानांप्रायश्चित्तशुद्धिरिवक्रीत्वस्यआज्ञा
सिद्धिरिवमकरध्वजस्य

महामुनीराजर्षिर्वासिष्टश्चप्रावृट्वर्षा पयोधरौस्तनौ मेघाश्चपयोध
राः कोशोगंजः कार्णिकाचऊष्मावर्गउे। ग्यंच प्राणिनिप्राणिनि
प्रतिप्राणि सर्वंतत्रविषयेग्रहणेष्वावर्जनषुप्रातिबिंबोत्पादनेषुच
सामुद्रसमुद्र [illegible] [illegible] [illegible] परमात्मनिव्या
प्तिः सर्वगतत्व मनुष्ठेयकार्ये ज्ञानंचान्यत्र अमृतसुधातायच
॥ ३९ ॥ वेतसमयीवेतिनम्रतात् प्रायश्चित्त शुद्धिरिति स्त्रीत्वं
तयोज्ज्वालितं पवित्रितंवेत्यर्थः

व्युत्थानबुद्धिरिवरूपस्यदिष्टवृद्धिरिवरतेः म
नोरथसिद्धिरिवरामणीयकस्य दैवसंपत्ति
रिव लावण्यस्य वंशोत्पत्तिरिवा नुराग
स्य वरप्राप्तिरिव कांतेः सर्गसमाप्तिरिव
सौन्दर्यस्य आयातिरिव यौवनस्य अनभ्रवृ
ष्टिरिव वैदग्ध्यस्य अयशःप्रमृष्टिरिव ल
क्ष्म्याः यशः पुष्टिरिवचारित्रस्यहृदयतुष्टिरि
वधर्मस्य सौभाग्यपरमाणुसृष्टिरिवप्रजापतेः
शमस्यापिशांतिरिव विनयस्यापिविनीतिरि
व आभिजात्यस्या प्यभिजातिरिव संय
मस्यापि संयातिरिवधैर्यस्यापिधृतिरिवाविभ्र
मस्या पिविभ्रांतिरिवयशोवतीनाममहादेवी
प्राणानांप्रणयस्यविस्रंभस्यधर्मस्य सुखस्य
चभूमिरभूत् यास्यवक्षसिनरकजितोलक्ष्मी
रिवललास

व्युत्थानंसमाधेश्चालनं आयातिःप्रतापःअनभ्रवृष्टिरिवेति यथाह्य
नभ्रवृष्टिराश्चर्यंहेतुः तथावैदग्ध्यंतस्यामाश्चर्यं शमस्यापीतिहि
शमेकश्चअशांतोभवति शमंसंप्राप्यलब्धात्मलाभोजायतइत्येव
मुत्तरत्रापिव्याख्याक्रमः आभिजात्यस्यकुलोचितत्वस्य नरको
नामासुरोयातनास्थानानिच नरकाः ॥ ४० ॥

निसर्गतएवच सन्नृपतिरादित्यभक्तोवभूवप्र
तिदिनमुदयेदिनकृतः स्नातःसितदुगूलधारी
धवलकर्पटप्रावृतशिराःप्राङ्मुखःक्षितौजानु
भ्यांस्थित्वाकुंकुमपंकानुलिप्ते मंडलके पवित्र
पद्मरागपात्रेनिहितेस्वहृदयेनेव सूर्यानुरक्ते
नरक्तकमलषंडेनार्घं ददौ अजपच्चजप्यंसुच
रितः प्रत्युषसिमध्यन्दिनेदिनांतेचापत्यहेतोः
प्राध्वं प्रयतेनमनसा जंजपूकोमंत्रमादित्यहृ
दयं भक्तजनानुरोधविधेयानितुभवंतिदेवतानां
मनांसि यतः सराजाकदाचिद्ग्रीष्मसमयेय
दृच्छयासितकरकरसितसुधाधवलस्यहर्म्यस्य
पृष्ठेसुष्वाप पार्श्वेचास्यद्वितीयशयनेदेवीयशो
वतीशिश्येपरिणतप्रायायांतुश्यामायामासन्न
प्रभातवेलाविलुप्यसानलावण्येलिलंविषमा
णे सीदत्तेजसि ॥

स्वहृदयेनेवेति स्वहृदयमपिसूर्यानुरक्तंप्राध्वंप्रव्हः जंजपूकशब्दो
जपासक्ततांलक्षयति द्वितीयेत्यादिना सदाचारनिष्ठतोक्ता उक्तं
हिनाश्नीयाद्भार्ययासाकंनचसुप्यात्तयासमामिति परिणतेत्यादाव
स्मिन्सातिदेवीयशोवत्युदातिष्ठादितिसंवंधः ॥

तारकेश्वरे कराग्ररुष्टकुमुदिनीप्रमोदजन्म
नि शशधरस्वेदइवगलत्यातिशीतलेवश्यायप
यसिमधुमदमत्तप्रसुप्तसीमंतिनीनिःश्वासहते
षुसंक्रांतमदेष्विवघूर्णमानेष्वंतः पुरप्रदीपेषु
राजनिचविमलनखप्रतिविंबिताभिः संवाह्य
मानचरणइव तारकाभिर्विस्त्रब्धप्रसारितैर्दि
गंगनानामिवार्पितैरंगैर्मधुसुगंधिभिःस्वहस्त
कमलतालवृंतवातैरिव श्वासितैर्मुखश्रियावी
ज्यमानेविमलकपोलस्थलस्थितेनासितकुसु
मशेखरेणेवरतिकेलिकचग्रहलंवितेनप्रतिमा
शशिविंबनविराजितेस्वपितिदेवीयशोवतीस
हसैवत्रार्यपुत्रपरित्रायस्वेतिभाषमाणाभूषण
रवेणव्याहरंतीवपरिजनमुत्कंपमानांगयष्टिरु
दतिष्ठत् अथतेनसर्वस्यामपिपृथिव्यामश्रुत
पूर्वेणाकिमुतदेवीमुखेपरित्रायस्वेतिध्वनिनाद
ग्धइवश्रवणयोरेकपदएवनिद्रांतत्याजराजा ॥

तारकेश्वरेकराररश्मयोहस्तश्वकरः सीमंतिनीललनासंवाह्यमाना
नुपपद्यमानांगैरितित्थंभूतलक्षणे तृतीया मधुमद्यंतद्दत्मधुमकरंदः
तालवृंतमुत्क्षेपकः॥४१॥ सितग्रहणेनचन्द्रसादृश्यमाहएकपदेत
त्क्षणम्

शिरोभागाच्च कोपकंपमानदक्षिणकराकृष्टेन कर्णोत्पलेनेव निर्गच्छताच्छधारेणधौतासिना सीमंतयन्निवनिशामंतरालव्यवधायमाकाश मिवोत्तरीयांशुकंविक्षिपन्वामकरपल्लवेनकर विक्षेपवेगगलितेनहृदयेनेव भयनिमित्तान्वे षिणाभ्रमतादिक्षुकनकवलयेनाविराजमानःस त्वरावतारितवामचरणाक्रांतकंपितप्रासादः पुरःपतितेनासिधारागोचरगतेन शशिमयू खखंडेनेव खंडितेनहारेणराजमानः लक्ष्मी चुंबनलग्नतांबूलरसरंजिताभ्यामिवनिद्रया कोपेनचातिलोहिताभ्यांलोचनाभ्यांपटलय न्पर्यंतानाशानां आवद्धांधकारयात्रिपताक याभ्रुकुट्यापुनरिवत्रियामांपरिवर्तयन् देवि नभेतव्यंनभेतव्यमित्यभिदधानोवेगेनोत्पपा तसर्वासुचदिक्षुविक्षिप्तचक्षुर्यदानाद्राक्षीत्किं चिदपितदापप्रच्छतांभयकारणं अथगृहदेव तास्विवप्रधावितासुयामकिनीषुप्रवुद्धेचसमी पशायिनि परिजनेशान्तेचहृदयोत्कंपकारि णिसाध्वसे ॥

शिरोभागाच्चेत्यादेःराजावेगेनोत्पपातेतिसंवंधः सीमंतयन्नद्दि धाकुर्वन् त्रिपताकयात्रिरेखया ॥ ४२ यामकिनीषुजागारिकासु

सासमभाषतआर्यपुत्रजानासिस्वप्नेभगवतः
सवितुर्मंडलान्निर्गत्य द्वौकुमारौतेजोमयौवा
लातपेनवापूरयंतौदिग्भागान्वैद्युतमिवजीव
लोकंकुर्वाणौ मुकुटिनौकुंडलिनावंगदिनौकव
चिनौ गृहीतशस्त्राविन्द्रगोपकरुचारुधिरेण
धाम्नास्नातावुन्मुखेनोत्तमांगघटमानांजालिना
जगता निखिलेनप्रणम्यमानौकन्ययैकयाच
चन्द्रमूर्त्येव सुषुम्णारश्मिनिर्गतयानुगम्यमा
नौक्षितितलमवतीर्णौतौचमेविलपंत्याः शस्त्रे
णोदरंविदार्यप्रवेष्टुमारब्धौ प्रतिबुद्धास्मिचा
र्यपुत्रविक्रोशयंती वेपमानहृदयेतिएतस्मिन्ने
वचकालक्रमेराजलक्ष्म्याः प्रथमालापःप्रथय
न्निवस्वप्नफलमुपतोरणंरराण प्रभातशंखःभा
विनींभूतिमिवाभिदधाना दृध्वनुरमन्दंदुन्दु
भयःचकाणकोणाहतानन्दादिवप्रत्यूषनान्दी

मुकुटिनौमौलियुक्तौ अंगदिनौसकेयूरौइंद्रगोपकः खद्योतः
सुषुम्णाख्यामृतमयीरविरश्मिः ४३ कोणावादनभांडंनांदीभेरी

जयजयेतिप्रवोधमंगलपरिपाठकानामुच्चैर्वा
चो श्रूयंतपुरुषश्चवल्लभतुरंगमन्दुरामन्दिरे
मन्दमन्दंसुप्तोत्थितः सप्तीनांकृतमधुरहेषा
रवाणां पुरः श्चोततुषारसलिलशीकरं किर
न्मरकतहारितं यवसंवक्रापरवक्रे पपाठ
निधिंस्तरुविकारेणसन्मणिः स्फुरताधाम्नाशु
भागमोनिमित्तेनस्पष्टमाख्यायतेलोकेअरु
णइवपुरःसरोरविंपवनइवातिजवोजलागमं
शुभमशुभमथापिवानृणांकथयातिपूर्वनिदर्श
नोदयःनरपतिस्तुतच्छ्रुत्वाप्रीयमाणेनांतः
करणेनतामवादीत् देविमुदोवसरोविषीदासिस
मृद्धास्तेगुरुजनाशिषः पूर्णानोमनोरथाः प
रिगृहीतासिकुलदेवताभिःप्रसन्नस्तेभगवानं
शुमालीनाचिरेणैवातिगुणवदपत्यत्रयलाभेना
नन्दयिष्यतिभवतीमितिश्रवतीयचयथाक्रि
यमाणाःक्रियाश्चकारयशोवत्यापितुतोषतेनप
त्युर्भाषितेन ततःसमतिक्रांते

वल्लभेत्यादिनापुरुषस्यनैकट्यमाहसप्तयोश्वाःयवसंघासं नाद्या
प्रायोंवुधेवंक्रामिति वक्रलक्षणमपरवक्रं प्रसिद्धं तरुविकारेणेति
यत्राधोनिधिस्तत्र परिणाहोद्गताधोमुखशाखामूलादिभाजोवृ
क्षाभवंति

कस्मिंश्चित्कालांशे देव्यांच यशोवत्यां दे
वोराज्यवर्धनः प्रथममेव संवभूवगर्भे गर्भ
स्थितस्यैवच यस्य यशसेव पांडुता माद
त्तजननी गुणगौरवक्कांतेवगात्रमुद्वोढुंनशशा
क कांतिविसरामृतरसतृप्तेवाहारं प्रतिपरांङ्
मुखीवभूव शनैः शनैरुपचीयमानगर्भभराल
साच गुरुभिर्वारितापि वन्दनाय कथमपिस
खीभिर्हस्तावलंवेनानीयत विश्राम्यतीसाल
भंजिकेव समीपगतस्तंभभित्तिष्वलक्ष्यत
कमललोभविलीनैरलिभिरिववृता वुद्वर्तुंना
शकच्चरणौ मृणाललोभेनचचरणनखमयूख
लग्नैर्भवनहंसैरिव संचार्यमाणामन्दमन्दंव
भ्रामममणिभित्तिपातिनीषु प्रतिमास्वपि ह
स्तावलंवनलोभेन प्रसारयामासकरकमलं
किमुतसखीषुमाणिक्यस्तंभदीधितीरप्यालं
वितुमाचकांक्षकिंपुनः भवनलताः समादेष्टु
मप्यसमर्थासीद्गृहकार्याणिकैवकथाकर्तुम्

निदर्शनंनिमित्तं समृद्धा. परिपूर्णाः परिगृहीताश्रंगीकृताः४४

आस्तांनूपुरभारखेदितंचरणयुगलंमनसापि नोदसहतसौधमारोढुं अगान्यपिनाशक्नोद्वा रयितुंदूरेभूषणानिचिन्तयित्वा पिक्रीडापर्व ताधिरोहणमुत्कंपितस्तनीतस्तान प्रत्युत्था नेषु भयजानुशिखरविनिहितकराकिसलया पिगर्वादिवगर्भेणाधार्यत दिवसंचाधोमुखी स्तनपृष्ठसंक्रांते नापत्यदर्शनौत्सुक्यादंतः प्रविष्टेनौत्सुक्यादंतः प्रविष्टेनेवमुखकमलनै वंप्रीयमाणाददर्शगर्भंउदरे तनयेनहृदयेचभ र्त्रातिष्ठताद्विगुणिता मिवलक्ष्ममुवाह सख्यु त्संगमुक्तशरीराच शरीरपरिचारिकाणामंके षु सपत्नीनांतु शिरःसु पादौचकार अवतीर्णे चदशमेमासिसर्वोर्वीभृत्पक्षपातायवज्रपरमा णुभिरिवनिर्मितात्रिभुवनभारधारणसमर्थशेष फणमंडलोपकरणैरिव ॥

उर्वीभृतोराजानः पर्वताराजानः पर्वताश्चपक्षाः पतत्राणिच पा तः पतनंशातनंच ॥ ४६ ॥ कंदलानि लताभेदाः नीरंतोयं मानसौकसोहंसाः नभसि श्रावणे यशोवत्यादेव्याः

कल्पितं सकलभूभृत्कंपकारिणां दिग्गजावयवै रिवविहितमसूत देवं राज्यवर्धनम् यस्मिंजाते जातप्रमोदामृतमय्यइवाजायंतप्रजाः पूरितासंस्त्र्यशंखशब्दमुखरं प्रहतपटहशतपटुरवगंभीरभेरीनिनादनिर्भरभरितभुवनं प्रमोदोन्मत्तमर्त्यलोकमनोहरं मासमेकं दिवसमिवमहोत्सवमकरोन्नरपतिः अथान्यस्मिन्नतिक्रांते कस्मिंश्चित्काले कन्दलिनि कुड्मलितकदंबतरौ तोक्मतृणस्तंभे स्तंभिततामरसे विकासितचातकचेतसि मूकमानसौकसि नभसि मासि देव्यादेवक्याइवचक्रपाणिर्यशोवत्याहृदये गर्भे च सममेव संबभूव हर्षः शनैःशनैश्चास्याः सर्वप्रजापुण्यैरिवपरिगृहीताभूयोप्यापांडुतामंगयष्टिर्जगाम गर्भारंभेणश्यामायमानचारुचूचुकचूलिकौ चक्रवर्तिनःपातुमुद्रिताविवपयोधरकलशौविभार ॥

चक्रपाणिः कृष्णः रेखाकारं च चक्रपाणौयस्य देवक्या अपि यशोवत्याः प्रमोदो हर्षः पुण्यैरिवेति पुण्यानांस्वभावशुद्धित्वात्

स्तन्यार्थमाननिहिता दुग्धनदीव दीर्घ स्निग्धधवला माधुर्यमधत्तदृष्टिः सकलमंगलगणाधिष्ठितगात्रगौरस्यैणवगतिरमन्दायतमन्दमन्दसंचरंत्यानिर्मलकुट्टिमनिमग्नप्रतिबिंबनिभेन गृहीतपादपल्लवा पूर्वसेवामिवारेभे पृथिव्यस्याः शयनीयमधिशयानायाः शयनीयमपाश्रयपत्रभंगपुत्रिकाः प्रतिमाविमलकपोलोदरगता प्रसवसमयं प्रतिपालयंती लक्ष्मीरिव। लक्ष्यत क्षपासु सौधशिखराग्रगताया गर्भोन्माथमुक्तांशुकेस्तनमंडले संक्रांतमुडुपतिमंडलमुपरिगर्भस्य श्वेतातपत्रमिवकेनापिधार्यमाणमदृश्यत सुप्ताया वासभवने चित्रचितिचामरग्राहिण्योपिचामराणिचालयांचक्रुः स्वप्नेषुकरविधृतकमलिनीपलाशपुटसलिलैश्चतुर्भिरपिदिक्करिभिरक्रियताभिषेकः प्रतिवुद्ध्यमानायाश्चन्द्रशालिकासालभंजिकापरिजनो जयशब्दमसकृदजनयत् परिजनाह्वानेषु आदिशेति ॥

स्तनयोर्भवं स्तन्यंक्षीरं अपाश्रयःपर्यंकः उन्माथः खेदः ॥ ४८ ॥ चन्द्रशाला धवलगृहस्योपरि प्रासादिकायामंतधारिणीत्युच्यते ॥

अशरीरवाचोनिश्चेरुः क्रीडायामपिनासह
ताज्ञाभंगं अपिच चतुर्णांमहार्णवानामेकाक्र
तेनांभसास्नातुंवांछावभूव वेलालतागृहोदर
पुलिनपरिसरेषु पर्यटितुं हृदयमभिललाष
आत्ययिकेष्वपि कार्येषुसविभ्रमंभ्रूलताचचा
ल सन्निहितेष्वपि मणिदर्पणेषुमुखमुत्खातेख
ड्गपट्टेवीक्षितुंव्यसनमासीत् उत्सारितवी
णाः स्त्रीजनविरुद्धा धनुर्ध्वनयः श्रुतावसुखा
यन्तपंजरकेसरिषुचक्षुररमतगुरुप्रणामेष्वपि
स्तंभितामिवशिरःकथमपि ननाम सस्यश्वा
स्याः प्रमोदविस्फारितैर्लोचनपुटैः रासन्नप्र
सवमहोत्सवधिग्घवधवलयन्त्योभवनंविकच
कुमुदकमलकुवलयपलाशवृष्टिमयंरक्षावलि
विधिमिवानवरतंविदधानादिक्षुक्षणमपिनमु
मुचुः पार्श्वम् ॥

गर्भस्थजन चित्तवृत्त्य नुसारेण गर्भिण्या अपि चित्तवृत्ति र्भवति यतो वार्ता श्रूयते ततश्चतुर्णामित्युक्तं परिसरः पर्यंतः आत्ययिकेष्ववश्यकर्त्तव्येषु ॥ ४८ ॥

आत्मोचितस्थाननिषण्णाश्चमहान्तोविविधौ
षधिधराभिषजोभूधराइव भुवोधृतिंचक्रुः प
योनिधीनांहृदयानीव लक्ष्म्यासहागतानिग्री
वासूत्रग्रंथिषु प्रशस्तरत्नान्यवध्यंत ततश्च
प्राप्तेज्येष्ठामूलीये मासि बहुलासुबहुलपक्ष
द्वादश्यांऽयतीतेप्रदोषसमये समारुरुक्षतिक्ष
पायौवने सहसैवांतः पुरे समुदपादिकोलाह
लःस्त्रीजनस्य निर्गत्यचससंभ्रमंयशोवत्याः
स्वयमेव हृदयनिर्विशेषा धात्र्याःसुता सुपात्रे
तिनाम्ना राज्ञः पादयोर्निपत्यदेवदिष्ट्यावर्ध
सेद्वितीयसुतजन्मनेति ऽयाहरंतीपूर्णपात्रंज
हारञ्चास्मिन्नेवचकालेराज्ञः परमसंमतःशतशः

महांतः प्रभाविताः उच्छ्रिताश्चविविधाओषधीः धारयंतियेते वि
विधा ओषधयोयासुताधराभूमयोयेषांतेच धृतिर्धैर्यं धारणंच ल
क्ष्म्यासहेति लक्ष्मीर्हि पयोधिसुताप्रशस्तरत्नानीति कर्मधारयो
ऽयत्रबहुव्रीहिः ज्येष्ठामूलीयेमासोज्येष्ठः बहुलासुकृत्तिकासु ब
हुलपक्षः कृष्णपक्षः पूर्णपात्रं यथापरिहृतवस्त्रादि उक्तंचञानं
ददोहिसौहार्दादत्यवस्त्रादिकंबलात् अजानतोहरत्येवपूर्णपा
त्रंतुतत्स्मृतमिति संवादितः प्रत्यक्षीकृतः अतीन्द्रियादेशोभाविं
कथनंसंकालितः गणनाज्ञः पारदृश्वा पर्यंतदर्शी भोजकोरवि
मर्चयित्वापूजकाहिभूयसा गणकाभवंति

संवादितातीन्द्रियादेशोदर्शितप्रभावः संकाल
तोज्योतिषिसर्वासांग्रहसंहितानांपारदृश्वासक
लगणकमध्येसंहितोहितश्च त्रिकालज्ञानभाक्
भोजकस्तारकोनामगणकः समुपसृत्यविज्ञा
पितवान्देवश्रूयतेमान्धाताकिलैवंविधे व्यती
पातादिसर्वदोषाभिषंगरहितेहनिसर्वेषूच्चस्था
नस्थितेष्वेवंग्रहेष्वीदृशिलग्नेभेजे जन्म अर्वा
क्तोस्मिन्नंतरालेपुनरेवंविधेयोगे चक्रवर्त्तिज
ननेनाजनिजगतिकश्चिदपरःसप्तानां चक्रव
र्त्तिनामग्रणीश्चक्रवर्त्तिचिह्नानां महारत्नानां
चभाजनं सप्तानांसागराणांपालयिता सप्तत
तूनांसर्वेषांप्रवर्तयितासप्तसप्तिसमः सुतोयं दे
वस्यजात इति ॥

येमगाइतिप्रसिद्धाःभागवताइत्यन्येध्योम्निचन्द्रार्कौराशिषट्केय
दैकमार्गस्थितौभवतः सव्यतीपातःउक्तंचलाटाचार्येण गगनेहि
मकरार्कौ युगपत्स्यातांयदैकमार्गस्थौ भगणार्धैकश्चयदा शशी
सभवेद्व्यतीपातइति अभिषंगःसंबंधः अर्वाक्पश्चाच्चक्रवार्तिना
मिति ॥ ४१ ॥ भरतार्जुनमांधातृभगीरथयुधिष्ठिराःसगरोनहु
षश्चैवसप्तैते चक्रवार्तिनः कूर्माणीजालहस्तित्वपद्मादि जालचर
णत्वमित्यादि चक्रवार्तिचिह्नानि मण्यश्वकीरचक्राणिवरास्त्री
परिनायकः षडेतानितुरत्नानि कीर्त्तितानिमनीषिभिःपरिनायकः
सेनापतिः गृहनायकोगजाध्यक्षःसप्ततंतूनांयज्ञानांसप्तसप्तिः सूर्यः

अत्रांतरे स्वयमेवानाध्माताअपितारमधुरंशं
खाविरेसुः अताडितोपिक्षुभितजलनिधिजल
ध्वनिधीरंजुगुंजाभिषेकदुन्दुभिः अनाहता
न्यपिमंगलतूर्याणिरेणुःसर्वभवनाभयघोषणा
पटहइवदिगंतरेषुवभ्रामतूर्यप्रतिशब्दःविधुत
केसरसटाश्चसाटोपगृहीतहरिदूर्वापल्लवकव
लप्रशस्तैर्मुखपुटैः समहेषन्त वाजिनःसली
लमुत्क्षिप्तैर्हस्तपल्लवैर्नृत्यतइव श्रवणसुभगं
जगर्जुर्गजा ववौचाचिराच्चक्रायुधमुत्सृजंत्या
लक्ष्म्यानिःश्वासइवसुरामोदसुरभिर्दिव्यानि
लःयज्वनांमन्दिरेषु प्रदक्षिणशिखाकलापक
थितकल्याणागमाः प्रजज्वलुरनिंधनावैता
नवह्नयःभुव स्तलात्तपनीयशृंखलावंधवंधुर
कलशीकोशाःसमुद्गुर्महानिधयः प्रहतमंग
लतूर्यप्रतिशब्दनिभेन दिक्षुदिक्पालैरपिप्र
मोदादाक्रियतेव दिष्टवृद्धिकलकलः तत्क्षणए
वच शुक्लवाससोब्रह्ममुखाः कृतयुगप्रजाप
तयइव

अनाध्मातामुखानिलेनापूरिताः दुन्दुभिरानकः तूर्याणिवादि
त्राणिघोषणाश्रावणा ग्रीवारोमवल्लयस्तएवसटाः धवलंश्वासःय
ज्वनांयज्ञयाजिनांविताने यज्ञेभवाः वैतानाः तपनीयंसुवर्णं वंधु
रोहद्यः कोशआवरणम्॥ ५० ॥

प्रजावृद्धयेसमुपतस्थिरे द्विजातयःसाक्षाद्ध
र्मइवशान्त्युदकफलहस्तस्तस्थौ पुरः पुरो
धाःपुरातन्यःस्थितयइवादृश्यंतागतावांधव
वृद्धाःप्रलंवश्मश्रुजालजटिलाननानि वहल
मलपंककलंककालकायानिनश्यतःकलिका
लस्यवांधवकुलानी ऽवा ऽकुलान्यधावन्तमु
क्तानिवन्धनवृन्दानितत्कालापक्रांतस्याधर्म
स्यशिविरश्रेण्यइवालक्ष्यंतलोकविलुंठिता
विपाणिवीथ्यःविलसद्दुन्मुखवामनकवाधिरवृं
दवेष्टिताः साक्षाज्जातमातृदेवताइववहुवाल
कव्याकुलाननृतुर्वृद्धधात्र्यःप्रावर्त्ततचविगत
राजकुलस्थितिरधःकृतप्रतीहाराकृतिः अप
नीतवाज्रिवेत्रःनिर्दोषांतःपुरप्रवेशःसमस्वामि
परिजनः निर्विशेषवालवृद्धःसमानशिष्टाशि
ष्टजनोदुर्ज्ञेयमत्तामत्तप्रविभागः तुल्यकुलयु
वतिवेश्याविलासः प्रनृत्तसकलकटकलोकः
पुत्रजन्मोत्सवोमहान्

ब्रह्ममुखावेदवदनाश्रपि पुरोधाः पुरोहितः विपाणिवीथ्योवपि
कपथपंक्तयः जातमातृदेवतामार्जाराराननावहुपुत्रपरिवारासूति
कागृहेस्थाप्यते अवरोधोन्तःपुरं ॥

अपरेद्युरारभ्यसर्वाभ्योदिग्भ्यःस्त्रीराज्यानी वावर्जितानिअसुरविवराणीवापावृतानि ना रायणावरोधानीव प्रचलितानि अप्सरसा मिवमहीमवतीर्णानिकुलानिपरिजनेनपृथुक रंडपरिगृहीताः स्नानीयचूर्णावकीर्णकुसुमाः सुमनःस्रजः स्फटिकाशिलाशकलशुक्लकर्पू रखंडपूरिताः पात्रीः कुंकुमाधिवासभांजि भाजनानिचमणिमयानिसहकारतैलतिम्य त्तनुखदिरकेसरजालजटिलानि चंदनधवल पूगफलफालीदन्तुरदंतशफरुकाणि गुंजन्म धुकरकुलपीयमानपारिजातपरिमलानिपा टलानिपाटलकानिचासिन्दूरपात्राणिचपिष्टा तकपात्राणिच वालतालंवमानविटकवीट कांश्च तांवूलवृक्षान्विभ्राणेनानुगम्यमानानि चरणानि कुट्टनरणितमणिनूपुरमुखरित दि ङ्मुखानि

अपरेद्युरित्यादाविदमिदं विभ्राणेन परिजनेनानुगम्यमानानिसा मन्तान्तःपुरसहस्राणि अदृश्यंतेतिसंवंधः स्त्रीराज्यानीतिवहु लत्वं ॥ ५१ ॥ असुरविवराणीवेति उज्ज्वलत्वात् नारायणे त्यादिगौरववत्वाद्वहुलत्वाच्चस्नानीयंस्नानहितंखदिरकेसरंखदि रसारं फालीखाता शफरुकाणि समुद्गाः पारिजातसुगंधिद्र व्यचूर्णं पिष्टातः पटवासकइत्यमरःसिंहः

नृत्यंतिराजकुलमागच्छंति समन्तात्सामंता न्तः पुरसहस्राण्यदृश्यन्त शनैःशनैर्व्यजृंभ तच क्वचिन्नृत्तानुचितचिरंतनशालीनकुलपुत्रकलोकलास्यप्रथितपार्थिवानुरागः क्वचिदन्तः स्मिताक्षितिपालापेक्षितर्क्षावक्षुद्रदासी समाकृष्यमाणराजवल्लभः क्वचिन्मत्तकटककुट्टनीकंठलग्नवृद्धार्य सामन्त नृत्तनिर्भरहसितनरपतिः क्वचित्क्षितिपाक्षिसंज्ञादिष्टदुष्टदासेरकगीतसूच्यमानसचिवचौर्यरतप्रपंचः क्वचिन्मदोत्कटकुटहारिकापरिष्वज्यमानजरत्प्रव्रजितजनितजनहासः क्वचिदन्योन्यनिर्भरस्पर्धोद्धुरचेटकारब्धावाच्यवचनयुद्धः क्वचिन्नृपावला बलात्कारनर्त्यमाननृत्तानभिज्ञांतः पुरपालभावितभुजिष्यः ॥

सच मंगलार्थः विटकवीटकं पंचाशत्तांबूलपत्रैः क्रियते शनैः शनैरित्यादौ व्यजृंभतोत्सवामोद इति संबंधः शालीन मधृष्टता ५२ दास्याअपत्यं दासेरकः क्षुद्राभ्योवेत्यारक् स चिवोमंत्री रतंसुरतं कुटहारिका कुंभदासी गायकनर्त्तकभुजिष्याजनरचितः समूहः चेटकः अवाच्यवचनागाल्यःभाविताःकथंनृत्यंतीत्यवलोकिताः भुजिष्यादास्यः ॥ ॥

सपर्वतइवकुसुमराशिभिः सधाराग्रहइवशी धुप्रपाभिः सनन्दनवनइव पारिजातकामो दैः सनीहारइव कर्पूररेणुभिः साट्टहासइव पटहरवैः सामृतमथनइव कलकलैः सावर्त्त इवरासकमंडलैः सरोमांचइव भूषणमणिकि रणैः सपट्टबंधइव चन्दनललाटिकाभिः सप्र सवइवप्रतिशब्दकैः सप्ररोहइव प्रसाददानैः उत्सवामोदः स्कन्धावलंबमानकेसरमालाः कांबोजवाजिनइवास्कंदंतः तरलतारकाह रिणाइवोड्डीयमानाः सगरसुताइव खनित्रै र्निर्दयैश्चरणाभिघातैर्दारयंतोभुवमनेकसह स्रसंख्याश्चिक्रीडुर्युवानःकथमपि तालावच रचारणचरणक्षोभं चक्षमे क्षमा ॥

रासकमंडले ऽऽयश्रभ्रांतनृत्तवृंदैः ललाटेऽलंकारोललाटिका कर्णललाटात्कन्नलंकारे प्ररोहोंकुरः केसराणि वकुलानिग्री वारोमवल्लयश्च कांबोजा वाह्लिकदेशजाः आस्कंदंतः आक्र मंतः तालैरवचरंति तालावचराः तालावचरमुक्तभ्रमणं स्फु टितालिकाशतैर्युक्तं चारणजनस्य कैश्चिद्भ्रमणं तत्कांस्यता लिकयारडाशिष्टापंचकुलमारिवकादाक्षिणापथे तालावाइति प्रसिद्धाः खेलतांक्रीडतां ५३ फेलुः विभिदुः शोणाशं लोहि तादिकंस्थानस्थानेष्विन्यासादावेवं विधेनातोद्येनाऽनुगम्यमानाः पण्यविलासिन्यः प्रानृत्यन्निातिसंबंधः आलिंग्यकोमुरजभेदः

क्षितिपालकुमारकाणांखेलतामन्योन्यास्फा लैराभरणेषुमुक्ताफलानि फेलुः सिंदूररेणुना पुनरुत्पन्नाहिरण्यगर्भगर्भशोणितशोणाशमि व ब्रह्मांडकपालमभवत् पटवासपांसुपटलेन प्रकटितमन्दाकिनीसैकतसहस्रमिवशुशुभेन भस्तलं विप्रकीर्यमाणपिष्टातकपरागपिंजरि तातपा भुवनक्षोभविशीर्णपितामहकमलाकें जल्करजोराजिरंजिताइवरेजुर्दिवसाः संघट्ट विघटितहारपतितमुक्ताफलपटलेषु चस्फाल लोकः स्थानस्थानेषुच मन्दमन्दमास्फाल्य मानालिंग्यकेनशिंजानमंजुवेणुना झणझणा यमानझल्लरीकेण ताडयमानतंत्रीपटहिकेन वाद्यमानानुत्तालालावुवीणेन कलकांस्यको शीक्वणितकाहलेन समकालदीयमानानुत्ता लतालकेनातोद्यवाद्येनाऽनुगम्यमानः पदे पदे झणझणितभूषणरवैरपि सहृदयैरिवानु वर्त्यमानताललयाः ॥

तंत्रीपटहिका पटहभेदः नउत्तालाअनुत्तालाअनुद्भटशब्दाःकां स्यकोशी शय्याकाहलेनव्याप्तेन काहलं कांस्यद्वयाभिघातःआ तोद्यमिति उक्तंच ततंवीणादिकंवाद्यमानद्धंमुरजादिकं वंशा दिकंतुसुषिरंकांस्यतालादिकंघनं चतुर्विधमिदंवाद्यंवादित्रातो द्यनामकमिति लयशब्देनतालएवमाननिधानंयतोनामवच्छेदे नविधिनिवर्त्तयमानोद्रुतमध्यविलंबिताख्यमानवर्त्तनविधौ सए वतालस्तु छेदमलंघमानःस्याद्व्यपदेशोलयइतिख्यातः इति ॥

कोकिलाइव मदकलकाकलीकोमलालापिन्यो विटानां कर्णामृतान्यश्लेषरासकपदानि गायंत्यःसमुंडमालिकाः सकर्णपल्लवाः सचन्दनतिलकाःसमुच्छ्रिताभिर्वलयावलीवाचालाभिर्बाहुलतिकाभिःसवितारमिवालिंगयन्त्यः कुंकुमप्रमृष्टिरुचिरकायाः काश्मीरकिशोर्यइव वल्गन्त्यःनितंवविंवलंबिविकटकुरंठकशेखराः प्रदीप्ताइव रागाग्निना सिंदूरच्छटाछुरितमुखमुद्राशासनपट्टपंक्तयइवाप्रतिहतशासनस्य कन्दर्पस्य मुष्टिप्रकीर्यमाणाकर्पूरपटवासपांसुलाम नोरथसंचरणरथ्याइव यौवनस्योद्दामकुसुमदामताडिततरुणजनाः प्रतीहार्यइवतरुणमहोत्सवस्य प्रचलत्पत्रकुंडलालल न्त्यालताइवमदनचन्दनद्रुमस्य ललितपदहंसकरवमुखराः

मदेनकलोहृष्टः काकलीकलसूक्ष्ममधुरगीतध्वनिःअश्लीलानि ग्राम्यानि ॥ ५४ ॥ कुंकुमेन परिमृष्टिः परिमार्जनं उद्वर्त्तनादि अन्यत्र कुंकुमस्थलीषुलोठनात् कुरंठकाआम्लातकानितेषांरक्तत्वमाह प्रदीप्ताइति मुखमुद्रावक्रटंकः शासनपट्टानां मुखेयेयामुद्रादीयंते ताअपिससिंदूराः मनोरथैस्यादिरथाश्च रथ्यासुसंचरंतितद्दशात्पांसुलाआपिभवंति उद्दामेतिप्रतीहार्यश्चताअप्येवंविधाभवंतिप्रचलंतिनृत्तवशाद्दोलायमानानिपत्राणिविशेषकानितथाकुंडलानियासांअन्यत्रपत्राणिपल्लवाः कुंडलानिसमूहाः

समुल्लसंत्योवीचयइवशृंगाररसस्यवाच्यावा
च्यविवेकशून्यावाल्लक्रीडाइव सौभाग्यस्यघ
नपटहरवोत्कंटाकितगात्रयष्टयः केतक्यइवकु
सुमधूलिमुद्गिरंत्यः कमलिन्यइव दिवसमुत्फु
ल्लाननाः कुमुदिन्यइव रात्रावनुपजातनिद्राः
आविष्टाइवनरेन्द्रवृन्दपरिवृताः प्रीतयइव हृ
दयमपहरंत्यः गीतयइवरागमुद्दीपयंत्यः पु
ष्टयइवानन्दमुत्पादयंत्यःमदमपिमदयंत्यइव
रागमपिरंजयंत्यइवआनन्दमप्यानंदयंत्यइव
नृत्यमपि नर्त्तयमानाइव उत्सवमप्युत्सुकयं
त्यइवकटाक्षितेषु पिवंत्यइवापांगशुक्तिभिस्त
र्जनेषुसंयमयंत्यइ वनखमयूखपाशैःकोपाभि
नयेषुताडयंत्यइव भ्रूलतातिभागैःप्रणयसंभा
षणेषुवर्षंत्यइवसर्वरसांश्चत्वरचंक्रमणेषुविकि
रंत्यइव विकारान्पण्यविलासिन्यःप्रानृत्यन्

ललितेषुपदेषु हंसका नूपुराः पदांगदंतुलाकोटिमंजीरोनूपुरो
स्त्रियां हंसकाः पादकटकाइति यद्वा ललितानि पदानि यासां
ताश्चताहंसकरवमुखराश्च ललितपदाश्च तेहंसाएव हंसकाश्चेति
वा वालक्रीडाश्चविवेकशून्याःघनोनिरंतरंमेघश्च केतक्योपिस
केतकरजस्काःनिद्रास्वापःसंकोचश्चआविष्टाभूतादिगृहीताःनरे
न्द्रोराजामंत्रीचरागोभिष्वंगोहिंगुलकादिश्चमदमपिमदयंत्यइवे
त्यादिमदेनाहिसर्वोमत्तोभवतिमदस्तुताआश्रित्यमत्तएवमुत्तरत्र५५

अन्यत्रवेत्रिवेत्रवित्रासितजनदत्तान्तराला: ध्रियमाणधवलातपत्रवनावनदेवताइवकल्प तरुतलविचारिण्य: काश्चित्स्कंधोभयपाली लंबमानलंबोत्तरीयलग्ना लीलादोलाधिरूढा इवप्रेंखन्त्य:काश्चित्कनककेयूरकोटिपाट्यमा नपटांशुकोत्तरंगा: तरंगिण्यइव तरच्चक्रवाक सीमंत्यमानस्त्रोतस: काश्चिदुद्धूयमानधवल चामरसटालग्नात्रिकंठकवलितविकटकटाक्षा: सरस्यइवहंसाकृष्यमाणनीलोत्पलवना:का श्चिच्चलच्चरणच्युता लक्तकारुणस्वेदशीकर सिच्यमानभवनहंसा:संध्यारागरज्यमानेन्दु विंबाइव कौमुदीरजन्य: काश्चित्कंठनिहित कांचनकांचीगुणां चितकंचुकिविकारकुंचितभु व: कामवागुराइव प्रसारितवाहुपाशा: राज महिष्य:प्रारब्धनृत्ताविरेसु: सर्वतश्चनृत्यत: स्त्रैणस्य गलद्भि:

अन्यत्रेत्यादौराजमहिष्योविलेसुरितिसंवंध: ध्रियमाणधवलात पत्रवनाइत्यादौ वाक्यार्थोपमाविचार्या पालिपंक्ति: कनकके यूरेणेति कनकग्रहणेन चक्रवाकसादृश्य माह तरंग उत्तरीयं सीमंत्यमानानि द्विधा क्रियमाणानि त्रिकंठक:कर्ण भरणभेद:त्रिकंठकस्तुद्वयश्च:स्यात्रिभीरत्नैश्चभूषणं कौमुदीकार्त्ति कज्योत्स्ना तद्युक्तारजन्योरात्रय:आकुंचित:आकृष्ट:

पदालक्तकैररुणिता रागमयीवशुशोणक्षोणीस मुल्लसद्भिः स्तनमंडलैर्मंगलकलशमयइववभू वमहोत्सवः भुजलताविक्षेपैर्मृणालवलयमय इवरराजजीवलोकः समुल्लसद्भिर्विलासस्मि तैस्तडिन्मयइवाक्रियत कालः चंचलानां चक्षु षामंशुभिः कृष्णशारमयाइवासन्वासराः समुल्लसद्भिःशिरीषकुसुमस्तवककर्णपूरैःशुक पिच्छमयइव हरितच्छायोभूदातपः विस्रंभ मानैर्धम्मिलतमालपल्लवैः कज्जलमयमिवा लक्ष्यतांतरिक्षंउत्क्षिप्तैर्हस्तकिसलयैः कम लिनीमयाइव वभासिरेदृष्टयः माणिक्येन्द्रा युधानामर्चिषा चापपत्रमयाइव चकाशिरेरवि मरीचयः रणतामाभरणगणानां प्रतिशब्द कैः किंकणीमय्यइव शिशिंजिरेदिशःजरत्यो प्युन्मादिन्यइवरमण्योरेणुः वर्षीयांसोपि ग्र हगृहीताइवनापत्रपिरे ॥

विलेसुश्चिक्रीडुः स्त्रीणांसमूहः स्त्रैणं ॥ ५६ ॥ तस्य शुशोण शोणीभूत् कालः होरादिलक्षणः कालश्च कृष्णःकथंतडिन्मयो रक्तवर्णइतिविरोधच्छाया माणिक्यमुत्कृष्टंरत्नंधाम्मिलाःसंयताःकें शाःवभासिरेशोभंताकिंकिण्यःसूक्ष्मघंटाः शिशिंजिरेसशब्दाअभ वन्रेणुः स्तनितवत्यः वर्षीयांसोवृद्धतराःअपत्रपिरेलज्जामभजन्त

विद्वांसोपिमत्ताइवात्मानं विसस्मरुः निनर्त्त यिषयामुनीनामपिमनांसिविपुस्फुलुःसर्वस्वं चददौनरपतिः दिशिदिशिकुवेरकोशाइवाऽ लुप्यन्तलोकेनद्रव्यराशयः एवंचवृत्तेतस्मि न्महोत्सवेशनैःशनैरप्यतिक्रामतिकाले देवे चोत्तमांगनिहितरक्षासर्षपे समुन्मिषत्प्रतापा ग्निस्फुलिंगइव गोरोचनापिंजरितवपुषि स मभिव्यज्यमानसहजक्षात्र तेजसीवहाटकव द्धविकटव्याघ्रनखपंक्तिमंडितग्रीवकेहृदयोद्भि द्यमानदर्पांकुरइव प्रथमाव्यक्तजल्पितेनस त्यस्यशनैरोंकारमिवकुर्वाणे मुग्धस्मितैःकुसु मैरिवमधुकरकुलानि वंधुहृदयान्याकर्षतिज ननीपयोधरकलशपयः शीकरसेकादिवजा यमानैर्विलासहासितांकुरैर्दशनकैरलंक्रियमा णमुखकमलके चारित्रइवांतःपुरस्त्रीकदंव केनपाल्यमानेमंत्रइवसचिवमंडलेनरक्ष्यमा णे वृत्तइव कुलपुत्रकलोकेनामुच्यमाने

पुस्फुलुश्चेरुः एवंचेत्यादौ देवी यशोवती राज्यश्रियमधत्तेतिसंवं धः ॥ ५७ ॥ हाटकंसुवर्णं ऊँकारमोमितियावत् पयोधरौस्तनौ पयोधराश्चमेघाःपयःक्षीरंजलंचपंचवाषट्वापंचषाणि

यशसीवात्मवशेन संवर्ध्यमाने मृगपतिपोत इव रक्षिपुरुषशस्त्रपंजरमध्यगते धात्रीकरांगुलिलग्ने पंचषाणि पदानि प्रयच्छति हर्षे षष्ठं वर्षमवतरति च राज्यवर्धने देवी यशोवती गर्भेणाधत्त नारायणमूर्त्तिरिव वसुधां देवीं राज्यश्रियमपूर्णेषु च प्रसवदिवसेषु दीर्घरक्तनालनेत्रामुत्पलिनीमिव सरसीं हंसमधुरस्वरां शरदमिव प्रावृट् कुसुमसुकुमारावयवां वनराजिमिव माधवश्रीः महाकनकावदातां वसुधारामिव द्यौः प्रभावर्षिणीं रत्नजातिमिव वेला सकलजननयनानन्दकारिणीं चन्द्रलेखामिव प्रतिपत् सहस्रनेत्रदर्शनयोग्यां जयन्तीमिव शचीसर्वभूभृदभ्यर्हितां गौरीमिव मेना प्रसूतवती दुहितरम् ययाद्वयोः सुतयोरुपरि स्तनयोरिवैकावलीलतया नितरामराजत

पूर्णेष्वित्यादौ देवी दुहितरं प्रसूतवतीति संवंधः रक्तनालैः रक्ते एव नेत्रे यस्याः रक्तानि नालानि नेत्राणि मूलानि च यस्याः हंसवत्तैश्च मधुरः अवयवाः अंगानि विभागाः च ५८ माधवो वसंतः महाकनकं तिलसुवर्णं वसुधारा धनवृष्टिः इयं च महाभ्युदयसूचनाय दिवापतति वेलाजलविकृतिः इन्द्रोपि सहस्रनेत्रः जयंतः शक्रपुत्रः भूभृतो राजानः पर्वताश्च मेना हिमवन्महिला ययेत्यादौ यया दुहित्रा द्वयोः तयोरुपरिजातया यशोवती नितरामराजतेति सम्बंधः ॥

अस्मिन्नेवतुकाले देव्यायशोवत्याभ्राता सुतमष्टवर्षदेशीय मुद्धूयमानकुटिलकाकपक्षकशिखंडं खंडपरशुहुंकाराग्निधूमलेखानुवद्धमूर्धानंमकरध्वजमिव पुनर्जातमेकेनेन्द्रनीलकुंडलांशुश्यामलितनशरीरार्धेनेतरेणचात्रिकंठकमुक्ताफलालोकधवलितेन संपृक्तावतारमिवहरिहरयोर्दर्शयन्तं पीनप्रकोष्ठप्रतिष्ठितपुष्पलोहवलयं परशुराममिवक्षत्रक्षपणक्षीणपरशुपाशचिह्नितं वालतांगतंकण्ठसूत्रग्रथितभंगुरप्रवरांकुरं हिरण्यकशिपुमिवोरः काठिन्यखंडितनरसिंहनखरखंडं गृहीतजन्मांतरंशैशवेपि सावष्टंभंवीजमिववीर्यद्रुमस्यभंडिनामानमनुचरंकुमारयोरर्पितवान्

अस्मिन्नित्यादौ देव्यायशोवत्या भ्राता स्वतनयं भंडिनामानं कुमारयोरनुचरमर्पितवानितिसंवंधः काकपक्षकः चूडाएव शिखंडः पिच्छं पुष्पलोहं मणिभेदः मृताग्निहोत्रंरथचक्रामिति केचित् रणहतवीरकायशातनवशात् परशोः पाशावशेषता भंगुरःकुटिलः वीजमिवेति शैशवादिजावस्थोत्प्रेक्षतेनतुद्रुमावस्था५९

अवनिपतेस्तु तस्योपरिपुत्रयोस्तृतीयस्यनेत्र योरिवेश्वरस्यतुल्यंदर्शनमासीत्राजपुत्रावपि सकलजीवलोकहृदयानंददायिनौतेनप्रकृति दक्षिणेनमधुमाधवाविव मलयमारुतेनोपेतौ नितरांरेजतुः क्रमेणच अपरेणवभ्रात्राप्रजा नन्देन सहवर्धमानौ यौवनमवतेरतः स्थिरो रुस्तंभौचपृथुप्रकोष्ठौदीर्घभुजार्गलौविकटो रःकपाटौप्रांशुसालाभिरामौ महानगरसन्नि वेशाविवसर्वलोकाश्रयक्षमौ वभूवतुः अथ चन्द्रसूर्याविवस्फुरज्ज्योत्स्नायशःप्रतापाक्रां तभुवनावभिरामदुर्निरीक्षौ

अवनीत्यादौ अवनिपतेस्तु तस्योपरिपुत्रयोस्तुल्यदर्शन मालो कनमितिसंवंधः अन्यत्रदर्शनंदृष्टिः ॥ तृतीयस्येतिच ईश्व रस्येति साधारणं सकलेत्यादि साधारणं दक्षिणोनुकूलोदा क्षिणात्यश्च ॥ ५९ ॥ मधुमाधवौ चैत्रवैशाखौ ऊरुस्तंभा विवउरवोमहांतश्च स्तंभाः प्रकोष्ठमंतरंविद्यादरत्निमाणिवंध योः स्थानविशेषोवा कपाटोद्वारपटः सालोवृक्षभेदः प्राकार श्च सर्वलोकेत्यादिसाधारणं अथेत्यादौ तौ सर्वस्यामेव पृथिव्यां प्रकाशतांजग्मतुरितिसंवंधः स्फुरज्ज्योत्स्नाजालंयद्यशस्तथाप्र तापस्ताभ्यामन्यत्रज्योत्स्नायशइव भुवनाक्रमणसमर्थत्वं प्रताप आपतिः आतपश्च

अग्निमारुताविव समभिव्यक्ततेजोबलावे कीभूतौ शिलाकठिनकायबंधौहिमवद्विंध्या विवाचलौ महावृषाविव कृतयुगयोग्यौ अरुणगरुडाविव हरिवाहनाविभक्तशरीरौ इन्द्रोपेन्द्राविव नागेन्द्रगतौकर्णार्जुनाविवकु डलकिरीटधरौपूर्वापरदिग्भागाविवसर्वतेज स्विनामुदयास्तमयसंपादनसमर्थौ

तेजस्तैक्ष्ण्यं प्रकाशश्च बलंसामर्थ्यंउभयत्रापि एकीभूतावन्यो न्यानुवर्त्तिनौ मिलितौच शिलावत्ताभिश्चकठिनः अचला वकम्पौगिरीचाचलौ कृतयुगमाद्ययुगभेदः मूर्धन्यकाष्ठंच योग्यावुचितौ योग्याचशिक्षायद्वाकृतयुगे तत्रशकटादौसम र्थौ हरयोऽश्वाः सूर्यविष्णूच हरी उक्तंच यमानिलेन्द्रचन्द्रा र्कविष्णुशासिंहाखुवाजिषु शुकाहिकपिभेकेषुहरिर्नाकपिलेत्रि ष्विति विभक्तंस्कंधमध्यादिविभागेन स्थितं परिकल्पितंच ना गऐरावणः शेषश्च नागेन्द्रवद्गतंययोःनागेंद्रेवागतावारूढौ तेज स्विनोवीराआदित्याश्च उदयोवृद्धिराविर्भावश्च अस्तमयोनाश स्तिरोधानंच

अमान्ताविवातिमानेनआसन्नवेलार्गलानिरो
धसंकटेकुकुटीरके तेजःपराङ्मुखींछायामपि
जुगुप्समानौस्वात्मप्रतिविंबेनापिपादनखल
ग्नेनलज्जमानौ शिरोरुहाणामपिभंगेन दुःख
मवतिष्ठमानौ चूडामणिसंक्रांतेनापि द्वितीये
नातपत्रेणापत्रपमाणौ भगवति षण्मुखेऽपि
स्वामिशब्देनासुखायमानश्रवणौ दर्पणदृष्टे
नापिप्रतिपुरुषेणदूयमाननयनौ संध्यांजलि
घटनेष्वपि शूलायमानोत्तमांगौ जलधरधृते
नापिधनुषा दोधूयमानहृदयावालेख्य क्षिति
पतिभिरपि अप्रणमद्भिः संतप्यमानचरणौ
परिमितमंडलसंतुष्ट ॥

अमांताववर्त्तमानौ वेला जलनिधिजलमर्यादा ॥ ६० ॥ कुभू
मिरेव कुटीरकं जरद्गृहं भंगः कुंचितत्वं युद्धे पलायनंच
अपत्रपमाणौ लज्जंतौ स्वामीकुमारः प्रभुश्च प्रतिपुरुषेणेति स्प
र्धायांप्रतिशब्दः दोधूयमानं संतप्यमानं मंडलं विंबंविषयश्च

तेजःसावितुरप्यवहुमन्यमानौ भूभृदपहृतलक्ष्मीकं सागरमप्युपहसंतौ वलवंतमकृतविग्रहंमारुतमपिनिन्दंतौ हिमवतोपिचमरीवालव्यजनवीजितेनदह्यमानौजलधीनामापिशंखैःखिद्यमानौ चतुःसमुद्राधिपतिमपरंप्रचेतसमप्यसहमानौअनपहृतच्छत्रानपिविच्छायानवनिपालान्कुर्वाणौ साधुष्वप्यसेवितप्रसन्नौ मुखेन मधु क्षरन्तौ दुष्टराजवंशानूष्मणा दूरस्थितानपिम्लानिमानयंतौ अनुदिवसं शस्त्राभ्यासश्यामिकाकलंकितमशेषराजकप्रतापाग्निनिर्वापणमलिनमिव कलतरमुद्वहंतौयोग्याकालेषु धीरैर्धनुर्ध्वनिभिरभ्यर्णोपभोगाद्दिग्वधूभिरिवालपंतौ राज्यवर्धनइतिहर्ष इति

तेजः प्रकाशस्तैक्ष्ण्यंच भूभृद्वृत्रप्रकरणान्मंदरोराजानश्च भूभृतः लक्ष्मीःसमृद्धिरपि विग्रहंवैरं देहश्च अनपहृतेत्यादि वर्ण्यमानयोऽवस्थाभिप्रायेणोक्तं छाया कांतिरातपप्रतिपक्षजातिश्च सति छत्रे विच्छायत्वं न भवतीतिविरोधः साधुष्विति साधूनां सेवाव्यतिरेकेण प्रसादायोग्यत्वं प्रसन्नौ प्रसादवंतौ सुरा अपि प्रसन्ना मधु माधुर्यमद्यंच असेवितप्रसन्नश्च कथंमुखेनमधुक्षरतीतिविरोधःऊष्मास्मयस्तापश्च ऊष्मणाचदाहजन्यावंशावेणवोनिकटस्थोम्लानीक्रियते नतु दूरस्थइतिविरोधः ६१

सर्वस्यामेव पृथिव्यामाविर्भूतशब्दप्रादुर्भावौ स्वल्पीयसैवकालेनद्वीपांतरेष्वपि प्रकाशतां जग्मतुःएकदाच तावाहूय भुक्तवानभ्यंतरगतः पितासस्नेहमवादीत् वत्सौ प्रथमं राज्यांगं दुर्लभाःसद्भृत्याःप्रायेणपरमाणव एवसमवायेष्वनुगुणीभूय द्रव्यं कुर्वंति पार्थिवं क्षुद्राः क्रीडारसेन नर्त्तयंतौ मयूरतां नयान्ति वालिशाःदर्पणमिवानुप्रविश्यात्मीयां प्रकृतिं संक्रामयंति पल्लविकाः स्वप्ना इव मिथ्यादर्शनैरसद्बुद्धिं जनयंति॥

निर्वपणं शमनं योग्याअभ्यासःअभ्यर्णः प्रत्यासन्नः)शब्दः प्रादुर्भावः ख्यातिः प्रथमं प्रधानभूतं प्रायेणेति क्षुद्राःप्रायेणसमवायेषु मंत्रेष्वनुगुणीभूययथा क्षुद्राः अल्पपरिमाणाः परमाणवः पार्थिवं पृथिव्यादिजातीयं घटादिद्रव्यं कुर्वंति कथंसमवायेष्वनुगुणीभूय अयुतसिद्धानामाधाराधेयभूतानामिह प्रत्ययहेतुः संयोगः समवायः यथा तंतुषुपटइति कार्यस्यद्रव्यस्यावयविन आरंभप्रतियोगीभावेनानुगुणत्वं मयूरोधूर्तजनयोग्योहासोवाशिखंडीच वालिशाधूर्त्ताः कुमाराश्च वालकाहि क्रीडारसेनमयूरंनर्त्तयंते अनुप्रविश्यचित्तरंजनांकृत्वाआसाद्यचप्रकृतिं स्वभावंशरीरंचपल्लविकाविटाः किसलयानिचामिथ्यादर्शनैरसदागमैरलीकवस्तुप्रकाशनैश्चअसतीमशोभनांवुद्धिं असति अविद्यमानेचवुद्धिः

विप्रलंभका गीतनृत्तहासितैरुन्मत्ततामावहं
तिउपेक्षिताविकाराइव वातिकाः चातकाइव
तृष्णावन्तोनशक्यंते ग्रहीतुमकुलीनाःमान
सेमीनमिव स्फुरंतमेवाभिप्रायं गृह्णंतिजा
लिकाः यमपट्टिकाइवांवरे चित्रमालिखंत्यु
द्गीतकाः शल्यं हृदये निक्षिपंत्यतिमार्गणाःय
तःसर्वैर्दोषाभिषंगैरसंगतौ

विप्रलंभकाःप्रतारकाःवातिकाधूर्त्ताःवातोत्थिताश्चतृष्णाधनगर्धः
पिपासाच ग्रहीतुमावर्जितुंअवष्टब्धुंच अकुलीनाःअकुलोद्गताः
कौभूमौननिलीनाश्चाकाशचारित्वंमानसेचित्तेसरोभेदेचस्फुरंतमु
त्पद्यमानंअनुत्पन्नाभिभवमितियावत् सतिकार्येहिसर्वएवाभिप्रा
यंलक्षयति एतेत्रप्रागेवअन्यत्रचचलंतंजालिकाःकौसृतिकाः केव
र्त्ताश्च यमपट्टिकाः गृहीतपट्टालिखितसपरिवारधर्मराजाः अंवरे
आकाशे वस्त्रेच अंबरे चित्रमालिखंतीति असंभाव्यमानान
र्थानारभंतइति यावत् अन्यत्रचित्रमालेख्यं उद्गीतकादुच्चरित्वा
दुच्चैर्गीतंयेषांतेच शल्यामिवशल्यं पीडा फलिकाच अतिमार्ग
णा अतिक्रम्य ये संश्रयन्ते अन्यथा महाभागिनोस्य वक्तुरनु
चितयमुक्तिःस्यात् तेनानुरूपसंभवमविच्छिन्नंच मार्गमतिमा
र्गणंमार्गणाःशराश्चहृदयेशल्यंफलिकामर्पयन्ति ६२ अभिषंगः
संपर्कः

वहुधोपधाभिःपरीक्षितौ शुची विनीतौ विक्रान्तावभिरूपौ मालवराजपुत्रौ भ्रातरौ भुजाविवमे शरीरादव्यतिरिक्तौ कुमारगुप्तमाधवगुप्तावस्माभिर्भवतोरनुचरत्वार्थमिमौ निर्दिष्टौ अनयोरुपरि भवद्भ्यामपि नान्यपरिजनसमवृत्तिभ्यां भवितव्यं इत्युक्त्वा तयोराह्वानाय प्रतीहारमादिदेश न चिराद्द्वारदेशनिहितलोचनौ राज्यवर्धनहर्षौ प्रतीहारेण सह प्रविशन्तमग्रतो ज्येष्ठमष्टादशवर्षवयसं नात्युच्चं नातिखर्वमतिगुरुभिः पदन्यासैरनेकनरपतिसंचरणचलां निश्चलीकुर्वाणमिवोर्वीं अनवरताभ्यस्त लंघनघनोपचयकठिनमांसमेदुरादूरुद्वयान्निष्पततेवाऽनुल्वणजानुग्रंथिप्रसूतेन तनुतरजंघाकांडयुगलेन भासमानं उल्लिखितपार्श्वप्रकाशितक्रशिम्नामन्दरमिव सुरासुररभसभ्रामितवासुकिकषणक्षीणेन मध्ये न लक्ष्यमाणं

उपधा भृत्यस्य धर्मादिविषयः परीक्षणोपायः उक्तंच उपेत्याधीयते यस्मादुपधेतिततः स्मृता उपाय उपाधा ज्ञेया तयाभृत्यान्परीक्षयेदिति विक्रान्तौ शूरौ अभिरूपौ सुन्दरौ नचिरादित्यादौ राज्यवर्धनहर्षौ प्रतीहारेणसह प्रविशंतमग्रतो ज्येष्ठं कुमारगुप्तं पृष्ठतश्चतस्य कनीयांसंनीतिमत् त्वंप्रकाशितं खर्वं वामनं मेदुरात्पुष्टात् अनुल्वणोऽनुद्धत उल्लिखितमिवोल्लिखितं तनूकृतं ६३

अतिविस्तीर्णेनोरसा स्वामिसंभावनानामपरि
मितानामवकाशमिवप्रयच्छंतंप्रलंबमानस्यभु
जयुगलस्य निभृतललितैर्विक्षेपैरतिदुस्तरं त
रंतामिव यौवनोदधिं वामकरकटकमाणिक्य
मरीचिमंजरीजालिन्या समुद्भिद्यमानप्रतापा
नलशिखापल्लवयेव चापकिणलेखयांकि
तपीवरप्रकोष्ठमालोहिनीमुच्चांसतटावलंबिनी
मस्त्रग्रहणव्रतविधृतांरौरवीमिवत्वचंकर्णाभर
णमणेः प्रभां विभ्राणमुत्कोटिकेयूरपत्रभंगपु
त्रिकाप्रतिविंबगर्भकपोलंमुखंचन्द्रमसमिवहृ
दयस्थितरोहिणीकमुद्वहन्तं अचपलस्तिमि
ततारकेणाधोमुखेन चक्षुषा शिक्षयंतामिव ल
क्ष्मीलाभोत्तानितमुखानिपंकजवनानिविनयं
स्वाम्यनुरागमिवाम्लातकमुत्तंसीकृतांशिरसा
धारयंतंनिर्दययाकंकणभंगभीतसकलकार्मुका
र्पितामिव नम्रतां प्रकाशयंतं शैशव इव नि
र्जितैरिन्द्रियैररिभिरिव संयतैःशोभमानंप्रण
यिनीमिवविश्वासभूमिंकुलपुत्रतामनुवर्त्तमानं

रुरुर्मृगभेदःतस्यमयेरारवी तां अम्लातकं पुष्पभेदं करंटिकापुष्प
भेदंवा उत्तंसीकृतं शेखरतांनीतम्

तेजस्विनमपि शीलेनाल्हादकेनसवितारमि व शशिनांतर्गतेन विराजमानमचलानामपि कायकार्कश्येन गंधनमिवाऽऽचरंतंदर्शन क्रीतमानन्दहस्ते विक्रीणानमिव जनसौ भाग्येनकुमारगुप्तं पृष्ठतस्तस्य कनीयांस मतिप्रांशुतयागौरतयाचमनःशिलाशैलमिव संचरंतमनुल्वणमालतीकुसुमशेखरनिभेननि निर्जगमिषता गुरुणाशिरसि चुंवितमिवयश सा परस्परविरुद्धयोर्विनययौवनयोश्चिरात्प्र थमसंगमचिह्नमिव भ्रूसंगतकेनकथयंतमति धीरतया हृदयनिहितांस्वामिभक्तिमिवनिश्च लांदृष्टिंधारयंतमच्छाच्छचन्दनरसानुलेपशी तलं सन्निहितहारोपधानं वक्षःस्थमनंतसा मन्तसंक्रान्तिश्रान्तायाः

शीलेनाप्यंतर्गतेन एतेन चास्यादभिकत्वमुक्तं गंधनं मर्द नमुद्वाहनं वा हर्षमेव जनं वश्यमेव सर्वं करोतीति दर्श नक्रीतता क्रीतमावर्जितम् ६४ ॥ पुनश्चानंदोत्पादनद्वारेणा नन्दवन्तं तच्छरणं करोतीति तत्र विक्रियोत्प्रेक्षा यत्तुवस्तुकेन चिदर्थेन क्रीतं तदप्यन्यस्य विक्रीयतइतिउक्तं विक्रीणानमिति गौरतयेतीत्थंभूतलक्षणे तृतीया शेखरस्यानुल्बणत्वं विनयं व क्ति गुरुणाभूयिष्ठेन चुंबितमधिष्ठितंगुरुणाचपित्रानिर्गच्छता पु नःशिरसिचुंब्यते भ्रूसंगतकंविनयं उपधानंगंडकं

श्रियोविशालंशशिमाणि शिलापट्टशयनमि
वविभ्राणंचक्षुःकुरंगकैःघोणावंशं वराहैःस्कं
धपीठं महिषैः प्रकोष्ठवंधं व्याघ्रैः पराक्रमंके
सारिभिः गमनं मतंगजैः मृगयाक्षपितशेषैर्भा
तैरुत्कोचमिवदत्तंदर्शयन्तं माधवगुप्तं ददृश
तुः प्रविश्यचदूरादेव चतुर्भिरंगैरुत्तमांगेन च
गांस्पृशन्तौनमश्चक्रतुःस्निग्धनरेन्द्रदृष्टिनि
र्दिष्टामुचितांभूमिंभेजातेमुहूर्त्तंचस्थित्वाभूप
तिरादिदेशतावद्यप्रभृतिभवद्भ्यांकुमारावनु
वर्त्तनीयावितियथाज्ञापयतिदेवइतिमे दिनी
दोलायमानमौलिभ्यामुत्थायराज्यवर्धनहर्षौ
प्रणेमतुःतौच पितरंततश्चारभ्यक्षणमपिनि
मेषोन्मेषाविवचक्षुर्गोचरादनपयन्तावुच्छ्वा
सनिःश्वासाविव नक्तन्दिवमभिमुखं स्थितौ
भुजाविवसततपार्श्ववर्त्तिनौ कुमारयोस्तौवभू
वतुः अथराज्यश्रीरपि नृत्तगीतादिषु

विशालंप्रशस्तंविशालेचांगानिप्रसार्यंते शीतलत्वाच्चांगनिर्वृतिः
घोणा नासिकाएव स्पष्टत्वाद्वंशस्तंउत्कोचमिवेतिदंडमित्यर्थः
चतुर्भिरंगैरिति जानुभ्यांहस्ताभ्यांचोत्तमांगेनभूमिं ६५ तौचपितर
मिति तौचराज्यवर्धनहर्षौ लब्धानुचरावभिवन्दनायपितरंप्रणे
मतुरित्यर्थः

विदग्धासु सर्व्वासु सकलासु कलासुच प्रतिदिनमुपचीयमानपरिचया शनैः शनैरवर्धतपरिमितैरेवदिवसैर्यौवनमारुरोहनिपेतुरेकस्यांतस्यांशराइवलक्ष्यभुविभूभुजांसर्वेषांदृष्टयःदूतप्रेषणादिभिश्चतांययाचिरे राजानः कदाचित्तु राजांतःपुरप्रासादस्थितो वाह्यकक्ष्यावस्थितेनपुरुषेणस्वप्रस्तावागतामार्यामशृणोत् उद्वेगमहावर्त्तेपातयति पयोधरोन्नमनकाले सरिदिवतटमनुवर्षं विवर्धमानासुतापितरम् तांच श्रुत्वापार्श्वस्थितां महादेवीमुत्सारितपरिजनोजगाद देवि तरुणीभूता वत्सा राज्यश्रीः एतदीयागुणवृत्तेव क्षणमपिहृदयान्नापयाति मे चिन्ता यौवनारंभ एव च कन्यकानामिन्धनीभवन्ति पितरः सन्तापानलस्य हृदयमंधकारयति मे दिवसामिव पयोधरोन्नतिरस्याःकेनापि कृताधर्म्या नाभिमता मे स्थितिरियं

विदग्धासु प्रवीणासु ग्राम्यासुच उद्वेगोमानसीपीडातस्यावर्त्तनमावर्त्तोजलभ्रमणंतत्रपयोधरशब्दःस्तनमेघयोःअनुवर्षंवर्षंप्रावृषिच ॥ ६६ ॥

यदंगसंभूतानि अकलालितानि अपरित्या ज्यानि अपत्यकान्यकांड एवागत्या ऽसंस्तु तैर्नीयन्ते एतानि तानि खल्वंकनस्थानानि संसारस्य सेयं सर्वाभिभाविनी शोकाग्नेर्दाह शक्तिः यदपत्यत्वे समाने जातायां दुहित रि दूयंते सन्तः एतदर्थं जन्मकाल एव क न्यकाभ्यः प्रयच्छन्ति सलिलमस्रुभिः साध वः एतद्भयादकृतदारपरिग्रहाः परिहृतगृह वसतयः शून्यारण्यान्याधिशेरते मुनयःको हिनाम सहेत विरहमपत्यानां यथायथास मापतन्ति दूता वराणां वराकी लज्जमानेवचि न्ता तथातथा नितरां प्रविशति मे हृदयं किं क्रियते तथापि गृहगतैरनुगंतव्या एव लो कवृत्तयः प्रायेणाच सत्स्वप्यन्येषु वरगुणे ष्वाभिजनमेवानुरुध्यन्ते धीमन्तः धरणीध राणांच मूर्ध्नि स्थितो माहेश्वरःपादन्यासइव

असंस्तुतैरपारिचितैःदौःशील्यंचिन्हं वराकी तपस्विनी अभिज नं कुलं ॥ ६७ ॥

सकलभुवननमस्कृतोमौखरोवंशः तथाऽपि तिलकभूतस्यावन्तिवर्मणः सूनुरग्रजोग्रहव र्मानाम ग्रहपतिरिव गांगतः पितुरन्यूनोगु णैरेनां प्रार्थयते यदि भवत्याश्रपि मतिरनु मन्यते ततस्तस्मै दातुमिच्छामि इत्युक्तव ति भर्त्तरि दुहितृस्नेहकातरतरहृदया सास्रु लोचनामहादेवीप्रत्युवाचआर्यपुत्रसंवर्धनमा त्रोपयोगिन्योधात्रीनिर्विशेषाभवन्ति खलुमा तरः कन्यकानां दानेतु प्रमाणमासांपितरः के वलं कृपाकृतविशेषः सुदूरेणतनयस्नेहादति रिच्यतेदुहितृस्नेहःयथायावज्जीवमावयोरार्त्ति ताप्रतिपद्यतेतथार्यपुत्रएवजानातीतिराजातु जातनिश्चयोदुहितृदानं प्रति समाहूयसुताव पिविदितार्थावकार्षीत् शोभनेचादिवसेग्रहक र्मणा कन्यांप्रार्थयितुं प्रेषितस्य पूर्वागतस्यै वप्रधानदूतपुरुषस्यकरेसर्वराजकुलसमक्षंदु हितृदानजलमपातयत् जातमुदिकृतार्थेगते तस्मिन्

सकलेत्यादिसाधारणं आर्त्तिता मनःपीडात्वं जातमुदोस्यादावे वंराज कुलमासीदितिसंबंधः

आसन्नेषु च विवाहदिवसेषु उद्दामदीयमानतां वूलपटवासकुसुमप्रसादितसर्वलोकं सकलदेशादिश्यमानशिल्पिसार्थागमनं अवनिपालपुरुषगृहीतसमग्रग्रामीणानीयमानोपकरणसंभारं राजदौवारिकोपनीयमानाऽनेकनृपोपायनमुपनिमंत्रितागतबंधुवर्गसंवर्गणऽयत्र राजवल्लभं लब्धमधुमदप्रचंडचर्मकारकरपुटोल्लालितकोणपटुविघट्टनरणन्मंगलपटहं पिष्टपंचांगुलमंड्यमानोलूखलमुसलशिलाद्युपकरणमशेषाशामुखाविर्भूतचारणपरंपरापूर्यमाणप्रकोष्ठप्रतिष्ठाप्यमानेन्द्राणीदैवतं सितकुसुमविलेपनवसनसत्कृतैः सूत्रधारैशार्दीयमानविवाहवेदीसूत्रपातमुत्कूर्चककरैश्च सुधाकर्परस्कंधैरधिरोहिणीसमारूढैर्धवैर्धवलीक्रियमाणप्रासादप्रतोलीप्राकारशेखरं क्षुण्णक्षाल्यमानकुसुभसंभारं प्लवपूररज्यमानजनपादपल्लवं

ग्रामीणाग्राम्याःराजदौवारिकादूताःसंवर्गणमावर्चनं पिष्टमातपणं चारणाःकुशीलवाः प्रकोष्ठंवहिर्द्वारं सूत्रधारैःस्थपतिभिः अधिरोहिणीनिश्रेणिःधवैःपुरुषैःप्लवःपूरःक्षुण्णः चर्णितःकुसुंभकंपद्मकं

निरूप्यमाणयौतकयोग्यमातंगतुरंगतरंगि
तांगनंगणनाभियुक्तगणकगणगृह्यमाणलग्न
गुणं गंधोदकवाहिमकरमुखप्रणालीपूर्यमाण
क्रीडावापीसमूहं हेमकारचक्रप्रक्रांतहाटकघ
टनटांकारवाचालितालिन्दकमुत्थापिताभिन
वभित्तिपात्यमानवहलवालुका कंठकालेपाकु
लालेपकलोकंचतुरचित्रकरचक्रवाललिख्यमा
नमंगल्यालेख्यं लेप्यकारकदंबकक्रियमाण
मृण्मयमीनकूर्ममकरनारिकेलकदलीपूगवृक्ष
कं क्षितिपालैश्चस्वयमावद्धकक्ष्यैःस्वाम्यर्पि
तकर्मशोभासंपादनाकुलैः सिंदूरकुट्टिमभूमी
श्च मसृणयद्भिः विनिहितसरसातर्पणहस्ता
न्विन्यस्तालक्तकपाटलांश्च चूताशोकपल्लव
लांछितशिखरानुद्वाहवितर्दिकास्तंभानुत्तंभय
द्भिःप्रारब्धविविधव्यापारंप्रासूर्योदयाच्चप्रवि
ष्टाभिःसतीभिःसुभगाभिः सुरूपाभिः सुवेशा
भिरविधवाभिः सिंदूररजोराजितललाटाभिर्व
धूवरगोत्रग्रहणगर्भाणि श्रुतिसुभगानिमंग
लानिगायंतीभिः ॥

यौतकंसुदायःप्रणालंवाप्यादिपूरणार्थंमकरमुखंकुर्वंति लग्नोमेषा
दिःअलिन्दोवहिर्द्वारकोष्ठः ६ ३ कंठकाःकणाःआवद्धकक्ष्यैः कृ
तोद्योगैःमसृणयद्भिरूर्ध्वीकुर्वद्भिः आतर्पणंपिष्टम् गोत्रंनाम ॥

बहुविधवर्णकादिग्धांगुलीभिर्ग्रीवा सूत्राणि च चित्रयन्तीभिश्चित्रपत्रलतालेख्यकुशलाभिः कलशांश्च धवलितान्शीतलशाराजितश्रेणीश्च मंडयन्तीभिरभिन्नपुटकर्पासतूलपल्लवांश्चवैवाहिककंकणोर्णासूत्रसन्नाहांश्चरंजयंतीभिः वलाशनाघृतघनीकृतकुंकुमकर्ममिश्रितांश्च गरागाल्लावण्यविशेषकान्ति च मुखालेपानि कल्पयन्तीभिः कक्कोलमिश्राः सजातीफलाः स्फुटस्फीतस्फाटिककर्पूरशकलखचितान्तरालाल्लवंगमाला रचयन्तीभिः समन्तात्सामन्तसीमन्तिनीभिर्व्याप्तंवहुविधभक्तिनिर्माणनिपुणपुराणपौरपुरन्ध्रिवध्यमानैश्चाचारचतुरांतःपुरजरतीजनितपूजाराजमानरजकरज्यमानैरक्तैश्चोभयपटान्तलग्नपरिजनप्रेंखोलितैश्छायासु शोष्यमाणैः शुष्कैश्चकुटिलक्रमरूपाक्रियमाणपल्लवपरभागैरपरैरारब्धकुंकुमपंकस्थासकच्छुरणैरपरैरुब्जुजभुजिष्यभज्यमानभंगुरोत्तरीयैः

दिग्धाउपलिप्ताः शीतलमपक्वं शाराजिरं शारवं अभिन्नपुटोवंशादिमयश्चतुष्कोणः पाटलाकृतिः जालकैः क्रियते तच्छिद्रांतरपूरणाय कर्पासतूलपल्लवा रज्यंते कंकणःप्रतिसरःबलाशनापुष्पाख्या ओषधिःतत्पक्वंघृतंरक्षार्थंक्रियतेस्फाटिककर्पूराख्यःकर्पूरभेदःभक्तिर्विछित्तिः कुटिलः क्रमोयेषांतैः भुजिष्यैश्चेटैर्भज्यमानत्वंमुष्टिदानं

क्षौमैश्चवादरैश्चदुगूलैश्च लालातन्तुजैश्चां शुकैश्चनेत्रैश्चनिर्मोकनिभैरकठोररंभागर्भ कोमलैर्नि:श्वासहार्यैःस्पर्शानुमेयैर्वासोभिः सर्वतः स्फुरद्भिरिन्द्रायुधसहस्रैरिव संछा दितं उज्ज्वलनिचोलकावगुंठ्यमानहंसकु लैश्च शयनीयैस्तारामुक्ताफलोपचीयमानै श्च कांचुकैरनेकोपयोगपाट्यमानैश्चापरि मितैःपट्टपटीसहस्रैरभिनवरागकोमलैर्दुगूल राजमानैश्च पटवितानैः स्तवरकनिवहनिरं तरच्छाद्यमानसमस्तपटलैश्च मंडपैरुच्चित्र नेत्रपटवेष्ट्यमानैश्च स्तंभैरुज्ज्वलं रमणीयंचौ त्सुक्यदंच मंगल्यं चासीद्राजकुलम् देवीतु यशोवतीविवाहोत्सवपर्याकुलहृदया हृदयेन भर्त्तरिकुतूहलेनजामातरिस्नेहेन दुहितरिउप चारेण निमंत्रितस्त्रीषु आदेशेनपरिजनेशरी रेणसंचरणे चक्षुषा कृताकृतप्रत्यवेक्षणेष्वान न्देन महोत्सवे एकापि वहुधाविभक्तेवाभव

तू

क्षौमैः क्षुमाविकारैः वादरैः कार्पासैर्लालातंतुजैः कौशेयैः नेत्रैः पृगैः निचोलकैः वस्तुरूपकविशेषैः स्तवरकंवस्त्रभेदः वितानकं करकं पटलंछादनं उज्ज्वलं भ्राजिष्णु

भूपतिरप्युपर्युपरिविसर्जितोष्ट्रवामीजानितजामातृतोषः सत्यप्याज्ञासंपादनदक्षेमुखेक्षणपरेपरिजनेसमंपुत्राभ्यां दुहितृस्नेहविक्लवः सर्वैस्वयमकरोत् एवंचतस्मिन्नविधवाधवइवभवतिराजकुलेमंगलमयइव जायमाने जीवलोकेचारणमयेष्विव लक्ष्यमाणेषु दिङ्मुखेषुपटहमयइवकृतेन्तरिक्षे भूषणमयइव भ्रमतिपरिजनेबांधवमयइव दृश्यमाने सर्गे निर्वृतिमयइवोपलक्ष्यमाणे काले लक्ष्मीमय इव विजृंभमाणेमहोत्सवेनिधानइव सुखस्य फलइवजन्मनः परिणामइवपुण्यस्य यौवनइव विभूतेः यौवराज्यइवप्रीतेःसिद्धिकालइवमनोरथस्य वर्त्तमानेगण्यमानएव जनांगुलीभिरालोक्यमान इवमागधवृंदैः प्रत्युद्गम्यमानइवमंगल्यवाद्यप्रतिशब्दकैःआहूयमानइव मौहूर्त्तिकैः

उष्ट्रवामी उष्ट्रभार्या केचिद्वामीद्वयमन्ये वेसरीमन्येगुर्वीमाहुः जोषः सुखं एवमित्यादावस्मिन्नस्मिन्सति आजगाम विवाहदिवस इतिसंबंधः ७२ निधानइव सुखस्येत्यादौ वर्त्तमाने इत्यनेनसंगतिःमौहूर्त्तिकैर्गणकैः

आकृष्यमाणइव मनोरथैः परिष्वज्यमान इव वधूसखीहृदयैराजगाम विवाहदिवसःप्रात रेवप्रतीहारैः समुत्सारितानिखिलानिवद्धलोकं विविक्तमक्रियत राजलोकं अथप्रतीहारःप्रवि श्यनृपसमीपंदेवजामातुरंतिकात्तांवूलदायकः पारिजातकनामासंप्राप्तइत्यभिधायस्वाकारंयु वानमदर्शयत् राजातुतंदूरादेवजामातृवहुमा नाद्दर्शितादरोवालककच्चित्कुशलीग्रहवर्मेतिप प्रच्छ सा तु समाकर्णितनराधिपध्वनिर्धाव मानःकतिचित्पदान्युपसृत्यप्रसार्यचवाहूसेवा चतुरश्चिरंवसुधरायां निधायमूर्धानमुत्थायदे वकुशलीयथाज्ञापयसिअर्चयतिचदेवंनमस्का रेणेति व्यज्ञापयत् आगतजामातृनिवेदना गतंचतंज्ञात्वा कृतसतकारं राजा यामिन्याः प्रथमेयामेविवाहकालात्ययकृतोनभवतिदोष इतिसन्दिश्यप्रतीपं प्राहिणोत्

अनिवद्धोवाह्यःयथानभवतिदोषइत्यत्र तथा कार्यमित्यर्थलभ्यम्

अथ सकलकमलवनलक्ष्मींवधूमुखइवसंचायंसमवासिते वासरे विवाहदिवसश्रियः पादपल्लवइवरज्यमाने सवितरि वधूवरानुरागलघूकृतप्रेमलज्जितेष्विव विघटमानेषु चक्रवाकमिथुनेषु सौभाग्यध्वजइवरक्तांशुकसुकुमारवपुषिनभसिस्फुरति संध्यारागे कपोतकंठकर्बुरे वरयात्रागमनरजसीव कलुषयति दिङ्मुखानितिमिरे लग्नसंपादनसज्जइवोज्जिहानेज्योतिर्गणे विवाहमंगलकलशइवोदयशिखरिणा समुत्क्षिप्यमाणे वर्धमानधवलच्छाये ताराधिपमंडले वधूवदनलावण्यज्योत्स्नापरिपीततमासि प्रदोषे वृथोदितमुपहसत्स्विव रजनिकरमुत्तानितमुखेषु कुमुदवनेष्वाजगाममुहुर्मुहुरुल्लासितस्फारस्फुरितारुणचामरै र्मनोरथैरिवोत्थितरागग्रपल्लवैः

अर्थेत्यादावेतस्मिन्नेतास्मिन्सति आजगामेति संबंधः कपोलेत्यसाधारणंकर्बुरे आपांडुरेरजसीवेति रजोपि मुखानि कलुषयति लग्नेत्यादिसाधारणं उज्जिहाने उद्गच्छतिज्योतिर्गणैस्ताराानिकरैः गणकैश्चवर्धमानइत्यादि संध्यारागरहितत्वात् वर्धमानं शराव: तेनचधवलच्छायंतद्धि मकोलालिप्तंविवाहे क्रियते इत्याचारः ॥ ७४॥स्फारः स्फीटकः

पुरोधावमानैःपादातैरुत्कर्णकटकहयप्रातिहेषि तदीयमानस्वागतैरिववाजिनांवृन्दैरापूरित दिग्भागश्चलकर्णचामराणां चामीकरमयस र्वोपकरणानां वर्णकलंविन। बलिनां घंटाटां कारिणां करिणां घटाभिर्घटयन्निव पुनरिन्दूदयविलीनमंधकारं नक्षत्रमालामं डितमुखींकरिणींनिशाकरइवपौरंदरींदिशमा रूढः प्रकटितविविधविहगविरुतैः तालावच रचारणैः पुरःसरैः वालोवसंतइवोपवनैः क्रियमाणकोलाहलोगंधतैलावसेकसुगंधिना दीपिकाचक्रवालालोकेन कुंकुमपटवासधूलि पटलेनेवपिंजरीकुर्वन्सकलंलोकमुत्फुल्लमल्लि कामुंडमालामध्याध्यासितकुसुमशेखरेण शि रसाहसन्निवसपरिवेशक्षपाकरं कौमुदीप्रदो षमात्मरूपनिर्जितमकरकेतुकरापहृतेन का र्मुकेनेव कौसुमेनदाम्ना विरचितवैकक्ष्यविला सः कुसुमसौरभगर्वभ्रांतभ्रमरकुलकलकल प्रलापसुभगःपारिजातइव जातः श्रियासहपु नरवतारितोमेदिनीं नववधूवदनावलोकनकु तूहलेनेव कृष्यमाणहृदयः पतन्निव मुखेन प्र त्यासन्नलग्नोग्रहवर्मा। राजातुतमुपद्वारमाग तंचरणाभ्यामेव राजचक्रानुगम्यमानः ससु तःप्रत्युज्जगाम अवतीर्णंच तं कृतनमस्कारं

पुरोधावमानै रिति साधारणं पादातैः पदाति समूहैः ७०

मन्मथमिव माधवः प्रसारितभुजोगाढमालि
लिंगयथाक्रमंपरिष्वक्तराज्यवर्धनहर्षंचहस्ते
गृहीत्वाभ्यंतरं निन्ये स्वनिर्विशेषासनदाना
दिनाचैनमुपचारेणोपचचार नचिराच्च गंभी
रनामा नृपतेः प्रणयीविद्वान्द्विजन्माग्रहवर्मा
णमुवाचतातत्वांप्राप्यचिरात्खलु राजश्रिया
घटितौ तेजोमयौ सकलजगद्गीयमानबुधक
र्णानन्दकारिगुणगणौ सोमसूर्यवंशाविव पु
ष्पभूतिमुखं प्रथममेव कौस्तुभमणिरिवगुणैः
स्थितासिहृदयेदेवस्यइदानींतुशशीव शिरसा
परमेश्वरेणासिवोढव्योजातइति एवंवदत्येव
तस्मिन्नृपमुपसृत्यमौहूर्तिका देवसमासीदात
लग्नवेलाव्रजतुजामाता कौतुकगृहमित्यूचुःअ
थ नरेन्द्रेणोत्तिष्ठगच्छेत्ति गदितोग्रहवर्माप्रवि
श्यांतःपुरं जामातृदर्शनकुतूहालिनीनां स्त्री
णांपातितानि लोचनसहस्राणि विकचनीलकु
वलयवनानीव लंघयन्नाससाद

राजश्रिया नृपतिलक्ष्म्यापि घटितौ योजितौ मुक्तौच बुधकर्णौ पंडितश्रोत्रं सोमसूर्यसूनू च गुणैरुत्कर्षैस्तन्तुभिश्च हृदये चेतसि वक्षसि चदेवस्यराज्ञोविष्णोश्चपरमेश्वरेणराज्ञाहरेणच ॥ ७६ कौतुकगृहं विवाहमंगलवेश्म अथेत्यादौतत्रवधूमपश्य दितिसंबंधः

कौतुकगृहद्वारंनिवारितपरिजनश्च प्रविवेश अथ तत्र कतिपयाप्तप्रियसखीस्वजनप्रमदाप्रायपरिवारामरुणांशुकावगुंठितमुखीं प्रभातसंध्यामिव स्वप्रभया निष्प्रभान्प्रदीपकान्कुर्वाणांअतिसौकुमार्यशंकितेनेव यौवनेन नातिनिर्भरमुपारूढां साध्वसनिरुध्यमानहृदयदेशदुःखमुक्तैर्निभृतायतैः श्वसितैः अपयान्तंकुमारभावामिवानुशोचंतीमत्युत्कंपिनींपतनभियेव त्रपयानिःस्पन्दं धार्यमाणां हस्तंतामरसप्रतिपक्षमासन्नग्रहणंशशिनमिवरोहिणींभयवेपमानमानसामवलोकयन्तींचन्दनधवलतनुलतांज्योत्स्नादानसंचितलावण्यात्कमुदिनीगर्भादिवप्रसूतां कुसुमामोदनिहारिणींवसन्तहृदयादिव निर्गतां निःश्वासपरिमलाकृष्टमधुकरकुलांमलयमारुतादिवोत्पन्नां कृतकन्दर्पानुसरणां रतिमिव पुनर्जातांप्रभालावण्यमदसौरभमाधुर्यैः कौस्तुभशशिमदिरापारिजातामृतप्रभवैः ॥ ॥

अरुणांशुकंलोहितंवस्त्रमरुणस्यात्पंशवः अंशुकाः निभृतैर्गुप्तैः प्रतिपक्षस्तुल्यः शत्रुश्चग्रहणंहस्तस्यस्वीकारः शशिनश्चग्रहणेस मासन्नंभवति ॥ ७७ ॥ उद्गमनंसौरभमिति अन्येप्रभादीनांकौस्तुभादिभिर्यथासंख्यं

सर्वरत्नगुणैरपरामिव सुरासुररुषा रत्नाकरे
णकल्पितां श्रियंस्निग्धेनवालिकालोकेन सि
तसिंधुवारकुसुममंजरीभिरिव मुक्तादीधिति
भिः कल्पितकर्णावतंसां कर्णाभरणमरकतप्र
भाहरितशाद्वलेन कपोलस्थलीतलेन विनो
दयंतीमिव हारिणीं लोचनच्छायामधोमुखं व
रकौतुकालोकनाकुलं मुहुर्मुहुः कृतमुखोन्नमन
प्रयत्नंसखीजनं हृदयंच निर्भर्त्सयतीं वधूमप
श्यत् प्रविशंतमेव तंहृदयचौरंवध्वासमर्पितं
जग्राह कन्दर्पः परिहासस्मेरमुखीभिश्च ना
रीभिः कौतुकगृहे यद्यत्कार्यते जामाता त
त्तत्सर्वमतिपेशलश्चकार कृतपरिणयानुरूप
वेशपरिग्रहां गृहीत्वाकरेवधूंनिर्जगामजगाम
चनवसुधाधवलांनिमंत्रितागतैस्तुषारशैलोप
त्यकामिव त्र्यंबकांविकाविवाहाहूतैर्भूभृद्भिः
परिवृतांसकसुकुमारयवांकुरदंतुरैःपंचास्यैः
कलशैः कोमलवर्णिकाविचित्रैरमित्रमुखैश्च

वालिकाऊर्मिका कौमारीच विनोदयन्तीं प्रथयंतीं हारिणीं
रम्यां मार्गीच मृगलोचनच्छायां नीलशाद्वलेन स्थलीतले क्री
डति कौतुकालोकनाकुलं द्वयमपि साधारणं वध्वाराजश्रिया
अथवेदीं जगामेति संबंधः उपत्यकाद्रेः समासन्नाभूः भूभृन्नृपो
गिरिश्च वर्णिकाखटिका अमित्रमुखैरूप्यमयैः शत्रुमुखैश्च

मंगल्यफलहस्ताभिरंजलिकारिकाभिरुद्भासितपर्यंता मुपाध्यायोपधीयमानेंधन धूमायमानाग्निसंधुक्षणाक्षणिकोपद्रष्टृद्विजा मुपकृशानुनिहितानुपहतहरितकुशां सन्निहितदृषदाजिनाज्यस्रुक्समित्पूलीनिवहां नूतनशूर्पार्पितश्यामलशमी पलाशमिश्रलाजहासिनीं वेदीम् आरुरोह च तां दिवमिवसज्योत्स्नःशशीसमुत्ससर्पचवेल्लितारुणशिखापल्लवस्य शिखिनः कुसुमायुधइवरतिद्वितीयोरक्ताशोकस्यसमीपंहुतेचहुतभुजिदाक्षिणावर्त्तप्रवृत्ताभिर्वधूवदनविलोकनकुतूहलिनीभिरेवज्वालाभिसह प्रदक्षिणंवभ्रामपात्यमानेचलाजांजलौ नखमयूखधवलिततनुरदृष्टपूर्ववधूवररूपविस्मयस्मेर इवादृश्यत विभावसुः

अंजलिकारिकाभिर्मृण्मयप्रतिमाभिः सालभंजिकाभिर्वा अक्षणिको ऽव्यग्रः उपद्रष्टा साक्षी उपदेश्य इति केचित् स्रुग्घोमभांडं वेल्लिताः वलिताः शिखा ज्वाला शिखाग्राणिच पल्लवाः प्रांताः किसलयानिच शिखिनोवृक्षस्यापि उक्तंच अग्निः शिखीतिच प्रोक्तः शिखीवृक्षोनिगद्यते वर्हिण श्चशिखीप्रोक्तः क्वचित्स्यात्कुक्कुटः शिखीतिच ॥ ७१ ॥

अत्रांतरे स्वच्छकपोलोदरसंक्रांतमनलप्रति
बिंबमिवनिर्वापयन्ती स्थूलमुक्ताफलविमल
वाष्पबिंदुसन्दोहदर्शितदुर्दिनानिर्वदनविका
रंरुरोदवधूःउदस्रुविलोचनानांचबांधववधूना
मुदपादि महानाक्रन्दःपरिसमापितवैवाहिक
क्रियाकलापस्तुजामातःवध्वासमं प्रणामश्व
शुरौप्रविवेशचद्वारपक्षलिखितरतिप्रीतिदैवतं
प्रणयिभिरिव प्रथमप्रविष्टैरलिकुलैः कृतको
लाहलमलिकुलपक्षपवनप्रेंखोलितैः कर्णो
त्पलप्रहारभयप्रकंपितैरिव मंगलप्रदीपैः प्र
काशितमेकदेशलिखितस्तव किंतरक्ताशोक
तरुतलभाजाऽधिज्यचापेनतिर्यक्कूणितनेत्रत्रि
भागेणशरमृजूकुर्वता कामदेवेनाधिष्ठितमेक
पार्श्वन्यस्तेन कांचनचामरुकेनेतरपार्श्ववर्त्ति
न्याच दान्तशफरुकधारिण्या कनकपुत्तिक
यासाक्षाल्लक्ष्म्येवोद्दंडपुंडरीकहस्तया सनाथे
नसोपधानेनस्वास्तीर्णेन शयनेन शोभमानं
शयनशिरोभागस्थितेन च कृतकुमुदशोभेन
निर्वापयंतीगमयंताप्रविवेशेत्यादौजामाता वासगृहमितिसंबंधः

कुसुमायुधसहायकायागतेनशशिनेवनिद्रा कलशेनराजतेनविराजमानंवासगृहमूतत्रच ह्रीतायानववधूकायाःपराङ्मुखप्रसुप्तायाम णिभित्तिदर्पणेषुमुखप्रतिबिंबानिप्रथमालापा कर्णनकौतुकागतगृहदेवताननानीव मणिग वाक्षकेषु वीक्षमाणः क्षणदांनिन्ये स्थित्वाच श्वशुरकुले शीलेनामृतमिव श्वश्रूहृदये वर्षन्न भिनवाभिनवोपचारैरपुनरुक्तानि आनन्दम यानिदशदिनानिदत्त्वा राजदौवारिकामिवरा जकुलेरणरणकंयौतकनिवेदितानीव शबला न्यादायहृदयानिसर्वलोकस्य कथं कथमपि विर्जितोनृपेणवध्वासह स्वदेशमगमदिति ॥ इतिश्रीमहाकविचक्रचूडामणिश्रीबाणभट्टकृ तौहर्षचरितेमहाकाव्यचक्रवर्त्तिजन्मवर्णनंच तुर्थउच्छ्वासः संपूर्णः ॥ ४ ॥ ❀

पक्षःपार्श्वकुणितःसंकोचितः८० क्षणदांरात्रिंदशदिनानिरिथत्वे तिसंगतेःयौतकंसुदायःइतिश्रीहर्षचरितसंकेतचतुर्थउच्छ्वासः

उॕंनियति र्विधाय पुंसां प्रथमं सुखमुपरि दा
रुणं दुःखम् कृत्वा लोकं तरला तडिदिववज्रं
निपातयति १ पातयति महापुरुषान्सममे
व वहूननादरेणैव परिवर्त्तमान एकःकालःशै
ला निवा नंतः २ अथ कदाचिद्राजा राज्य
वर्धनं कवचहर माहूय हूना हंतुंहरिणा निव
हरि हरिणेशकिशोर मपरिमितबलानुयानं
चिरन्तनै रमात्यै रनुरक्तैश्च महासामन्तैः कृ
त्वा साभिसर मुत्तरापथं प्राहिणोत् प्रयान्तं
चंतं देवो हर्षः कतिचित्प्रयाणकानि तुरंगमै
रनुवव्राज प्रविष्टेच कैलासप्रभाभासिनीं क
कुभं भ्रातरि वर्त्तमानो नवे वयसि विक्रमर
सानुरोधिनि केसरिशरभशार्दूलवराहवहुले
षु तुषारशैलोपकंठभूकंठमानवनदेवताकटा
क्षांशुशारितशरीरकांतिः क्रीडन्मृगयां मृग
लोचनः कतिपयान्यहानि वहिरेव व्यलंवत

उॕंनियतीत्यादिनियतिर्दैवं लोकंजनंतडिद्विद्युत् तडिदपितरल
लोकं कृत्वावज्रं निपातयति १ अनंतः पर्यंतरहितः शेषभट्टारक
श्च आर्यायुगलेनानेनभाविनीराजविपत्तिः सूचिता २ कवचहर
इति वयसि नित्यं बलं सैन्यं सामर्थ्यंच साभिसरं ससहायं के
सरिणः सिंहाः अष्टपादाः प्राणिविशेषाःशरभाः शार्दूलाः व्या
घ्राःवराहाः सूकराः क्रीडन् मृगयां इति कालभावाध्वगंतव्याः
कर्मसंज्ञाश्चकर्मणां इति भावार्थरूपायामृगयायाः कर्मभावः

चकार चाकर्णाताकृष्टकार्मुकनिर्गतभास्वरभ
ल्लवर्षी स्वल्पीयोभिरेव दिवसै र्निःश्वासपदा
न्य रण्यानि एकदा तु वासनेय्या स्तुरीये या
मे प्रत्युषस्येव स्वप्ने चटुलज्वालापुंजपिंजरी
कृतसकलककुभा दुर्निवारेण दवहुतभुजा द
ह्यमानं केसरिण मद्राक्षीत् तास्मिन्नेव च दाव
दहने समुत्सृज्य शावकानुत्क्षुत्य चात्मानं
पातयंतीं सिंही मपश्यत् आसीच्चास्य चेतसि
लोके हि लोहेभ्यःकठिनतराः खलु स्नेहमयाः
वंधनपाशाः यदाकृष्टास्तिर्यंचो प्येव माचर
न्ती ति प्रवुद्धस्य चास्य मुहु र्मुहु र्दक्षिणेतर
माक्षि पस्पन्दे गात्रेषु चा कस्मा देव वेपथुर्वि
पप्रथे निर्निमित्तमेवान्तर्वंधनस्थानाच्चचा
लेव हृदयं अकारणा देव चा जायत गरीय
सी दुःखासिका कि मिद मिति च समुत्पन्न
विविधविकल्पविमथितमति रपगतधृति श्चि
न्तावनमितवदनः स्तिमिततारकेण चक्षुषास
मुद्धिद्यमानस्थलकमलिनीवनामिव चका
र चकोरेक्षणः क्षणंक्षोणीं अह्नि च तास्मिनशू
न्येनैवच चेतसा चिक्रीड मृगयाम् ॥

वासेनय्या रात्रिः तुरीयेचतुर्थेऽहनि ८२ ॥

आरोहति चहरितहये मध्य मह्रो भवन माग
त्योभयतो मन्दमन्दं संवाह्यमानतनुतालवृ
न्तः क्षितितलवितता मति शिशिरमलयजर
सलवलुलितवपुष मिन्दुधवलोपधानधारि
णीं वेत्रपट्टिकामधिशयानः साशंक एव त
स्थौ अथ दूरादेव लेखगर्भया नीलीरागमेच
करुचा चैलचीरिकया रचितमुंडमालकं श्रमा
तपाभ्या मारोप्यमाणकायकालिमान मंतर्ग
तेन शोकशिखिनां गारता मिव नीयमान म
तित्वरागमनद्रुततरपदो द्धूयमानधूलिराजि
व्याजेन राजवार्त्ताश्रवणकुतूहलिन्या मेदि
न्यें वानुगम्यमानमभिमुखपवनप्रेंखत्प्रवित
तोत्तरीयपदप्रांतवीज्यमानोभयपार्श्वं मतित्व
रया कृतपक्षमिवा शु परापतन्तं प्रेर्यमाण मि
व पृष्ठतः स्वाम्यादेशेन कृष्यमाण मिव पुर
स्ता दायतैः श्रमश्वासमोक्षैः स्विद्यल्ललाटत
टघटमानप्रातिबिंबकेन कार्यकौतकादपहि
यमाणलेखमिव भास्वतासंभ्रमभ्रष्टैरिवेंद्रियै
स्तुच्छीकृतशरीरं

संवाह्यमानंभ्राम्यमाणं लुलितंव्याप्तं८३अथेत्यादौदूरादेव कुरंग
मनामानमध्वगमापतंतमद्राक्षीदिति संबंधः नीलीनामऊोषधिः
वर्हिकंठसमानो मेचकःआरोप्यमाणः क्रियमाणः इन्द्रियैरिति
शून्यत्वं तेषां जडत्वावाप्तेः

लेखार्पितप्रयोजनगौरवादिव समे ऽपिवर्त्मनि शून्यहृदयतया स्खलंतं कालमेघशकलमिव पतिष्यतो दुर्वार्त्तावज्रस्य धूमपल्लव मिव ज्वलिष्यतः शोकज्वलनस्य वीज मिव फलिष्यतो दुष्कृतशालेरनिमित्त भूतदीर्घाध्वगं कुरंगमनामानमायान्त मद्राक्षीत् दृष्ट्वाच पूर्वा निमित्तपरंपराविर्भावितभीति रभिद्यत हृदयेन कुरंगकस्तु कृतप्रणामः समुपसृत्य प्रथम माननलग्नं विषाद मुपनिन्ये पश्चाल्लेखं तंचदेवो हर्षःस्वयमेवा दायावाचयत् लेखार्थेनैवचसमं गृहीत्वा हृदयेन संताप मवग्रहरूपो ऽभ्यधात् कुरंगककिंमाद्यं तातस्येति सचक्षुषा वाष्पजलविंदुभि र्मुखेन च खंजाक्षरैः क्षरद्भि र्युगपदाचचक्षे देवदाहज्वरोमहानितितच्चाकर्ण्यसहसासहस्रधेवास्य हृदयंपफाल कृतावमनश्च जनयितुरायुष्कामो ऽपरिमितमणिकनकरजतजातमात्मपरिवर्हमशेषं ब्राह्मणसादकरोत् ॥

शकलंखंडं ८४ पफालपुस्फोट जातेति शब्दः प्रकारे परिवर्होभोजनादिपरिच्छेदः ब्राह्मणसाद्ब्राह्मणाधीनम्

अभुक्तएवोच्चचाल दापय वाजिमः पर्याणमिति चपुरःस्थितं शिरःकृपाणंविभ्राणंवभाणयुधानं वेपमानहृदयश्चससंभ्रमप्रधावितपरिवर्धकोप नीतमारुह्यतुरंगममेकाक्येव प्रावर्त्तत अकाण्ड प्रयाणसंज्ञाशंखक्षुभितंतुसंभ्रमात्सज्जीभूतमुद्ध तमुखरखुररवभरितसकलभुवनविवरमागत्या गत्य सर्वाभ्योदिग्भ्योधावमानमश्वीयमढौकत प्रस्थितस्यचास्य प्रदक्षिणेतरं प्रयांतो विनाशमु पस्थितंराजसिंहस्यहारिणाःप्रकटयांवभूवुःआशि शिररश्मिमंडलाभिमुखश्चहृदयमवदारयन्निव दावशुष्केदारुणिदारुणंरराणवायसः कज्जलम यइववहुदिवसमुपाचितवहलमलपटलमलिनित तनुरभिमुखमाजगाम शिखिपिच्छलांछनो नग्ना टकःदुर्निमित्तैरनभिनंद्यमानगमनश्च नितराम ढौकत हृदयेनपितृस्नेहाहितमाद्मिाचतत्तदुपे क्षमाणः तुरंगमस्कंधवद्धलक्ष्यंचक्षुरविचलंदधा नः दुःसमवसितसहितसंकथस्तूष्णींभूतेन

नभुक्तमस्येत्यभुक्तः शिरोदेशेस्थापितः कृपाणः परिवर्धकोश्वपालः प्रावर्त्ततेत्यर्थाद्गंतुं अश्वीयमश्वसमूहः सिंहशब्दःप्रशंसायां हरिणा इतिमृगाहिस्वैरंचरंतः सिंहस्यविनाशमभावंसूचयंति ८५ ॥ नग्ना टकः नग्नक्षपणकः तुरंगमइतिचक्षुर्विशेषणं दुःखेनसमवसितानि वृत्तासंकथाकथनंयस्यसः

भूपाललोकेनानुगम्यमानोवहुयोजनसंपिंडित मध्वानमेकेनैवाह्नासमलंघयत् उपलब्धनरेन्द्र मांद्यवार्त्ताविषण्णइव नष्टतेजस्यधोमुखीभवति भगवतिभानुमतिभंडिप्रमुखेन प्रणयिनाराजपु त्रलोकेनवहुशोविज्ञाप्यमानोपिनाहारमकरोत् पुरःप्रवृत्तप्रतीहारगृह्यमाणग्रामीणपरंपराप्रक टितप्रगुणवर्त्माच वहन्निव निर्यन्निशाम् अन्य स्मिन्नहनिमध्यान्दिने विगतजयशब्दमस्तमित तूर्यनादमुपसंहृतगीतमुत्सारितोत्सवमप्रगीतचा रणमप्रसारितापणपण्यं स्थानस्थानेषु पवनब लकुटिलाभिः कोटिहोमधूमलेखाभिरुल्लसन्ती भिर्यममहिषविषाणकोटिभिरिवोल्लिख्यमानं कृ तान्तपाशवागुराभिरिव वेष्ट्यमानमुपरिकालम हिषालंकारकालायसकिंकिणीभिरिव कटुक्वण न्तीभिर्दिवसंवायसमंडलीभिर्भ्रमंतीभिरविद्यमा

॥ नप्रत्यासन्नाशुभम् ॥

संपिंडितंसंकलितं प्रगुणंस्पष्टं वहन्नविश्रांतिंगच्छन्नन्यस्मिन्नित्यादौ स्कंधावारंसमासादेतिसंवंधः आपणेषुहट्टेषुपण्यंविक्रेयंवस्तु कालोयमः कालायसं लोहजातिभेदः किंकिण्यःसूक्ष्मघंटिकाः ॥

क्वचित्प्रतिशायितास्निग्धबांधवाराध्यमानाहिर्बु ध्नं क्वचिद्दीपिकादह्यमानकुलपुत्रकप्रसाद्यमान मातृमंडलं क्वचिन्मुंडोपहाराहरणोद्यतद्रविडप्रा र्थ्यमानामर्दकं क्वचिदांध्रोद्ध्रियमाणबाहुवप्रोप याच्यमानचंडिकमन्यत्र शिरोविधृतविलीयमा नगुग्गुलुविकलनवसेवकानुनीयमानमहाकाल मपरत्र निशितशस्त्रीनिकृत्तात्ममांसहोमप्रसक्ता प्तवर्गमपरत्र प्रकाशनरपतिकुमारकाक्रियमाण महामांसविक्रयप्रक्रमं उपहतामिव श्मशानपांसु भिरमंगलैरिव परिगृहीतं यातुधानैरिव विध्व स्तं कलिकालेनेव कवलितं पापपटलैरिव संछा दितं अधर्मविक्षेपैरिव लुंठितमनित्यताधिकारैरि वाक्रांतं नियतिविलासैरिवात्मीकृतं शून्यमिव सुप्तमिव मुषितमिव विलक्षितमिव छलितमिव मूर्च्छितमिव स्कंधावारमाससाद प्रविशन्नेव च वि पणिवर्त्मनि कुतूहलाकुलबहलबालकपरिवृत मूर्धयष्टिविष्कंभविततेवामहस्तवर्त्तिनि भीष णमहिषाधिरूढप्रेतनाथसनाथे चित्रवति पटे

प्रतिशायिताउपोषिताः अहिर्बुध्नोहरः मुंडंशिरः आमर्दकोवेतालः द्राविडा आंध्राश्च जनपदभेदाः रौद्रदेवताभेदइत्यन्ये ॥ ८७ ॥ विष्कंभोवष्टंभः वितताः प्रसारिताः

परलोकव्यतिकरमितरकरकालितेनशरकांडेन कथयंतंयमपट्टिकंददर्श तेनैवचगीयमानंश्लोक मशृणोत् मातापितृसहस्राणिपुत्रदारशतानि चयुगेयुगेव्यतीतानिकस्यतेकस्यवाभवानिति तेनचाधि कतरमवदीर्यमाणहृदयःक्रमेणराज द्वारंप्रतिषिद्धसकललोकप्रवेशं ययौ तुरगादव तीर्णश्चाभ्यंतरान्निष्क्रामन्तमप्रसन्नमुखरागं मु क्तमिवेंद्रियैः सुषेणनामानंवैद्यकुमारमद्राक्षीत् कृतनमस्कारंचाप्राक्षीत् सुषेणास्तितातस्यवि शेषोनवेति सोब्रवीत् नास्तीदानीं यदि भवे त्कुमारंदृष्ट्वेतिमन्दंमन्दं द्वारपालैःप्रणम्यमा नश्च दीयमानसर्वस्वं पूज्यमानकुलदेवतं प्रार ब्धामृतचरुपचनाक्रियं क्रियमाणषडाहुतिहोमं हूयमानपृषदाज्यलवलिप्तप्रचलद्दूर्वापल्लवं ॥

व्यतिकरोवृत्तांतः यमपट्टेनजीवतियमपाट्टिकः मन्दंमंदमित्यादौरा जकुलंविवेशेतिसंबंधः अमृतचरुः शांत्यर्थंचरुः ॥ ८८ प्रजापतये स्वाहेति षण्णां देवतानांनामगृहीत्वाषण्णामेवाहुतीनांप्रक्षेपः षडा हुतिहोमउच्यते दधिघृते एकीकृत्यपृषदाज्यं पृषदाज्यंसदध्न्याज्ये इतिकोशः

पठ्यमानमहामायूरीप्रवर्त्त्यमानगृहशान्ति
निर्वर्त्यमानभूतरक्षाबलिविधानं प्रयतविप्र
प्रस्तुतसंहिताजपं जप्यमानरुद्रैकादशीश
ब्दायमानशिवगृहमति शुचिशैवसंपाद्यमा
नविरूपाक्षक्षीरकलशसहस्रस्नपन मजिरा
पविष्टैश्चा नासादितस्वामिदर्शनदूयमानमा
नसैरभ्यन्तरानिष्पातितानिकटवर्त्तिपारिजननि
वेद्यमानवार्त्तैर्वार्त्तीभूतस्नानभोजनशयनैरु
ज्झितात्मसंस्कारमलिनवेशैर्लिखितैरिव नि
श्चलैर्नरपतिभिर्नीयमाननक्तन्दिवं दुःखदी
नवदनेनचप्रघनेषुवद्धमंडलेनोपांशुव्याहृतैः
केनचिच्चिकित्सकदोषानुद्भावयता केनचिद
साध्यव्याधिलक्षणपदानिपठता केनचिद् दुः
स्वप्नानावेदयताकेनचित्पिशाचवार्त्तांविवृण्व
ताकेनचित्कार्त्तांतिकादेशान्प्रकाशयता केन
चिदुपलिंगानि गायताऽन्येनाऽनित्यतांभाव
यता संसारंचापवदता कलिकालविलसिता
निचनिन्दतादैवंचोपालभमानेन अपरेणध
र्मायकुप्यताराजकुलदेवताश्चाधिक्षिपताऽप
रेण क्लिष्टकुलपुत्रकभाग्यानि गर्हयता

महामायूरीवौद्धविद्याशैवमंत्रइतिकेचित्संहितावेदपाठःसंहित
रूपःरुद्रैकादशीशिवमंत्रःवार्त्तातआगतंवार्त्तीभूतं प्रघनोवहिर्द्वा
रैकदेशःकार्त्तांतिकोदैवज्ञःउपलिंगान्युत्पाताःअपवदतानिंदता

वाह्यपरिजनेन कथ्यमानकष्टपार्थिवावस्थं रा
जकुलंविवेश अविरलवाष्पपयःपरिप्लुतलोच
नेन पितृपरिजनेन वीक्ष्यमाणोविविधौषधिद्र
व्यद्रवगंधगर्भमुत्क्वथतां क्काथानां सर्पिषांतैला
नांचपच्यमानानांगंधमाजिघ्रन्नवाप तृतीयं क
क्ष्यांतरंतत्र चातिनिःशब्देगृहावग्रहिणीग्राहि
बहुवेत्रिणि त्रिगुणतिरस्करिणीतिरोहितसुवी
थीपथे पिहितपक्षद्वारके परिहृतकपाटरटितेघ
टितगवाक्षरक्षितमरुति दूयमानपरिचारकेचर
णताडनस्वनत्सोपानप्रकुपितप्रतीहारे निभृत
संज्ञानिर्दिश्यमानसकलकर्माणिनातिनिकटोप
विष्टकंकटिनि कोणस्थिताङ्कानचकिताचमन
कवाहिनि चंद्रशालिकालीनमूकमौलल्लोके॥

द्रवोरसः तत्रेत्यादौतत्रचैवंविधेधवलगृहेस्थितमीदृशंपितरमद्रा
:क्षीदितिसंबंधः गृहावग्रहणीदेहलीद्वारारंभदेशः वेत्रिणोद्वाःस्थाः
तिरस्करिणी जवनिका सुवीथी धवलगृहस्याभ्यंतरीकृता प्रच्छन्न
मंतर्द्वारंयत्पक्षद्वारंतदुच्यते घटितोरक्षितो निभृतंगुप्तं आचमनवा
हीपानीयद्वारकः चंद्रशालिका धवलगृहस्योपरिप्रासादिका

महाधिविधुरबांधवांगनावर्गगृहीतप्रच्छन्नप्रग्री-
वकेसंजवनपुंजितोद्विग्नपरिजने प्रविष्टकतिपय
प्रणयिनि गंभीरज्वरारंभभीतभिषजि दुर्मनाय
मानमंत्रिणि मन्दायमानपुरोधसि सीदत्सुहृदि
विद्राणविपश्चिति संतप्ताप्तसामन्ते विचित्तचाम
रग्राहिणि दुःखक्षामशिरोरक्षिणि क्षीयमाणप्र
सादवित्तमनोरथसंपदि स्वामिभक्तपरित्यक्ताहा
रहीयमानबलविकलवल्लभभूभृति क्षितितलप
तितसकलरजनीजागरूकराजपुत्रकुमारककुल
क्रमागतकुलपुत्रनिवहोह्यमानशुचि शोकसं
कुचितकंचुकिनि निरानन्दवन्दिनि निःश्वसन्निरा
शासन्नसेवके निःसृततांबूलधूसराधरवारयोषि
ति विलक्षवैद्योपदिश्यमानपथ्याहरणावाहित
पौरोगवे अनुजीविपीयमानोच्चषकधारावारि
विनोद्यमानास्यशोषरुजि राजाभिलाषभोज्य
मानबहुभुजि भेषजसामग्रीसंपादनव्यग्रसमग्र
व्यवहारिणि मुहुर्मुहुराहूयमानतोयकर्मान्तिका
नुमितघोरातुरतृषि

आधिर्मानसीपीडा संजवनंचतुःशाला १० विपश्चित्पंडितः आप्ताआश्वस्ताः प्रसादेनवित्ताः प्रख्याताः प्रसादवित्ता जागरूकाः जागरणशीलाः विलक्षोलज्जितः पौरोगवोमहानसाध्यक्षः उच्चषकमपगतपानभाजनं भेषजमौषधं तोयकर्मान्तिका तोयकर्मशाला

तुषारपरिकरितकरकशिशिरी क्रियमाणोदश्वि नि श्वेतार्द्रकर्पटार्पितकर्पूरपरागशीतलीकृतश लाके नाश्यानपंकलिप्यमाननवभांडगतगंडू षग्रहणमस्तुनि तिम्यत्कोमलकमलिनीपला शप्राकृतमृदुमृणालकेसनालनीलोत्पलपूलीस नाथसलिलपानभाजनभुवि धारानिपातनिर्वा प्यमाणक्वथितांभसि पटुपाटलशर्करामोदमु चि मंचकाश्रितसिकतिलकर्करीविश्रांतांतरचक्षु षि सरलशैवलवलयितगलद्गोलयंत्रके गलत्कर्क शालाजिरोल्लासितलाजसाक्तुनिपीतमसारपारी परिगृहीतकर्कशर्करे शिशिरौषधरसचूर्णावकी र्णस्फटिकशुक्तिशंखसंचये संचितप्रचुरप्राची नामलक मातुलुंगद्राक्षादाडिमादिफले प्रति ग्राहितविप्रप्रकीर्यमाणशांत्युदकविप्रुषि प्रे ष्याप्रेष्यमाणललाटलेपोपदिग्धदृषदि धवल गृहे स्थितम्

करकोजलभांडं मुखपूरणंगंडूषः शलाकाः पाषाणकणिकाः१२ निर्वाप्यमाणंशीतलीक्रियमाणं पाटला शर्कराविशेषः मंचकत्रा धारभेदःकर्करीवारिधानी गोलयंत्रकंवहुच्छिद्रंजलभांडं उल्लासि ताविस्तारिताः प्रतिग्राहिताः प्रतिग्रहं ग्राहिताः प्रेष्या दासी

परलोकविजयाय नीराज्यमानमिव ज्वरज्व
लनेनानवरतपरिवर्त्तनैस्तरंगिणि शायनीये
शेषमिवविषोष्मणाक्षीरोदन्वति विवेष्ट्यमानं
मुक्ताफलवालुकाधूलिधवलितं जलधिमिव
क्षयकाले शुष्यंतं कालेनकैलासमिवदशान
ननेनो द्ध्रियमाण मविरतचन्दनचर्चापराणां
परिचारकानामत्युष्णावयवस्पर्शभस्मीभूता
दरैरिवधवलैः करैः स्पृश्यमानं लोकांतरप्र
स्थितं स्थास्नुना स्वयशसेवचन्दनानुलेपन
च्छलेनापृच्छ्यमानमविच्छिन्नदीयमानकम
लकुमुदेन्दीवरदलं कालकटाक्षपतनशबल
मिवशरीरमुद्वहन्तंनिविडदुगूलपट्टानिपीडित
केशान्तकथ्यमानकष्टवेदनानुबंधं धारयंतं दु
र्धरवेदनोन्नमन्नीलसिराजालककरालेनचका
लांगुलिलिख्यमानलेखाख्यातमरणावधिदि
वससंख्यानेनेव ललाटफलकेन भयमुप
जनयंतमासन्नयमदर्शनोद्वेगादिव चाकिंचिदं
तःप्रविष्टतारकं शुष्यद्दशनपंक्तिग्रस्तधूसर
दीधितितरंगिणी

कालेनयमेनकृष्णेनच दशाननोव्याधिःराक्षसश्च आपृच्छ्यमा
नं ज्योक्रियमाणम् १२

मृगतृष्णिकामिवोष्णां निःश्वासपरंपरामुद्र
हंतमत्युष्णनिःश्वासदग्धयेव श्यामायमा
नयारसनयानिवेद्यमानदारुणसन्निपातारंभ
मुरःस्थूलरुथ।पितमणिमौक्तिकहारचंदनचन्द्र
कांतं कृतांतदूतदर्शनयोग्यमिवात्मानं कुर्वाण
मंगभंगवलनोत्क्षिप्तभुजयुगलंपर्यस्तहस्तन
खमयूखैर्धारागृहमिवतापशांतये रचयंतंनेदि
ष्ठसलिलमणिकुट्टिमादर्शोदरेषु निपतद्भिः प्र
तिबिंबैरपिसन्तापातिशयमिवकथयन्तंस्पृशं
तींप्रणयिनीमिव विश्रामभूमिंमूर्च्छांबहुमन्य
मानमंतकाह्वानाक्षरैरिव सभयभिषग्दृष्टैर
रिष्टैराविष्टंमहाप्रस्थानकालेस्वसंतापसंतान
माप्तहृदयेषु संचारयंतमरतिपरिगृहीत मी
र्ष्ययेव छायया मुच्यमानंउद्योगमिवोपद्रवा
णां सर्वास्त्रमोक्षमिवक्षामतया हस्तीकृतंवि
हस्ततया विषयीकृतंवैषम्येन क्षेत्रीकृतं क्षये
णगोचरीकृतं ग्लान्यादष्टं दुःखासिकयाश्रा
र्मीकृत मस्वास्थ्येनाविधेयीकृतंव्याधिनाक्रो
डीकृतं कालेनलक्ष्यीकृतं दक्षिणाशया

नेदिष्ठमंतिकतमंरसनाजिह्वा ॥ १३ ॥ अरिष्टैर्दुर्लक्षणैः अर
तिरेकत्रानवस्थितिः छायाकांतिःविहस्ताक्षमः लक्ष्यीकृतमाघ्रा
तमित्यर्थः

पीतमिवपीडाभिः जग्धमिव जागरेणनिगी र्णमिववैवर्ण्येन ग्रासीकृतंगात्रभंगेन ह्रियमा णमिव विपद्भिः वंठ्यमानमिव वेदनाभिः लुं ठ्यमानमिव दुःखैःआदित्सितंदैवेन निरूपि तंनियत्याघ्रातमनित्यत्वेन अभिभूयमानम भावेनपरिकलितं परासुतया दत्तावकाशंक्ले शस्यनिवासंवैमनस्यस्य समीपे कालस्यत्र्यं तिके न्तोच्छ्वासस्य मुखेमहाप्रवासस्यद्वा रिदीर्घानिद्राया जिह्वाग्रेजीवितेशस्य वर्त्तमा नंविरलं वाचि चलितंचेतासि विह्वलंवपुषि क्षीण मायुषि प्रचुरं प्रलापे संततं श्वसिते जितंजृंभिकाभिः पराधीनमाधिभिः अनुव द्धमनुवंधिकाभिः पार्श्वोपविष्टयाऽनवरतरो दनोच्छूननयनया गृहीतचामरिकया पिनिः श्वसितैरेव वीजयंत्या विविधौषधिपूलिधूस रितशरीरया मुहुर्मुहुरार्यपुत्र स्वपिषीतिव्या हरंत्या देव्यायशोवत्या शिरसि वक्षसि च स्पृश्यमानं पितर मद्राक्षीत् दृष्ट्वा च प्रथम दुःखसंतापमथ्यमानमति राशंकित इव भा गधेयेभ्यः समभवत्

वंठ्यमानंभागीक्रियमाणं जीवितेशोयमः १४ अनुवंधिका गात्रसंधिपीडा भागधेयेभ्योदेवेभ्यः

अन्तकपुरवर्त्तिनमेवचपितरममन्यत निराकृत इव चांतःकरणेनक्षणमासीत् अवधूतश्च धैर्येण क्षेत्रीकृतः क्षोभेण रिक्तीकृतोरत्या विषयीकृतोविषादेन पावकमयमिवहृदयमुद्वहन्विषमविषदूषितानीव मुह्यंती न्द्रियाणिविभ्राणस्तमसा रसांतरमपिविशेषयन्नच्छून्यत्वेनाकाशमपि अतिशयानो नाविन्दत कर्त्तव्यम् परुपर्शचहृदयेनाभियमुत्तमांगेनचगांत्रवनिपतिस्तु दूरादेव दृष्ट्वातिदायितंतनयं तदवस्थोपिनिर्भरस्नेहावार्जितःप्रधावमानोमनसा प्रसार्यभुजावेह्येहीत्याव्हयन्नूचछरीरार्धेन शयनादुदगात् ससंभ्रममुपसृतं चैनं विनयावनम्रमुन्नमय्यबलादुरसिनिवेश्यविशन्निवप्रमृणानिशाकरमंडलमध्यं मज्जन्निवामृतमयेमहासरासि स्नपयन्निव महतिहरिचन्दनरसप्रस्रवणे अभिषिच्यमान इवतुषाराद्रिद्रवेणपीडयन्नंगैरंगानि कपोलेनकपोलमवघट्टयन्निमीलयन्पक्ष्माग्रग्रथिताजस्रास्रविस्राविणी विलोचनेविस्मृतज्वरसंज्वरंसुचिरमालिलिंग

अंतःकरणेनमनसाप्रस्रवणोनिम्ने द्रवोरसः संज्वरः संतापः९५

कथंकथमपि चिराद्विमुक्त मुपसृत्य कृतनम
स्कारंप्रणतजननीक मुपागतमासीनंच शय
नान्तिकेपिवन्निवविगतनिमेषनिश्चलेन चक्षु
षा व्यलोकयत् परुपर्शच पुनःपुनर्वेपथुमता
पाणितलेन क्षयक्षामकंठश्चकृच्छ्रादिवावादी
त् वत्स कृशोसीति भणिड स्त्वकथयत् देवत
तीयमहःकृताहारस्यास्याद्येतितच्छ्रुत्वावा
ष्पवेगगृह्यमाणाक्षरं कथं कथमप्यायतंनिः
श्वस्योवाच वत्सजानामित्वां पितृप्रियमति
मृदुहृदय मीदृशेषु विधुरयतिधीमतोपिधि
यमातिदुर्धरो बांधवस्नेहः सर्वप्रमाथी अतो
नार्हस्यात्मानं शुचे दातुं उद्दामदाहज्वरद
ग्धोपि दह्ये खलु अहमधिकतरमनेना युष्म
दाधिना निशितामिव शस्त्रं तक्ष्णोतिमांत्वदी
यस्तनिमा सुखंच राज्यंच वंशश्चप्राणाश्च
त्वयिमेस्थिताःयथाममतथा सर्वासां प्रजा
नां त्वाद्विधानां पीडाः पीडयंति सकलमेव
भुवनतलं नह्यल्पपुण्यभाजां वंशमलं कुर्वं
ति भवादृशाः

सूची शलाका

फलमस्याऽनेकजन्मांतरोपार्ज्जितस्य कलु
षस्य कर्मणः करतलगतमिव कथयंति चतु
र्णा मप्यर्ण वानामाधिपत्यंते लक्षणा नित्वज्ज
न्मनैव कृतार्थोस्मि निरभिलाषोस्मि जीवित
व्येभिषगनुरोधःपाययति मामौषधं अपिच
सर्वप्रजापुण्यैः सकलभुवनतलपरिपालनार्थं
मुत्पद्यमानानांभवादृशां जन्मग्रहणोपायः
पितरौ प्रजाभिस्तु वंधुमंतो राजानोन ज्ञाति
भिः तदुत्तिष्ठ कुरु पुनरेवसर्वाः क्रियाःकृताहार
चत्वय्यहमपिस्वयमुपयोक्ष्ये पथ्यंइत्येवमाभि
हितस्यचास्य धक्ष्यन्निवहृदयमतितरां शोका
नलःसंदुधुक्षे क्षणमात्रंचस्थित्वा पित्रापुनरा
हारार्थमादिश्यमानोधवलगृहा दवततारच
कारचेतसिअकांडे खल्वयंसमुपस्थितोमहाप्र
लयोऽयभ्रइववज्रपातः सामान्योपितावच्छो
कःसोच्छ्वासं मरणमनुपदिष्टौषधोमहाव्या
धिरभस्मीकरणोग्निप्रवेशः अनुपरतस्यैव
नरकवासः निर्ज्योतिरंगारवर्षं अशकलीकर
णं क्रकचदारणमव्रणोवज्रसूचीपातः किमुत
विशेषाश्रितःकिमत्र करवाणीति ॥

राजपुरुषेणाधिष्ठितश्च गत्वा स्वधाम धूम
मयानिव कृतास्रुपातानाग्निमयानिव जनित
हृदयदाहा न्विषमयानिव दत्तमूर्च्छावेगान्म
हापातकमया निवोत्पादितघृणान्क्षारमयानि
वानीतवेदनान्कातिचित्कवलानगृह्णात् आ
चमंश्च चामरग्राहिणमादिदेशविज्ञायागच्छ
कथमास्ते तात इतिगत्वाच प्रतिनिवृत्त्यचदेव
तथैवेति विज्ञापितस्तेना गृहीततांबूलएवोत्ता
म्यतामनसाऽस्ताभिलाषिणि सवितरि सर्वा
नाहूयोपह्वरे वैद्याः किमस्मिन्नेवंविधेवि
धेयमधुनेतिविषण्णहृदयःपप्रच्छ तेतुव्यज्ञाप
यन् देवधैर्यमवलंवस्वकतिपयैरेव वासरैःपुनः
स्वांप्रकृतिमापन्नं स्वस्थंश्रोष्यासि पितरमिति
तेषांतु भिषजां मध्ये पौनर्वसवो युवाष्टादशव
र्षदेशीयस्तस्मिन्नेव राजकुले कुलक्रमागतो
गतः

धूममयानिवेतिधूमः किलास्रु मोचयाति घृणा जुगुप्साउपह्वरे
रहासि स्वांप्रकृतिममंदत्वमव्यक्तरूपत्वं च पृथिव्यादिषुवा लय
स्वस्थंव्याधिविनिर्मुक्तं स्वर्गस्थंच यतोजातस्याहिध्रुवोमृत्युर्ध्रुवंज
न्ममृतस्यच तस्मादपरिहार्येर्थे नत्वंशोचितुमर्हसीत्युक्तं पुनर्व
सोरपत्यं पौनर्वसवः पुनर्वसुना मुनिना प्रोक्तमायुर्वेदं अधीते पौ
नर्वसव इति९८

परमष्टांगस्या युर्वेदस्य भूभुजासुतनिर्विशेषं लालित:प्रकृत्यैवातिपटीयस्या प्रज्ञयायथाव द्विज्ञाता व्याधिस्वरूपाणां रसायनोनाःमवैद्य कुमारक: सास्रस्तूष्णीमधोमुखोभूत् पृष्टश्वरा जसूनुनासखेरसायन कथय तथ्यं यद्यसाध्वि वपश्यसीति सोब्रवीत्देवश्व:प्रभातेयथावस्थि त मावेदयिताऽस्मीति अत्रैव चांतरेभवनकम लिनीपाल: कोकमाश्वासयन्नपरवक्रमुच्चैरपठ त् विहगकुरुद्दढमन:स्वयंत्यज शुचमास्स्वविवेकवर्त्मनि सहकमलसरोजिनीश्रियाश्रयति सुमेरुशिरोविरोचन: तच्चाकर्ण्य वाङ्गनिमित्त ज्ञ: पितारिसुतरांजीविताशांशिथिलीचकारग तेषुचभिषक्सुक्षतधृति:क्षपामुखेक्षितिपालस मीपमेवपुनरारुरोह तत्रचदाहोमहानभूत्आहर हारान्हारिणिमणिदर्पणान्मे देहि देहि वैदेहि॥

अष्टांगमिति उक्तंचकायबालग्रहोर्ध्वांगशल्यदंष्ट्राजरावृषान् अष्टावंगानितस्याहुश्चिकित्सातेषुसंश्रितेति आयुर्वेदस्यवैद्यशास्त्रस्यकोकश्चक्रवाक:विरोचनोरवि:तत्रचेत्यादौतत्रचक्षितिपालसमीपेइत्यादीन्भृत्यकलालापानाकर्णयन्निशामनैषीदितिसंबंध: ॥

हिमलवैर्लिंप ललाटं लीलावति घनसारक्षो
दधूलीर्निधेहि धवलाक्षि निक्षिप चक्षुषि च
न्द्रकांतं कांतिमति कपोले कलय कुवलयं क
लावति चंदनचर्चां रचय चारुमते पाटय पट
मारुतं पाटलिके मर्दय दाह मिन्दुमत्य रविं
दैर्जनय जलार्द्रया मुदं मदिरावति समुपन
य मृणालानि मालति तरलय तालवृंत माव
तिके मूर्धानं धावमानं वधान वंधुमति कन्ध
रां धारय धारणिके उरसि सशीकरं करं कुरु
कुरंगवति संवाहय वाहूवलाहिके पीडय पा
दौ पद्मावति गृहाण गाढ मंग मनंगसेने का
वेला विलासवति नैति निद्रा कथाःकथय कु
मुद्वति इत्येवं प्रायान्पितुरालापान नवरत
माकर्ण्य न्दूयमानहृदयो दुः खदीर्घां जाग्र
देव निशा मनैषीत् उषसि चा वतीर्य राजद्वा
रदेशोपसर्पिणा परिवर्धकेनोपस्थापिते ऽपि
तुरंगे चरणाभ्यामेवा जगाम स्वमंदिरं

घनसारः कर्पूरः ॥ ९९ ॥ पटय पटुंकुरु कंधरांग्रीवां संवा
हय मर्दय कुमुदवतीत्यादयः शब्दत्वात्साधवः परिवर्धकोऽश्व
पालः प्रातिकर्मप्रसाधनम् १००

तत्र च त्वरमाणो भ्रातु रागमनार्थमुपर्युपरि क्षिप्रपातिनोदीर्घाध्वगा न्प्रजविन श्चो ष्ट्रपाला न्प्राहिणोत् प्रक्षालितवदनश्च परिजनोपनीत मपि प्रतिकर्मना ग्रहीत् अग्रतः स्थितानां राजपुत्रयूनां विमनसांरसायनो रसायन इति जल्पितमव्यक्तम श्रौषीत् पर्यपृच्छ च्चतान् भद्राः किं रसायन इति पृष्टाश्च तेस वैंसममेव तूष्णीं बभूवुः भूयो भूय श्चा नुवध्यमाना दुःखेन कथं कथ मप्याचचक्षिरे देव पावकं प्रविष्ट इति तच्च श्रुत्वा क्लुष्टइवां तस्तापेन सद्यो विवर्णता मगात् उत्पाट्यमानमिव चनशशाक शोकान्धधारायितुंहृदयंआसीच्चास्यचेतासि कामंस्वयंनभवति नतु श्रावयस्य प्रियं वचन मरतिकर मितर इवा भिजातो जनः कृच्छ्रेचयथाऽनेना नुष्ठितंउज्वलीकृत मधिकतरंज्वलनप्रवेशेन कल्याणप्रकृति कान्त स्वर मिव साम्प्रतं कौलपुत्रस्येति पुन श्चाचिन्तयत्॥ ॥

कान्तस्वरं हेम तदपि ज्वलनप्रवेशेनाधि कतर मुज्ज्वलं सा म्प्रतंयुक्तम् ॥ ॥

समुचित मेवाथवा स्नेहस्ये दं किं मस्य ता
तो नतात: किंवा म्वा जननी वयं न भ्रातर:
अन्यस्मि न्नपि तावत्स्वामिनि दुर्लभीभवति
भवन्त्य सवो ध्रियमाणा ह्रीहितवो लोके किं
मुतामृतमयेऽनुजीविनां निर्व्याजवांधवे वंध्य
प्रसादे सुगृहीतनाम्नि ताते संप्रति सांप्रत मा
चरित मनेना त्मानं दहता किंवा स्या कल्प
मवस्थितस्यस्थेयसो यशोमयस्यदह्यते पति
तः सकेवलं दहने दग्धास्तु वयंधन्यःखल्व
सा वग्रणीः पुण्यभाजां अपुण्यभाक्किदमेवरा
जकुलं कुलपुत्रेण यत्तादृशा वियुक्तं अपिच म
मापि कः खल्वेतेषां प्राणानां कः कार्याति
भारःकृत्यशेषो वा का वा व्यापृतता येन ना
द्यापि प्रष्ठानिष्ठुराःप्राणाःप्रतिष्ठंतेकोवा न्तरा
यो हृदयस्य येन सहस्रधा नदलति इतिदुः
खार्त्त श्च न जगाम राजसद्म समुत्ससर्ज च
सर्वकार्याणि शयनीये निपत्योत्तरीयवास
सा सोत्तमांग मात्मान मवगुंठ्या तिष्ठत् ॥

अतिशयेन स्थिरं स्थेयः १ तस्य व्यापृतता व्यग्रता प्रष्ठाअ
ग्रगामिनः प्रतिष्ठंते प्रतिष्ठां कुर्वंते ॥ २ ॥

इत्थं भूते च देवे हर्षे राजनि चतद्वस्थेसर्व लोकस्य कपोलेषु कीलिता इव करा: लोचनेषु लेप्यमय्य इवा स्रुस्रुतयः नासाग्रेषु प्रथिता इव दृष्टयः कर्णेषूत्कीर्णा इव रुदितध्वनयः जिह्वासु सहजानीव हा कष्टानि लपनेषु पल्लवितानी व श्वसितानि अधरेषु लिखितानीव परिदेवितपदानि हृदयेषु निधानीकृतानी व दुःखान्य भवन् उष्णास्रुदाहभीतेव ना भजत नेत्रोदराणि निद्रा निःश्वासवातविधूता इव व्यलीयन्त हासाः निखशेषदग्धेवच सन्तापेन न प्रावर्त्तत वाणी कथास्वपि ना श्रूयन्त परिहासाः क्वागमन्निति नाज्ञायंत गीतगोष्ठ्यः जन्मान्तरातीतानीवं ना स्मर्यंत लास्यानि स्वप्नेपि ना गृह्यन्तप्रसाधनानि वार्त्तापिनालभ्यतोपभोगानां नामापि ना कीर्त्यता हारस्य खपुष्पप्रतिमान्या सन्नापानमंडलानि लोकांतर मिवाऽनीयन्त वन्दिवाचः युगान्तर इवावर्त्त न्तनिवृत्तयः पुनारिवा दह्यत शोकाग्निना मकरकेतुः दिवा पि ना मुच्यन्त शयनानि ॥

शनैःशनैश्च महापुरुषविनिपातपिशुनाः स
मंसमन्तात्समुद्भवन्भुवने भूयांसोभूपतेरभा
वायभयमुत्पादयन्तोभूतानांमहोत्पाताः त
थाहि दोलायमानसकलकुलाचलचक्रवाला
पत्यासार्धंगन्तुकामवप्रथममचलद्धरित्रीधा
न्वनूतरेरिवान्तरे तस्मिन्स्मरन्तः परस्परा
स्फालनवाचालवीचयो विजुघूर्णिरे ऽर्णवाः
भूभृद्भावभीतानांविततशिखाकलापविकट
कुटिलाः केशपाशा इवोर्ध्वींबभूवुर्धूमकेतवः
ककुभांधूमकेतुकरालितदिङ्मुखं दिक्पाला
रब्धायुष्कामहोमधूमधूम्रामिवाभवद्भुवनं भ्र
ष्टभासितमकालायसकुंभवद्भुवि भानुमंडले
भयंकरकबंधकायव्याजेन कोपि पार्थिवप्रा
णितार्थींपुष्पोपहारमिवोपजहार ज्वालितप
रिवेशमंडलाभोगभास्वरो जिघृक्षाजृंभमान
स्वर्भानुभयादुपरचिताग्निप्राकार इवप्रत्यदृ
श्यतश्वेतभानुः अवनिपतिप्रतापप्रसादिताः
प्रथमतरकृतपावकप्रवेशा इवादह्यन्तानुरक्ता
दिशः

शिखी मयूरोपि धूमकेतवःउत्पातशंसिन अग्नयश्चकरालिता
निर्भीषणीकृतानि व्याप्तानिचवभ्रुकपिशं २ श्वेतभानुः चंद्रः
प्रसादिता आवर्जिताभूषिताश्च

स्रुतशोणितशीकरासारारुणिततनु रनुमर णायप्रावृतपाटलांशुकपटेवादृश्यत वसुधाव धूःनराधिपविनाशसंभ्रमभीतैर्लोकपालैरिव कालायसकवाटपुटैरकालकालमेघपटलैररु ध्यन्त दिग्द्वाराणि प्रेतपतिप्रयाणप्राहिताः पटवः पटहाइवारटन्तोहृदयस्फोटनाःपस्फा यिरेनिर्घातानांघोरानिर्घोषाःनिकटभीवद्यम महिषखरपुटोद्धूताइवद्युमणिधामधूसरचीक्रुः क्रमेलककचकपिलाः पांसुवृष्टयःविरसविरा विणीनामुन्मुखीनांशिखिनोज्वालाःप्रतीच्छं त्यइवपतन्तीरुल्कानभसो ववाशिरेशिवानां राजयः राजधामनिधूमायमानकवरीविभाग विभावितविकाराः प्रकीर्णकेशपाशप्रकाशित शोकाइव प्राकाशन्तप्रतिमाःकुलदेवतानांउ पासिंहासनमाकुलंकालरात्रिविधूयमानवाजि टलंनवेणीवन्धनविभ्रमंविभ्राणंवभ्रामभ्राम रंपभ्रटतामंतः पुरस्योपरिक्षणमपि नशशाम व्याक्रोशी वायसानाम् ॥

कचाः केशाः शिवानां मृगादीनां कवरीशब्देनात्रकचालक्ष्यं ते ४ व्याक्रोशी परैरावूहानशब्दः वायसानांकाकानाम् ॥

श्वेतातपत्रमंडलमध्याज्जीवितमिवराज्यस्यस रसापिशितपिंडलोहितं चंचच्चंचुरुच्चैरुच्चस्थान खंडमाणिक्यस्य कूजज्जरद्गृध्रः महोत्पातद्रूय मानश्चकथमपिनिनायनिशाम् अन्यस्मिन्न हनिसमीपमस्यराजकुलाद्द्रुतगतिवशाविशी र्यमाणालंकारझांकारिणीविजयघोषणेव वि षादस्याकुलचरणचलत्तुलाकोटिक्वणितवाचा लिताभिरुद्ग्रीवाभिः किंकिमितिपृच्छयामा नेव दूरादेवभवनहंसीभिःस्खलितविशाल श्रोणिशिंजानरशनानुराविणीभिश्चवाष्पां धा समुपदिश्यमार्गेव गृहसारसीभिरदृष्टक वाटपट्टसंघट्टस्फुटितललाटपट्ट रुधिरपटले नपदांतेनेव रक्तांशुकस्यमुखमाच्छाद्य प्ररुद ती सन्तापवलविलीनकनकवलयरसधारा मिववत्रलतामुत्सृजंती मुखमरुत्तरंगितामुत्त रीयांशुकपटीस्फुरंतीं फणिनीवनिर्मोकमंज रीमाकर्षन्तीनघांसस्त्रसिनानिलविलोलितनी लतमेनतमालचीवरेणवशोकोचितेनधम्मिल रचनारहितेन शिरोरुहसंचयेन चंचता

अन्यस्मिन्नित्यादौ समीपस्था यशोवत्याः प्रतीहार्याजगामे तिसंबंधः तुलाकोटिर्नूपुरं ५ चीरचीवरं वृक्षत्वक्चीरवासः

प्रावृतकुचाकुचाताडनपीडयासमुच्छूनाताम्र
श्यामतलं मुहुर्मुहुरत्युष्णास्त्रुप्रमार्जनप्रदग्ध
मिवकरकिसलयंधुनाना चक्षुर्निर्झरे शीर्यति
स्नपयंतीव शोकाग्निप्रवेशाय स्वकपोलतल
प्रतिबिंबितमासन्नलोकं लोललोचनप्रवृत्तै
स्तरलैस्तारकांशुभिः श्यामायमानमात्मदुः
खेन दिवसमपि दहन्तीवक्व कुमारः क्व कुमार
इति पुरुषंपृच्छंतीवेलेतिनाम्नायशोवत्याः प्र
तीहार्य्याजगाम विषण्णलोकलोचनप्रत्युद्ग
ताचोपसृत्य कुट्टिमन्यस्तहस्तयुगला ग
लन्तीभिः सिंचतीव शुष्यंत दशनदीधिति
धाराभिराधूसरमधरमधोमुखी विज्ञापितव
तीदेवपरित्रायस्वजीवत्येवभर्त्तारिकिमप्यध्य
वसितंदेव्येतिततस्तदपरमाकर्ण्यच्युतइवस
त्वेनद्रुतइवदुःखेनाचान्तइवचिन्तयातुलित
इव। तपेनांकीकृतइवांतकेनाप्रतिपत्तिरासीत्
आसीच्चास्यचेतसि प्रतिपन्नसंज्ञस्यबहुशो
पिहृदयेदुःखाभिषंगोनिपतन्नश्मनीव लोह
प्रहारः कठिने हुतभुजमुत्थापयति ॥

अप्रतिपत्तिः किंकर्तव्यतामूढः हृदयेति कठिने ॥ ६ ॥

न तु भस्मसात्करोति मे निरनुक्रोशस्य का यमिति उत्थाय च त्वरमाणोंऽतःपुरमगात् तत्र चमर्तुमुद्यतानां राजमहिषीणामशृणोद्दूराद्वे वतात चूत चिंतयात्मानं प्रवसति ते जननी वत्सजातीगुच्छ गच्छाम्यापृच्छस्व मां मया विनाऽद्यानाथाभवसि भागिनि भवनदाडिम लते रक्ताशोक मर्षणीयाः पादप्रहाराः कर्ण पूरपल्लवभंगापराधाश्च पुत्रकान्तःपुरबाल बकुलक वारुणीगंडूषग्रहणदुर्ललितदृष्टोसि वत्से प्रियंगुलतिके गाढमालिंगमां दुर्लभा भवामिते भद्र भवनद्वार सहकारकदातव्यो निवापतोयांजलिरपत्यमासि भ्रातः पंजरशु कयधानाविस्मरासिमांकिंव्याहरसि दूरीभूता स्मितेशारिके स्वप्ने नःसमागमः पुनर्भूयात् मातर्मांगलश्चकस्यसमर्पयामिगृहमयूरकमं व सुतवल्लालनीयमिदं हंसमिथुनंमन्दपुण्य यामयानसंभावितोस्यचक्रवाकयुगलस्य वि वाहोत्सवःमातृवत्सलेनिवर्त्तस्व गृहहारिणि केसमुपनय ॥

अनुक्रोशोदया तत्रेत्यादौराजमहिषीत्येवंप्रायानालापानशृणो दितिसंबंधः आपृच्छस्वज्योरकुरु वारुणीसुरानिवापोमृतमुद्दि श्यदीयतजलादिकम् ॥ ७

सौविदल्लवल्लभवल्लकींपरिष्वजे तावदेनां च
न्द्रसेने सुदृष्टः क्रियतामयंजनः विंदुमतीयं
ते न्यावन्दनाचेटि मुंचचरणावार्यैकात्यायानि
के किं रोदिषि नीतास्मि दैवेन तातकंचुकि
न्किमामलक्षणांप्रदक्षिणीकरोषिधात्रेयि धा
रयात्मानं किं पादयोः पतसि भागिनिगृहा
णमामपश्चिमांकंठेकष्टेनदृष्टाप्रियसखी मल
यवती कुरंगवलयमामंत्रणांजलिःसानुमत्य
यमन्त्यः प्रणामः कुवलयवत्येषतेवसानप
रिष्वंगः सख्यः क्षंतव्याः प्रणयकलहा इत्ये
वंप्रायानालापान् दह्यमानश्रवणश्च तैःप्र
विशन्नेवनिर्यांतीं दत्तसर्वस्वापतेयांगृहीतम
रणप्रसाधनां जानकीमिवजातवेदसं पत्युः
पुरः प्रवेक्षन्तीं प्रत्यग्रस्नानार्द्रदेहतयाश्रिय
मिव भगवतीं सद्यः समुद्रादुत्थितांकुसुंभव
र्णीवाससी दिवमिवतेजसी सान्ध्येदधानां
तांबूलदिग्धरागांधकाराधरप्रभापटलपाटलं
पट्टांशुक मिव विधवमरणचिह्नमंगलमुद्व
हंतीं रक्तकंठसूत्रेण कुचांतरावलंबिना स्फु
टितहृदयविगलितरुधिरधाराशंकां कुर्वंतीं

तिर्यक्कुटिलकुण्डलकोटिकंठकाकृष्टतंतुना हारेण वालितेनासितांशुकपाशेनेवकंठमुत्पीडयंतींसरसकुंकुमांगरागतया कवलितामिवादिधक्षता चितार्चिष्मता चितानलार्चनाकुसुमैरिव धवलधवलैरस्रुबिंदुभिरंशुकोत्संगमापूरयंतीं गृहदेवतामंत्रणवलिमिवचलयैर्विगलद्भिः पदेपदे विकिरन्तीं आप्रपदीनांकंठगुणकुसुममालां यमदोलामिवारूढां अंतर्गुंजन्मधुकरमुखरेणामंत्र्यमाणलोचनोत्पलामिव कर्णोत्पलेन प्रदक्षिणीक्रियमाणामिव मणिनूपुरबंधुभिर्बद्धमंडलं भ्रमद्भिर्भवनहंसैः सन्निहितप्राणसमंमरणाय चित्तमिव चित्रफलकमविचलं धारयन्तीं अर्चावद्धोद्रूयमानधवलपुष्पदामकां पतिव्रतापताकामिव पतिप्रसयष्टिमिष्टामुपगूहमानांवंधोरिव निजचारित्रस्यधवलस्य नृपातपत्रस्य पुरोनेत्रोदकमुत्सृजंतीं पत्युः पादपतनसमुद्गमद्भ्यधिकवाष्पांभः प्रवाहप्रतिरुद्धदृष्टिः

कथमपि प्रतिपन्नादेशान्साचिवान्सान्दिशन्ती मनुनयनिवर्त्तितविधुरवृद्धबंधुवर्गवर्धमानध्व निभिर्गृहाक्रन्दैराकृष्यमाणश्रवणां भर्तृभाषितनिभैः पंजरसिंहवृंहितैर्हियमाणहृदयां धात्र्याभर्तृभक्त्याच निजयाप्रसाधितां मूर्च्छयाजरत्याचसंस्तुतया धार्यमाणां सख्यापीडयाच व्यसनसंगतयासमालिंगितां परिजनेनसंतापेनच गृहीतसर्वावयवेनपरीतां कुलपुत्रोच्छ्वसितैश्च महत्तरैरधिष्ठितां कंचुकिभिर्दुःखैश्चातिवृद्धैरनुगतां भूपालवल्लभान्कौलेयकानपि सास्रमालोकयन्तीं सपत्नीनामपि पादयोः पतन्तींचित्रपुत्रिकाभ्यामंत्रयमाणांगृहपतत्रिणामपि अंजलिंपुरस्तादुपरचयन्तीं पशूनप्याष्टच्छयमानांभवनपादपानपिपरिष्वज्यमानां मातरंददर्श दूरादेव च वाष्पायमाणदृष्टि रभ्यधात् अंबत्वमपि मांमन्दपुण्यं त्यजासिप्रसीद निवर्त्तस्वेतिअभिदधानएवच सस्नेहमिवनूपुरमणिमरीचिभिश्चुंब्यमानचूड श्चरणयो र्न्यपतत् ॥

आपृच्छयमानां ग्योत्कारयंती १ वाष्पायमाण वाष्पमुद्दमंती

देवीतुयशोवती तथातिष्ठतिपादनिहिताशिरसि विमनासिकनीयसिप्रेयासि तनयेगुरुणागिरिणे वोद्वेगवेगेनावष्टभ्यमानामूर्च्छांधतमसंरसातल मिव प्रविशन्ती वाष्पप्रवाहेनेव चिरनिरोधसं पिंडितेन स्नेहभारेण निर्भराविर्भूतेना भिभूय माना कृतप्रयत्नापि निवारयितुं नशशाक वा ष्पोत्पतनम् उत्कटकुचोत्कंपप्रकटितासह्यशो काकूलाच गद्गदिकागृह्यमाणगलविकलानिसा मान्यमन्युतरलीक्रियमाणाधरोद्देशा पुनरुक्त स्फुरणनिविडितनासापुटा निमील्यनयने नय नाम्भः सेकप्लवेन प्लावयन्ती विमलौ कपोलौ संछाद्य करनखमयूखमालाखचिततनुना तन्वं तरनिर्गच्छदच्छास्त्रस्त्रोतसेवांशुकपटांतेन किं चिदुत्तानितं वदनेन्दुं दूयमानम्। नसा स्मरंती प्रस्नुतस्तनी प्रसवदिवसा दारभ्य सकलमंक शायिनःशैशवमस्य ज्ञातीगृहगतहृदयाम्ब ता त न पश्यतं पापांपरलोकप्रस्थितां मामेवमति दुःखिता मिति मुहुर्मुहु राक्रन्दन्ती पितरौहा वत्स विश्रांतभागधेयया न दृष्टोसीति

देवीवाष्पोत्पतनंधारयितुनशशाकेतिसंवंधः ॥ १० ॥ वाष्पोत्पत नमस्रुप्रवाहम् ॥ ११ ॥

प्रेष्ठंज्येष्ठं तनय मसन्निहितं कोशल्यनाथा जा
तेति श्वशुरकुलवर्त्तिनीं दुहितर मनुशोचन्ती
निष्करुणा किं मपराद्धं तवाऽमुना जनेनेति दै
व मुपालभमाना नास्ति मत्समा सीमन्तिनी
दुःखभागिनीति निन्दन्ती वहुविधमात्मानं
मुषिता स्मि कृतांत नृशंस त्वये त्यकांडे कृतां
तं गर्हमाणा मुक्तकंठमतिचिरं प्राकृतप्रमदाव
देवप्रारोदीत् प्रशांतेचमन्युवेगे सस्नेहमुत्थाप
यामास सुतंहस्तेनचास्यप्ररुदितस्य पक्ष्मपाली
पुंज्यमाननखकिरणनिवहां द्रुतमिवाधकतरं
क्षरन्तीं दृष्टिमुन्ममार्ज स्वयमपि कठोररागपरि
पीयमानेनधवालिम्ना मुच्यमानोदरेकथदस्त्रुश्व
यत्पर्यंते शुक्लशीकरतारतारकितपक्ष्मणी सू
क्ष्मतरास्त्रुविंदुपरिपाटीपतनानुवंधविधुरे लोच
नेपुनःपुनरापूर्यमाणे प्रमृज्य वाष्पार्द्रगंडगृही
तांच श्रवणशिखरमारोप्य शोकलंवामलकल
ता मधःस्त्रस्तविलोलवालिकाव्याकुलितां च
तिरश्चींसमुत्सार्द्ध्यचिकुरसटां

अस्त्रुप्रवाहपूरितमार्द्रंच किंचिच्च्युत मुत्क्षिप्य हस्तेन स्तनोत्तरीयतरंगितमिव मग्नांशुकपटां ततनुताम्रलेखालांछितलावण्यंकुब्जिकावर्जि तराजतराजहंसास्यसमुद्गीर्णेनपयसा प्रक्षाल्य मुखकमलं कलमूकलोकाविधृते वासःशकलेशु चिनी समुन्मृज्य पाणी सुतवदनविनिहितनि भृतनयनयुगला चिरं स्थित्वा पुनः पुनरायतं निःश्वस्याऽवादीत् वत्स नासि न प्रियो नि र्गुणोवा परित्यागार्हो वा स्तन्येनैव सह त्वया पीतंमे हृदयं अस्मिंश्च समये प्रभूतप्रभुप्रसादां तरिता त्वां न पश्यतिदृष्टिः अपिच पुत्रक पुरु षांतरविलोकनव्यसनिनी राज्योपकरणं अक रुणा वा नास्मि लक्ष्मीःक्षमा वा कुलकलत्रम स्मि चारित्रधनाधर्मधवले कुले जाता किं वि स्मितोसि मां समरशतशौंडस्य पुरुषप्रकांड स्य केसरिणइव केसरिणीं गृहिणीं वीरजा वी रजाया वीरजननीच मादृशी पराक्रमक्रीताक थमन्यथा कुर्यात् एवंविधेनपि भ्रातेभरतभगीर थनाभागनिभननरेन्द्रवृन्दारकेणगृहीतःपाणिः

आसेवितः सेवासंभ्रांतानन्तसामन्तसीमन्ति
नीसमावर्ज्जितजांबूनदघटाभिषेकः शिरसाल
ब्धोमनोरथदुर्लभो महादेवीपट्टबंधसत्कारला
भोललाटेन आर्पितोयुष्मद्विधैः पुत्रैरमित्रकलत्र
वन्दिवृन्दविधूयमानचामरमरुच्चलर्चनांशुकध
रौपयोधरौसपत्नीनां शिरःसु निहितंनमन्निखि
लकटककुटुंबिनीकिरीटमाणिक्यमाला चिंतंच
रणयुगलकं एवं कृतार्थसर्वावयवा किमप
रमपेक्ष क्षीणपुण्या मर्त्तुमविधवैव वांछामि
नच शक्नोमि दग्धस्य भर्त्तुरार्यपुत्रविरहिता र
तिरिव निरर्थकान्प्रलापान्कर्त्तुम् पितुश्च तेपा
दधूलिरिव प्रथमंगगनगमनमावेदयन्तीवहुम
ता भविष्यामि शूरानुरागिणीनां सुरांगनानांप्र
त्ययग्रहदृष्टदारुणदुःखदग्धायाश्चमेकिंधक्ष्यति धू
मध्वजःमरणाच्च मेजीवितमेवास्मिन्समयेसाहसं
अतिशीतलः पतिशोकानलादक्षयस्नेहेन्धनाद
स्मादनलःकैलासकल्पे प्रवसतिजीवेश्वरेजरत्तृ
णकाणिकालघीयसि जीविते लोभइति क घटते

जांबूनदंसुवर्णं १२ पादधूलिरिवेति सापि प्रथमगतागमनमावेदय
ति धक्ष्यतिभस्मीकरिष्यति धूमध्वजोग्निः ॥ १४ ॥

अपि च जीवन्तीमपि मां नरपतिमरणावधी रणमहापातकिनीं न संप्रक्ष्यति पुत्र पुत्रराज्यसुखानि दुःखदग्धानांच भूतिरमंगला चाप्रशस्ताच निरुपयोगा च भवति वत्सविध्वस्तानांयशसा स्थातुमिच्छामि लोके न वपुषा तदहमेव त्वां तावत्तात प्रसादयामि न पुनर्मनोरथप्रातिकूल्येन कदर्थनीयास्मि इत्युक्ता पादयोरपतत् सतुससंभ्रममपनीय चरणयुगलमवनमिततनुरुभयकरविधृतवपुषमवनिगतशिरसमुदनमयन्मातरम् दुर्निवारतां च शुचः समवधार्य कुलयोषिदुचितांचतामेवश्रेयसीं मन्यमानःक्रियांकृतनिश्चयांतांज्ञात्वा तूष्णीमधोमुखोभवत् अभिनन्दतिहि स्नेहकातरापि कुलीनता देशकालानुरूपम् देव्यपियशोवतीपरिष्वज्यसमाघ्रायचाशिरसिनिर्गत्यचरणाभ्यामेवचान्तःपुरात्पौराक्रन्दनिर्भराभिरुपरुध्यमानेव दिग्भिः सरस्वतीतीरंययौ

भूतिः समृद्धिः भस्मच विध्वस्तानां विधवानां ॥

तत्र च स्त्रीस्वभावकातरैर्दृष्टिपातैः प्रविकासितरक्तपंकजपुंजैरिवार्चयित्वा भगवंतं भानुमन्तामिव मूर्त्तिरैन्दवी चित्रभानुं प्राविशत् इतरोऽपि मातृमरणविह्वलो बंधुवर्गपरिवृतः पितुः पार्श्वं प्रायात् अपश्यच्च स्वल्पावशेषप्राणवृत्तिं परिवर्त्यमानतारकं तारकराजमिवास्तमभिलषंतं जनयितारं असह्यशोकोद्रेकाभिद्रुतश्चत्याजितः स्नेहेन धैर्यमाश्लिष्यास्य सकलदुर्मदमहीपालमौलिमालालालितौ पादपद्मावंतस्तापान्मुखचन्द्रमिव द्रवीभवंतं दशनज्योत्स्नाजालमिव जलता मापद्यमानं लोचनलावण्यमिव विलीयमानं मुखसुधारसमिव स्पन्दमानं अच्छाच्छमस्रुस्रोतसां संतानं महामेघमयविलोचन इव वर्षन्निरतरवद्विमुक्तारावश्चिरं रुरोद राजा तु तमुपरुध्यमानदृष्टिरविरतरुदितशब्दाश्रितश्रवणः प्रत्यभिज्ञाय शनैः शनैरवादीत् पुत्र नार्हस्येवं भवितुं भवद्विधा न ह्यमहासत्त्वाः ॥

अमावस्यायामिन्दुर्भानुमंतं प्रविशतीति प्रसिद्धं चित्रभानुमग्निं तारकराजं चन्द्रं असह्येत्यादौ चिरं रुरोदेति संबंधः १५ उद्रेकः आधिक्यं उपरुध्यमाना उपरोधवती दृष्टि र्बुद्धिर्यस्यसः

महासत्त्वता हि प्रथममवलंबनं लोकस्य प
श्चाद्राजवीजिता सत्त्ववतांचाग्रणीःसर्वाति
शयाश्रितःक्वभवान् क्व वैक्लव्यं कुलप्रदीपो
सीति दिवसकरसदृशतेजसः तेलघूकरणमि
व पुरुषसिंहोऽसीति शौर्यपटुप्रज्ञोपबृंहितप
राक्रमस्यनिंदेवक्षितिरियंतवेति लक्षणाख्या
तचक्रवर्त्तिपदस्य पुनरुक्तमिव गृह्यतां श्री
रितिस्वयमेवश्रिया गृहीतस्य विपरीत मिव
अध्यास्यतामयं लोक इति उभयलोकविजि
गीषो रपुष्कलमिव स्वीक्रियतां शोकः शशि
करनिकरनिर्मलयशःसंचयैकाभिनिवेशिनो
निरुपयोगमिव आत्मीक्रियतां राजकमि
ति गुणगणात्मीकृतं जगतो गतार्थ मिव उह्य
तां राजभार इति भुवनत्रयभारोचितस्याऽनु
चितनियोग इव प्रजा परिरक्ष्यतामिति दी
र्घदोर्दंडार्गलितदिङ्मुखस्यानुवादइवपरिज
नः परिपाल्यतामिति लोकपालोपमस्या नु
षंगिकमिव शस्त्राभ्यासः कार्यइति ॥

अवलंवनमाश्रयः राजवीजिना राजान्वयिता कुलप्रदीपोसी
त्यादो पूर्ववदाक्षेपाभ्यूहः १६ आनुषंगिकं प्रस्तावागतम्.

धनुर्गुणकिणकलंककालीकृतप्रकोष्ठस्यकिमा दिश्यते निश्चाह्यतां चापलमिति नूतनतरवय सि निगृहीतेन्द्रियस्यनिरवकाशेवमेव।णीनि रवशेषतांशत्रवोनेयाइतिसहजस्यतेजसएवे यंचिन्ता इत्येवंवदन्नेवापुनरुन्मीलनायनिमि मीलराजासिंहोलोचनेप्रत्यमद्यतचपूषात्मजःश्र स्मिन्नेव।न्तरेपूषाप्यायुषेव तेजसाऽप्ययुज्यत तत श्चलज्जमानइवनरपति जीवितापहरणज नितादात्मापराधादधोमुखः सममवत् भूपा लाभावशोकशिखिनेवांतस्ताप्यमानस्ताम्र तांप्रपेदे मन्दंमंदमप्रियप्रश्नार्थमिव स्थिति मनुवर्त्तमानोलौकिकीमवातशद्दिवः दित्सुरिव जनेशाय जलांजलिमपर जलधिमुपसस र्प सद्योदत्तजलांजलिः दुःखदहनदग्धमिव करसहस्रमालोहितमाधत्त एवंचमहानराधि पनिधनानिधीयमानविपुलवैराग्य इव शांत वपुषि विशतिगिरिगुहागह्वरं गभस्तिमालि नि ॥

अपुनरुन्मीलनाय पुनः अप्रबोधनाय निमिमीलप्रत्यपद्यतप्राप्तः पूष्ण आत्मजोयमः ॥ १७ ॥ एवंचयादावास्मिन्नास्मिन्सति नरेन्द्रोहुताशनसात्क्रियया यशःशेषतामनीयतेतिसंबधःगभस्ती नूरश्मीन्मिलते धारयतीति गभस्तिमालीसूर्यःतस्मिन्

समुपोह्यमानमहाजनास्रुदुर्दिनार्द्रीकृत इव निर्वात्यातपे खेदनताम्रसकललोकलोचनरुचेव लोहितायति जगति ऊष्मायमानानेकनरनिःश्वाससंतापप्लुष्ट इवच नीलायमाने दिवसे नृपानुगमनप्रचलितयेव लक्ष्म्यामुच्यमानासु कमलिनीषु पतिशुचेव परिवृतच्छायायां श्यामायमानायां भुवि कुलपुत्रेष्विव परित्यक्तकलत्रेषु कृतकरुणप्रलापेषु वनांतानाश्रयत्सु दुःखितेषु चक्रवाकेषु छत्रभंगभीतेष्विव निगूढकोशेषु कुशेशयेषु स्फुटितदिग्वधूहृदयरुधिरप्लव इव गलिते रक्तातपे क्रमेणच लोकांतरमुपगतवति अनुरागशेषे जाते तेजसामधीशे गगनतलवितन्यमानवहलरागपाटलायां प्रेतपताकायामिव प्रवृत्तायां संध्यायां शवशिविकालंकारकृष्णचामरमालास्विव विस्फुरंतीषु दर्शनप्रतिकलासु तिमिरलेखासु ॥

समुपोह्यमानं वर्धमानं निर्वात्यशाम्यति सति यश्चार्द्रीकृतः सोवश्यंनिर्वाति शीतली भवति छायाऽऽतपप्रतिपक्षजातिः कांतिश्च श्यामा रात्रिः नायिकाच वनं तोयं विपिनंच छत्रभंगोराजदंडः पत्राणांच छत्राकारताभेदः कोशोगंजः कार्णिकाच अनुरागोभक्तिर्लौहित्यंच तेजसामधीशो राजापि शवशिविका मृतयानं चामरमाला अपि दर्शनप्रतिकूलाः १८

असितागुरुकाष्ठायां केनापि चितायामिव र
चितायांरजन्यां दंतामलपत्रप्रसादितकार्णि
कासु केसरमालाकल्पितमुंडमालिकास्वनु
मर्त्तामिवोद्यतासु प्रहसितमुखीषु कुमुदल
क्ष्मीषु अवतरत्त्रिदशविमानकिंकिणीक्वाणि
तइव श्रूयमाणे शाखिशिखरकुलायलीयमा
नशकुनिकुलकूजिते नाकपथप्रस्थितपा
र्थिवप्रत्युद्गतपुरुहूतातपत्र इव पूर्वस्यांदिशि
दृश्यमाने चन्द्रमसि नरेन्द्रःस्वयं समर्पित
स्कंधैःगृहीत्वा शवशिविकां शिविसमःसा
मन्तैःपौरैश्च पुरोहितपुरःसरैः सरितंसरस्व
तींनीत्वानरपतिसमुचितायां चितायांहुताश
सत्क्रियययायशःशेषतामनीयत देवोपिहर्षः
पुंजीभूतेनसकलेनेव जीवलोकेन राजकुल
संवर्द्धनाशेषेण शोकमूकेन परिवृतान्तर्वार्त्ति
नापिशोकानलतप्तेन स्नेहद्रवेण वहिरिवासि
च्यमानोनिर्व्यवधानायां धरण्यामुपविष्ट
एव तां निशीथिनीं भीमरथभीमामखिलां
सजागरोजजागार॥

काष्ठादिशः दारुच काष्ठंदतवत्तस्यचामलंपत्रं कर्णिकाकर्णा
भरणंच केसरशब्दः किंजल्कवकुलयोः शिविर्नामराजर्षिरभूत्
निशीथिनींरात्रिं भीमरथीनरकनदी कालरात्रिर्वा अन्येतुसप्त सप्त
त्यावर्षैस्तत्संख्यैश्चमासैर्दिनैश्च तावद्भिर्गतैरेकारात्रिर्भीमरथभिव
ति तामतिक्रांतोवर्षशतजीवीनरोभवतीतिप्राहुः ॥ १९ ॥

अजनि चास्य चेतसि ताते दूरीभूते संप्रत्ये तावान्खलु जीवलोको लोकस्यभग्नाः पन्थानो मनोरथानां खिलीभूतानिभूतानि स्थानानि स्थगितान्यानन्दस्य द्वाराणि सुप्तासत्य वादिता लुप्ता लोकयात्रा विलीना बाहुशालिता प्रलीना प्रियालापिता प्रोषिताः पुरुषकारविहारविकाराःसमाप्ता समरशौण्डता ध्वस्ता परगुणप्रीतिः विश्रांताविश्वासभूमयः अपदान्यपदानानि निरुपयोगानि शास्त्राणि निरवलंबना विक्रमैकरसता कथावशेषा विशेषज्ञता ददातु जनो जलांजलिमौर्जित्याय प्रतिपद्यतां प्रव्रज्यां प्रजापालना वध्नातु वैधव्यवेणीं वरमनुष्यता समाश्रयतु राजश्रीराश्रमपदम् परिधत्तां धवले वाससी वसुमती वहतु वल्कले विलासिता तपस्यतु तपोवनेषु तेजस्विता प्रावृणोतु चीवरे वीरताक्कगम्यतां पुनस्तस्य कृतज्ञे कृतज्ञतयाक्क पुनःप्राप्स्यति तादृशान्महापुरुषनिर्माणपरमाणून्परमेष्ठी शून्याः संवृता दश दिशो गुणानां जगज्जात मंधकारं धर्मस्य

जीवलोकः संसारः खिलीभूतानि शून्यानि लोकयात्रा व्यवहारः प्रावृणोतु परिदधातु २०

निष्फलमधुना जन्मशस्त्रोपजीविनां तातेन विना! कुतस्त्यादिवसमसमसमररससमारब्धकलहकथाकंठकित सुभटकपोलभित्तयो वीरगोष्ठ्यः स्वप्नेपिदृश्येत दीर्घरक्तनयनंपुनस्तन्मुखसरोजम् जन्मान्तरेपिपुनःपरिष्वज्येत तल्लोहस्तंभाभ्याधिकगरिमगर्भं भुजयुगलंलोकांतरेपिपुत्रेत्यालपतः श्रूयेतसासुधारसमुद्गिरंती मथ्यमानक्षीरसागरोद्गारगंभीरा भारतीति एतानि चान्यानिच चिंतयतएवास्य कथमपि साक्षयमियाय यामिनी ततःशुचेव मुक्तकंठ मारटत्सुकृकवाकुकुलेषु गृहागिरितरुशिखरेभ्यः पातयत्स्वात्मानं मन्दिरमयूरेषु परित्यक्तनिवासेषु च वनायप्रस्थितेषु पत्ररथेषु सद्यस्तनूभूते ताम्यतितमासिमन्दीभूतात्मस्नेहेषु भावमभिलषत्सु प्रदीपेषु स्फुरदरुणवल्कलप्रावृतवपुषि प्रव्रज्यामिव प्रतिपन्नेनभसि प्रभातसमयेन समुत्तीर्यमाणासु पार्थिवास्थिशकलकलास्विव कलविंककंधराधूसरासु तारकासु ॥

कलहोरणःततःशुचेत्यादौ चचाल स्नानायदेवो हर्षइतिसंबंधः शुचेवेति गृहेगिर्यादौयोज्यं स्नेहः प्रेम तैलंच अरुणोरविसारथिः लोहितं चारुणं कलविंको ग्रामचटकः

भूभृद्धातुगर्भकुंभधारिषु विविधसरःसरित्ती र्थाभिमुखेषु प्रस्थितेषुवनकरिकुलेषु शावशु चिसिक्थपटलपांडुरे पिंडइवापरपयोनिधि पुलिनपरिसरे पात्यमाने शशिनि क्रमेणनृप चितानलधूमविसरधूसरीकृततेजसीव नरप तिशोकपावकदाहकिणकलंककालीकृतचेत सीव प्रोषितसमस्तांतःपुरपुरंध्रिमुखचन्द्रचन्द्रन् दोद्वेगविद्राणवपुषीव प्रथमास्तमितरोहिणी रणरणकविमनसीव चास्तमुपगते रजनिक रे राजतीवदेवे दिवमारूढे सवितारिपरिवृत्तेरा ज्य इव रजनीप्रबंधे प्रबुद्धराजहंसमंडलप्र बोध्यमानः पंकजाकरइव चचाल देवोहर्षः ततश्चनूपुररवविराममूकमंदमांदिरहंसेषु शो काकुलकतिपयकंचुकिमात्रावशेषेषु शुद्धांते षु पतितयूथप इववनगजयूथे कक्ष्यांतरव र्त्तिनि पितृपरिजने विषादिन्युपरिरुदान्नि षादिनिच स्तंभनिषण्णोनिष्पन्दमन्दे रा जकुंजरे मंदुरापालकाक्रन्दकाघ्रते चाजिर भाजि राजवाजिनि

भूभृद्गिरिः राजाच धातवोलघून्यस्थीनि गैरिकाद्याश्च कुंभोक पाटौघटश्चकुंभःशावेधूसरेशावसंवंधिनिच सिक्थंभक्तं मधूच्छि ष्टंच ॥ ११ ॥ राजहंसास्तुचंचुचरणैर्लोहितैः सिताः राजहं साइवराजानोहंसाश्च ततश्चेत्यादावस्मिन्नस्मिन्सतिदह्यमानद् र्शिनिजंगामराजकुलादितिसंवंधःनिषादीहास्तिपकः

विश्रांतजयशब्दकलकलेचशून्येमहास्थान
मंडपे दह्यमानदृष्टिर्निर्जगाम राजकुलात्
अगाच्च सरस्वतीतीरंतस्यांस्नात्वापित्रे ददा
वुदकं अपस्नातश्चानिष्पीडितमौलिरेव प
रिधायोद्गमनीयदुगूलवाससी निः श्वास
परो निरातपत्रोनिरुत्सारणः समुपनीतेपि
सप्तौचरणाभ्यामेव नासाग्रासक्तेन रक्तता
मरसताम्रेण चक्षुषाहृदयावशेषस्यापि पितु
र्दाहशंकया शोकाग्निमिवोद्गिरन्नतांवूलस्या
पिसुचिरप्रक्षालितस्यकल्पतरुकिसलयस्येव
स्वभावपाटलस्याऽधरस्याधरपल्लवस्यप्रभ
यामांसरुधिरकवलानिव हृदयाभिघातादुद्व
मन्नुष्णनिःश्वासमोक्षैर्भवनमाजगाम राज
वल्लभास्तुभृत्याः सुहृदः सचिवाश्च तस्मिन्न
वाहनि निर्गत्य प्रियं पुत्रदारमुत्सृज्योद्वा
ष्पैर्वंधुभिर्वार्यमाणा अपि वहुनृपगुणगण
हृदयाःकेचिदात्मानं भृगुषु ववंधुः केचित्त
त्रैव तीर्थेषु तस्थुः

अपस्नातेत्यादौ भवनमाजगामेतिसंवंधःअपस्नातःमृतस्नातः मौलयः केशाः तत्स्यादुद्गमनीयंयद्धौ तयोर्वस्त्रयोर्युगं ॥२२ सप्तौहये भृगुषु प्रपातेषु

केचिदनशनैरास्तीर्णतृणकुशा व्यथमानमानसाः शुचमसमामशमयन् केचिच्छलभा इववैश्वानरंशोकावेगविवशाविविशुः केचिद्दारुणदुःखदहनदह्यमानहृदयागृहीतवाचस्तुषारशिखरिणं शरणंययुः केचिद्विंध्योपत्यकासु वनकरिकुलकरशीकरासारसिच्यमानतनवः पल्लवशयनशायिनः सन्तापमशमयन् केचित्सन्निहितानपि विषयानुत्सृज्य विमुखाः परिच्छिन्नैः पिंडकैरटवीभुवः शून्याजगृहुः केचित्पवनाशना धर्मधना धमद्धमनयो मुनयो वभूवुः केचिद्गृहीतकाषायाः कापिलं मतमधिजगिरेगिरिषु केचिदाचोटितचूडामणिषु शिरःसु शरणीकृतधूर्जटयो जटाजघटिरे अपरे परिपाटलप्रलंवचीवरांवरसंवीताः स्वाम्यनुरागमुज्ज्वलं चक्रुः अन्ये तपोवनहरिणजिह्वांचलोल्लिह्यमानमूर्त्तयो जरांययुः अपरेपुनः पाणिपल्लवप्रमृष्टैराताम्रगर्गैर्नयनपुटैः कमंडलुभिश्च वारि वहंतोगृहितव्रता मुंडा विचेरुः

कुशोत्रसंध्या पिंडकैः शरीरैः ॥ २३ ॥ धमनयो नाड्यः अनेनकार्श्यंलक्ष्यते अधिजगिरेअध्येपत आचोटितउत्खातः धूर्जटिः शिवः वारिअम्बुउदकंच

देवमपिहर्षं तदवस्थं पितृशोकविह्वलीकृतं श्रियं शाप इति महीं महापातक इति राज्यं रोगाइति भोगा न्भुजंगा इति निलयंनिरय इति बंधुर्वंधमिति जीवितमयश इति देहं द्रोह इतिकल्पतां कलंक इति आयुरपुण्यफलमिति आहारं विषमिति विषममृतामिति चंदनं दहनमिति कामंक्रकच इति हृदयस्फोटन मभ्युदय इति च मन्य मानं सर्वासु क्रियासु विमुखं पितृपितामहपरिग्रहागताश्चिरंतनाः कुलपुत्रा वंशक्रमाहितगौरवाश्च ग्राह्यगिरोगुरवः श्रुतिस्मृतीतिहासविशारदाश्च जरद्द्विजातयः श्रुताभिजनशीलशालिनो मूर्धाभिषिक्ताश्चामात्याराजानोयथावदधिगतात्मतत्त्वाश्चसंस्तुतामस्करिणः समदुःखसुखाश्च मुनयःसंसारासारत्वकथनकुशला ब्रह्मवादिनः शोकापनयननिपुणाश्च पौराणिकाः पर्यवारयन्

देवमित्यादौदेवमपिहर्षं एवंविधाजनाः पर्यवारयन्इतिसंबंधः कल्पतामरोगितां ॥ २४ ॥ ग्राह्यगिर आदेयवाचः अध्यात्ममात्मज्ञानं तत्त्वमितिकर्त्तव्यता मस्करिणः परिव्राजकाः

अस्वतंत्रीकृतश्चतैर्मनसापिनालभतशोकमनुप्र चरितुम् अनुनीयमानश्चसनाभिभिःकथंकथ मप्याहारादिकासु क्रियास्वाभिमुख्यमभजत भ्रातृगतहृदयश्चाचिंतयत् अपिनामतातस्यम रणंमहाप्रलयसदृशमिदमुपश्रुत्यार्योबाष्पजल स्नातोनगृह्णीयाद्वल्कले नाश्रयेद्वा राजर्षि राश्रमपदंनाविशेद्वापुरुषसिंहोगिरिगुहां अस्तु सलिलनिर्भरभरितनयननलिनयुगलोवा प श्येदनाथां पृथिवींप्रथमव्यसनविषमविषवि कलःस्मरेदात्मानंवा पुरुषोत्तमःअनित्यतयाज नितवैराग्योवाननिराकुर्य्यादुपसर्पंतींराज्यल क्ष्मीम् दारुणदुःखदहनप्रज्वलितदेहोवाप्रति पद्येताभिषेकं इहागतोवा राजभिरभिधीयमा नोनपराचीनतामचरेत्

सनाभयःसगोत्राःबाष्पजलस्नातोनगृह्णीयाद्वल्कलइति प्रतीपमा नता वाद्धव्या अत्रच सर्वत्र नेत्याशंकायां पुरुषोत्तमोहर्षोहरिरपि ॥ २५ ॥ पराचीनतापराङ्मुखत्वमनानुकूल्यंवा ॥

अतिपितृपक्षपाती खल्वार्यःसर्वदा तातश्लाघय
मामभिधत्तेतातहर्षकस्यचिदभूद्भविष्यतिवापुनः
कांचनतालतरुप्रांशुप्रमाणमिदमीदृक्क दिवसक
रप्रीत्यादिवसमुन्मुखविकासितंमुखमहाकमलम्
एतौचवज्रस्तंभभास्वरौभुजकांडौएतेचहासितम
दालसहलधरविभ्रमाविलासाः कोन्योमानीवि
क्रान्तोवदान्योवेतिएतानिचान्यानिचिन्तयन्द
र्शनोत्सुकहृदयोभ्रातुरागमनमुद्वीक्षमाणः कथं
कथमप्यतिष्ठदिति इतिश्रीमन्महाकविचक्रचू
डामणिवाणभट्टकृतौहर्षचरितेमहाराजमरणंना
मपञ्चमउच्छ्वासःसंपूर्णः ॥ ५ ॥

मुखकमलस्यदिवसकरप्रीतिःप्रतापित्वंवदान्योदाता ॥इतिश्रीशंक
रकविविरचिते हर्षचरितसंकेतेपंचमउच्छ्वासः ॥ ५ ॥

उोंउाच्चित्योच्चित्यभुविप्रहितनिगूढात्मदूतनी
तानां विजिगीषुरिवकृतांतः शूराणांसंग्रहं कुरु
ते १ विस्रब्धघातदोषःस्ववधायखलस्यवीरको
पकरः नवतरुभंगध्वनिरिव हारिनिद्रातस्करः
कारिणः२ अथप्रथमप्रेतपिंडभुजिभुक्तेद्विजन्मनि
गतेषूद्वेजनीयेष्वशौचदिवसेषु चक्षुर्दाहदायिनि
दीयमानेद्विजेभ्यः शयनासनचामरातपत्रामत्र
पत्रशस्त्रादिके नृपातिकटोपकरणकलापेनीतेषु
तीर्थस्थानान्निसहजनहृदयैः कीकसेषु काल्पित
शोकशल्येषु सुधानिचयाचिते

उच्चित्येति कृतांतोंतकः शूराणांसंग्रहंकुरुते किंकृत्वोच्चित्योच्चित्ययथा
प्रधानंप्रहितानिगूढाःस्वभावप्रच्छन्नायमदूतायमकिंकरास्तैर्नीतानां
विजिगीषुर्यथान्विष्यान्विष्यात्मदूतानां शूराणांसंग्रहंकुरुते अनेनो
च्छ्वासार्थःसंगृहीतः तथाहिकृतांतोविनाशोयेनसशशांकनामागौडा
धिपतिः शूराणांराज्यवर्धनानुचराणांप्रधानराजपुत्राणांतत्सहितानां
संग्रहमकरोत् कथमुच्चित्योच्चित्यान्विष्यान्विष्यकीदृशानांप्रहितनि
गूढात्मदूतानां तथाहितेनशशांकेनविश्वासार्थंदूतमुखेनकन्याप्रदा
नमुक्त्वा प्रलोभितोराज्यवर्धनः स्वगेहेसानुचरोभुंजानएवछद्मनाव्या
पादितः ॥ १ ॥ अतएवचाह विस्रब्धेत्यादि श्लोकगौडापसदः
शशांकोवीरश्चहर्षः ॥ २ ॥ अथप्रथमेत्यादावस्मिन्नस्मिन्सति देवो
हर्षोमौलेन महाजनेनात्मानंसकलं वेष्ट्यमानमद्राक्षीदितिसंबंधः
भोजनंभुक्तंतदस्यास्तीतिअर्शआदिभ्योऽच् २६ अमत्राणि पा
त्राणिपत्राणिवाहनानि कीकसेष्वास्थिषु

चिताचैत्यचिह्नेवनायविसर्जिते महाजिजिति राजगजेन्द्रेक्रमेणच मन्देष्वाक्रन्देषु विरली भवत्सुचविलापेषुविश्राम्यत्यस्त्रुणिशिथिली भवत्सुश्वसितेष्वरूपष्टेषु हाकष्टेषु उत्सार्यमा णासुच व्यसनशय्यासु उपदेशश्रवणक्षमेषु श्रोत्रेषु अनुरोधावधानयोग्येषु हृदयेषु गण नीयेषु नृपगणेषु प्रदेशवृत्तितामाश्रयति शो के कृत्तेषु कविरुदितकेषु जातेचस्वप्नावशे षदर्शने हृदयावशेषस्थाने चित्रावशेषाकृतौ काव्यावशेषनाम्नि नरनाथे कदाचिदुत्सृष्टव्या पारः पुंजीभूतवृद्धवन्धुवर्गाग्रेसरेणाऽवनतमू कमुखेनमहाजनेनमौलेनाकालेश्रात्मानंवेष्टय मानमद्राक्षीत् दृष्ट्वाचाकरोन्मनासि किमन्यदा यमागतमावेदयत्ययंशोकपराभूतोलोकोत्कर इतिवेपमानहृदयश्च पप्रच्छ प्रविशंतमधिकृत रप्रचारमन्यतमंपुरुषम् ॥

चितायांचैत्यचिह्नस्थनाकारं चिह्नं श्मशानदेवगृहंवा कविरुदि तकेषु दुःखोद्दीपनकालेषु लोकोत्करोजनसमूहः ॥ २७ ॥

अंगकथयकिमार्यः प्राप्तइति समंदमब्रवीत् देवयथादिशासि द्वारीति श्रुत्वाचसौदर्यस्नेह निहितानिरतिशयमन्युमृदूकृतमनाः कथम पिनववाम्बवाष्पवारिप्रवाहोत्पीडेन सहजी वितमूअनंतरंचद्वारपालप्रमुक्तेन प्रथमप्रविष्टे न परिजनेनेवाक्रन्देन कथ्यमानं दूरद्रुताग मनमुषितवाहुल्येनविच्छिन्नच्छत्रधारेणलंवि तांवरवाहिना भ्रष्टभृंगारग्राहिणाच्युताचमन धारिणा ताम्यत्तांबूलिकेनस्वजलखड्गग्राहि णाकतिपयप्रकाशदासेरकप्रायेण वहुवासरां तरितस्नानभोजनशयनश्यामक्षामवपुषापरि जनेन परिवृतमविरलमार्गधूलिधूसरितश रीरतया शरणीकृतमिवाशरणया क्रमागत या वसुंधरया हूननिर्जयसमरशरव्रणवद्धप ट्टकै दीर्घधवलैः समासन्नराजलक्ष्मीकटाक्ष पातैरिव शवलीकृतकायं अवनिपतिप्राणपरि त्राणार्थमिव शोकहुतभुजि ॥

मन्युः शोकः अनंतरमित्यादौ प्रविशंतंज्येष्ठंभ्रातरमद्राक्षीदिति संवंधः परिजनेनापि प्रथमप्रविष्टेन द्वारपालप्रमुक्तेनच आचम नपतद्ग्रहः प्रकाशा अतुरंगत्वान्निश्रीयमानाः दासेरकाः दासी सुताः ॥

हुतमांसैरतिकृशैरवयवै रावेद्यमानदुःखभारं अपगतचूडामणिनि मलिनाकुलकुंतले शेखरशून्ये शिरसि शुचमारूढां मूर्त्तिमतीमिव दधानं आतपगलितस्वेदराजिनारुदतेवपितृपादपतनोत्कंठितेन ललाटपट्टेन लक्ष्यमाणं प्रथीयसा वाष्पपयःप्रवाहेनाऽभिमतपतिमरणमूर्च्छितामिव महीमनवरतंसिंचंतं अनंतसंततास्रुप्रवाहनिपतननिम्नीकृताविव दुःखक्षामौकपोलावुद्वहंतं अत्युष्णमुखमारुतमार्गगतेनद्रवतेव गलिततांबूलरागेणाधरविंबेनोपलक्षितं पवित्रिकामात्रावशेषेन्द्रनीलिकांशुश्यामायमानमचिरश्रुतपितृमरणमहाशोकाग्निदग्धमिव श्रवणप्रदेशमुद्वहंतं अस्फुटाभिव्यक्तव्यंजनेनाऽप्यधोमुखस्तिमितनयननीलतारकमयूखमालाखचितेन शोकप्ररूढश्मश्रुश्यामलेनेव मुखशशिना लक्ष्यमाणं केसरिणमिव महाभूभृद्विनिपातविव्हलनिरवलंवनम् ॥

शेखर आपीडः २८ अधरविंबेनापतित्थंभूतलक्षणे तृतीया अभिव्यंजनं श्मश्रु भूभृद्राजा गिरिश्च ॥

दिवसमिव तेजः पतिपतनपरिम्लानाश्रियं श्यामीभूतंनन्दनामिवभग्नकल्पपादपं विच्छायं दिग्भागमिवप्रोषितदिक्कुंजरशून्यंगिरिमिवगुरुवज्रपातदारितं कंपमानंक्रीतामिवक्राशिम्नाकिंकरीकृतमिवकारुण्येनदासीकृतमिवदौर्मनस्येनशिष्यीकृतामिवप्रोचितव्येन आधीकृतमिवाधिना मूकीकृतामिवमौनेन पिष्टमिव पीडया स्विन्नमिवसंतापेन उच्चित्तमिवचिंतयालुप्तमिवविलापेनधृतमिववैराग्येण प्रत्याख्यातमिवप्रतिसंख्यानेन अवज्ञातमिवप्रज्ञया दूरीकृतमिव दुरभिभवत्वेन अवोध्येनवृद्धवुद्धीनां असाध्येन साधुभाषितानां अगम्येनगुरुगिरामशक्येनशास्त्रशक्तीनामपथ्येन प्रज्ञाप्रयत्नाना मगोचरेण सुहृदनुरोधानाम विषयेन विषयोपभोगानामभूमिभूतेनकालक्रमोपचयानां शोकेनकवलीकृतं ज्येष्ठभ्रातरमपश्यत् आवेगोद्गतकृत्स्नस्नेहोत्कलिका कलापोत्क्षिप्यमानकायइवच परवशःसमुदगात् ॥

तेजः पतिर्नृपतिः सूर्यश्च श्यामः कृष्णः श्यामाच रात्रिः कल्पपादपोराजापि छायाकांतिरातपाभावश्च २९ प्रत्याख्यातं त्यक्तं प्रतिसंख्यानेन विवेककुशलया वुद्ध्या कलितं धृतं ३० ॥

अथदूरादेवदृष्ट्वादेवोराज्यवर्धनश्चिरकाल कल्पितं वाष्पवेगं मुमुक्षुःसुदूरप्रसारितेन संकल्पयन्निवसर्वदुःखानि दीर्घेणदोर्दंडद्वयेन गृहीत्वाकंठेमुक्तकंठं पुनःपतितक्षौमेक्षामिव क्षसिपुनः कंठे पुनःस्कंधभागे पुनःकपोलोदरे निधायतथातथारुरोद यथासंबंधनानीवोदपाटयन्त हृदयानि स्मृतनृपतिनाराजवल्लभेनापि प्रतिशब्दानिभेननिर्भरमिवारुद्यत सुचिराच्चकथंकथमपिनिर्वृष्टनयनजलः पर्जन्यइवशरदि स्वयमेवोपशशामउपविष्टश्चपरिजनोपनीतेनतोयेनतरल्करनखमयूखपुंजतया महाजलप्लवजायमानेफनेलखमिवपुनःपुनःप्रमृष्टमपि पक्ष्माग्रसंगलद्बिन्दुवृन्दमन्दोन्मेषमुषितदर्शनं कथमपिचक्षुरक्षालयत् तांबूलिकोपस्थापितेनच वाससा चन्द्रातपशकलेने वोष्णोष्णवाष्पदग्धं वदनमुन्ममार्ज तूष्णीमेवच स्थिरं स्थित्वा उत्थाय स्नानभूमिमगात् ॥

संबंधनंलाभं पर्जन्यइन्द्रः पर्जन्यौरसदन्नेन्द्रावित्युक्तेः सहि मेघान्वर्षयति ॥

तस्यां च स्थित्वा विभूषं वित्रस्तव्यस्तकुंतलं मौलिमनादरान्निष्पीडयसावशेषमन्युस्फुरितेनाजिजीविषन्निव जलधौतसुभगमात्मानमपि चुचुंबिषतेवाधरेण क्षालितस्य चक्षुषः श्वेतिम्ना च शारदशशिकरविकासितविषदकुमुदवनदलावलिवलिविक्षेपैरिव दिग्देवतार्चनकमं कुर्वाणः चतुःशालवितर्दिकायां नीचापाश्रयविनिहितोपवर्हायां पर्यंकिकायां जोषमस्थात् देवोऽपि हर्षस्तथैव स्नात्वा धरणितलनिहितकुथाप्रसारितमूर्त्तिरदूर एवास्य तूष्णीमेव समवातिष्ठत दृष्ट्वा दृष्ट्वा दूयमानमानसमग्रजन्मानं समस्फुटदिवास्य सहस्रधा हृदयम् औरसदर्शनंहि यौवनं शोकस्य लोकस्य च नरपतिमरणादपि दारुणः संबभूव दिवसः सच प्रत्यग्रत्वष्टृटंकनष्टतनुरिव मध्यहलरुधिरमांसच्छविः ॥

वित्रस्ताऊर्ध्वंक्षिप्ता निर्गता इत्यन्ये व्यस्ताविक्षिप्ताः कुंतलाःकेशाः उक्तंचचिकुरःकुंतलोवालः कचःकेशःशिरोरुहइति चूडाकिरीटंकेशाश्वसंयतामौलयस्त्रय इत्युक्तमत्रतूपचारान्मौलिशब्देन शिरउच्यते वितर्दिका वेदिका ३१ उपवर्हणमुपधानं जोषंतूष्णीं कुथोवर्णकंवलः औरसोभ्राता त्वष्टाविश्वकर्मा तस्य टंकःछेदनशस्त्रं तेनतनूकृता तनुर्यस्यसः पुरास्वभर्तुंतेजोविसरांद्विम्नया सूर्यभार्ययावमानितः सूर्यः त्वष्टारमवोचममतेजस्तनुकूरु तेनाप्यारोप्यचक्रभ्रमंटंकेनासौतष्टइतिवार्त्ता

अपरपारावारपयसि ममज्ज मंजिष्ठारुणो रुणसारथिः मुकुलायमानकमलिनीकोशविकलं चकणे चंचरीककुलं कमलसरसि सविधविरहव्याधिविधुरवधूवाध्यमानं ववंध वंधाविव विवुद्धवंधूकभासि भास्वति सास्त्रांदिशं चक्रवाकचक्रवालं संचरंत्याः समधुकररवंकैरवाकरं कलहंसरमणीरमणीयं माणिक्यकांचीकिंकिणीजाल मिवाऽऽण श्रियःप्रकटकलंक मुदयमानं विशंकटविषाणोत्कीर्णपंकसंकरशंकरशकुरशक्करककुदकूटसंकाश मकाशता काशे शशांकमंडलम् अस्यांच वेलाया मनतिक्रमणवचनै रुपसृत्य प्रधानसामन्तैर्विज्ञाप्यमानः कथं कथ मप्य भुक्त प्रभातायां च शर्वर्यां सर्वेषु प्रविष्टेषु राजसु समीपस्थितं हर्षदेव मुवाच तात भूमि रसि गुरुनियोगानां शैशव एवाग्राहि गुणवत्पताकेवभवता तातस्यचित्तवृत्तिः ॥ ॥

अपरः पश्चिमः पारावारःसमुद्रः चकणेजुगुंज चंचरीकाभ्रमराः कादंबः कलहंसः स्यात् आणचुकूज कैरवाकरंसंचरंत्याः श्रियः किंकिणीजालमिव चुकूजेत्युत्प्रेक्षा २२ विशंकटो विशालः शकुरोदांतः भातुंप्रवृत्ताप्रभातातस्यां नियोगआदेशः

यतो भवन्त मेवं विधं विधेयं विधिविधाने।प
ननतनैर्घृण्य मिदं किम।पि विभणिषतिमेहद
यं ना वलंवनीया वालभावसुलभा प्रेमविलो
मा वामता वैधेय इव माकृथाः प्रत्यूह मी।हि
ते स्मिन् नखलु नजाना।सि लोकवृत्तम् लोक
त्रयत्रातरि मांधातरि मृते किं कृतं पुरुकुत्सेन
भूलतादिष्टाष्टादशद्वीपे दिलीपे वारघुणाम
हासुरसमरमध्याध्यासितत्रिदशरथे दशरथे
वारामेण गोष्पदी।कृतचतुरुदन्वदन्ते दुःष
न्ते वाभरतेन तिष्ठ तावत्ते तातेनैव शतसम
धिकाध्वरधूमविसरधूसरितवासववया।सि सु
गृहीतना।म्नि तत्रभवतिपरासुतांगतेपिता।रकिं
नाकारि राज्यंयंचकिल शोकः समभिभवति
तं कापुरुष माचक्षते शास्त्रविदः स्त्रियो हि
विषयाः शुचां किं करोमि स्वभावस्य सेयंका
पुरुषतावा स्त्रैणं वा यदेव मस्मादपिपितृशो
कहुतभुजो जातो स्मि ममहि भूभृतिपर्यस्ते
निरवशेषतःप्रस्रवणानी व स्रुतान्यस्रूणि ॥

विधेयमायत्तं विभणिषति कथयितुमिच्छति विलोमा अनुकूला
वामता प्रतिकूलता वैधेयोमूर्खः धूमेनमलिनीक्रियते ॥ १३ ॥
स्त्रैणं स्त्रीत्वे परासुतामरणं ममहीत्यादिवाक्यद्वयेश्लेषोऽध्याहर्त्त
यः प्रस्रवणानिनिर्झराः ॥ ॥

अस्तमितेमहतितेजसिअंधकारीभूतदशाश स्य प्रणष्टःप्रज्ञालोकः प्रज्वलितं हृदयमात्म दाहभं तइवस्वप्नेपिनोपसर्पति विवेकोवलीयसा संतापेन जातुषमिव विलीनमाखिलं धैर्यं पदेपदे दिग्धशेपाहतेव हरिणी मुह्यति मतिः पुरुषद्वेषिणी भ्रमति परिहरंती स्मृतिःअंबेव तातेनैव सह गताधृतिः वार्धुषिक प्रयुक्तानि धनानीव प्रतिदिवसं वर्धंते दुःखानिशोकानलधूमसंभारसंभृतांभोधरभारितमिव वर्षति नयनं वारिधाराविसरं शरीरं सर्वः पंचजनः पंचत्व मुपयाति वितथमेतद्वदति वालो लोकः तातो हुताशनता मिव केवलमापन्नः तदेव मिदमसांपरायिक मिव हृदय मवष्टभ्य व्युत्थितः शोकोदुर्निवारः ॥

जतुनोविकारोजातुषं त्रपुजतुनोःशुकू पदेशब्देक्रमेच दिग्धोविषलिप्तः शरः उक्तंच वाणेविषाक्तेदिग्धालिप्तकाविति मेरुमहीधरवत् रोपशब्दः प्रशंसार्थः वृद्ध्याजीवतिवार्धुषिकोवणिक्वृद्धेर्वृधुषीभावः पंचजनःपंचमहाभूतानि मनुष्यश्च उक्तंच स्युः पुमांसः पंचजनाः पुरुषाःपूरुषानरा इति पंचत्वंमरणं वितथमिति पंचसुपृथिव्यादिषुलयात्पुरुषस्ताद्रूप्यं प्रतिपद्यत इत्यलीकं यतस्तत इत्याद्यग्निमात्रप्रतिवद्धकार्यदर्शनादित्यर्थः आपत्कष्टंक्लेशइत्यर्थः संपरायःसंग्रामःतस्मैयत्रभवति तदसांपरायिकं सभयंयः किलभीतःसकथंव्युत्थितंनिवारयेत् ॥ १४ ॥

वाडवइववारिराशिं पविरिवपर्वतं क्षयइवक्ष पाकरं राहुरिवरविंदहतिदारयतितनूकरोति कवलयति नशक्नोति मेहृदयंतादृशसुमेरुक ल्पस्य महापुरुषस्य विनिपातमस्रुभिरवके वलमतिवाहयितुं राज्ये विषइवचकोरस्यमेवि रक्तंचक्षुः बहुमृतपटावगुंठनारंजितरंगां जनं गमानामिव वंशवाह्यामनार्यां श्रियंत्यक्तु मभिलषतिमेमनःक्षणमपि दग्धगृहे शकु निरिवनपारयामिस्थातुं सोहमिच्छामिमन सि वाससीव सुलग्नंस्नेहमलमिदममलैः शि खरिशिखरप्रस्रवणैः स्वच्छस्रोतोंबुभिः क्षा लयितुमाश्रमपदेयतस्त्वमंतरितयौवनसुखा मनाभिमतामपि जरामिव पुनराज्ञया गुरोर्गृ हाण मे राज्यार्चितां त्यक्तसकलबालक्रीडेन हरिणवदीयतामुरोलक्ष्म्यैपरित्यक्तंमया शस्त्र मित्यभिधायचखड्गग्राहिणोहस्तादादायनि जं निस्त्रिंशमुत्ससर्ज धरण्यां

वाडवइत्यादयोदहतीत्यादियथाक्रमंयोज्यः पवित्रर्वज्रः कल्पतेऽ स्मादभीष्टार्थइतिकल्पः चकोरः ककचः तस्यविषेदृष्टेअक्षिणी विरज्येतेमृतस्यपटः अवगुंठनंमस्तकाच्छादनंरंगः समाजःजनं गमश्चंडालः उक्तंचचंडालप्लवमातंगादिवाकीर्तिजनंगमाः निषा दश्वपचावंतवासिचंडालपुक्कसाइति वंशाभिजननं प्रबंधोवेणु श्चवाह्यावहिर्भूताग्रहणीयाचशकुनिर्गृहचटिकागृहशारिकेत्यन्ये स्नेहः प्रेम तैलादिश्च यतस्त्वमिति

अथ तच्छ्रुत्वा निशितशिखेन शूलेनैवाह
तःप्रविदीर्णतरहृदयो देवो हर्षःसमचिन्तयत्
किंनु खलु मामंतरेणार्थः केनचिदसहिष्णुना
किंचिद्व्याहितः कुपितः स्यात् उत्तान
पादिशापरीक्षितुकामो मांउतशोकजन्मा वेन
सः समाक्षेपोऽयमस्य आहोस्विदार्यएवायं
नभवति किंवार्येणान्यदेवाऽभिहितं अन्यदेवा
श्रावि मया शोकशून्येन श्रवणेन्द्रियेण
आर्थस्य चान्यद्विवक्षितं अन्यदापतितं मुखेन
सकलवंशविनाशाय निपातनोपायोयंविधेः
मम वा निखिलपुण्यपरिक्षयोपक्षेपः कर्म
णामननुकूलसमग्रचक्रवालविलसितं अथ
वा तातविनाशनिःशंककालेकालक्रीडितं
येनायंकिंचिदिवयत्किंचनकारिणं मामपुण्य
भूति वंशसंभूतानिव॥

पुरा ययातिः शुक्रदुहितरं देवयानीमवमन्य देवयानीदासीभूतां
शर्मिष्ठां असकृन्मिथ्याकामयानेन शुक्रेण जरां यास्यसीति शप्तः
प्राप्तजरादुःखो विषयलंपटोऽन्यपुत्रैरगृहीतां जरां पूरौ स्वपुत्रकृ
ताभ्युपगमे संक्रमय्य यौवनमभूदिति ज्ञातां जरां यंतारेतरां वनतुला
अभिनताच गुरोर्ययातेरपि मामंतरेण मां विना मत्पुत्राणां
तदर्थं ॥ १५ ॥

ऋतांततनयमिवजनारमानुजामिव अभक्तमि वादृष्टदोषमपि श्रोत्रियामिव सुरापाने सद्गृ स्यामिवरवामिद्रोहे सज्जनमिव नीचोपसर्पणे सुकलत्रामिव स्यामिचारिअतिदुष्करंकर्माणिस मादिदवान् तदेतत्तादनुरूपंयच्छौर्योन्माद मदिरोन्मत्तस्मरतसामन्तमंडलसमुद्रमथन मन्दिरेताद्दाशिापितरिमृते तपोवनं वा गम्यते वल्कलानिवागृह्यंते तपांसिवासेव्यन्ते यातु मयाराज्याज्ञा सा दग्धोपि दाहकारिणीमस्य वग्रहग्लापितेधन्वनीवांगारवृष्टिः तदसदृश मिदमार्थस्य यद्यपिचाविभुरनाभिमानः द्विजा तिरनेषणः मुनिररोषणः कपिरचपलः कवि रमत्सरः वणिगतस्करः प्रियजानिरकुहनः साधुरदरिद्रः द्रविणवानखलःकीनाशोनाक्षि गतः मृगयुरहिंस्रः पाराशरीब्राह्मण्यः सेव कः सुखी

श्रोत्रियोवेदपारगः धन्वंनिमरौ धन्वन्दापिदग्धे राज्याज्ञापिदाह कारिणी२ द्द्अनेषणोनिरभिलाषः प्रियाजायायस्यजायायानिङ् कुहना ईर्ष्यां शंकावा कीनाशः क्षुद्रः उक्तंच कृतांतपुंसि की नाशःक्षुद्रकार्षिकयोस्त्रिषु अनक्षिगतः प्रियः मृगयुर्व्याधः पाराशरीभिक्षुः ॥

कितवः कृतज्ञः गोप्यः प्रियवाक्अमात्यःस त्यवादीराजसूनुरदुर्विनीतश्च जगतिदुर्लभः तथापिममार्यएवाचार्यः कोपिनामतद्विधेपत ति राजगंधकुंजरे जनयितरि चेदृशेविफली कृतविशालशिलास्तंभोरुभुजे भूपजितिभ्रा तरित्यक्तराज्ये ज्यायसिनववयसितपोवनंग च्छतिसकललोकलोचनजलपातापवित्रंमृद्गो लकंवसुधाभिधानं धनमदखेलनिखिलखल मुखविकारलक्षणाख्यायमाननीचाचरणांश्री संज्ञिकां सुभटकुटुंबकर्मकुंभदासीं चंडालो पि कामयेतकथमिव संभावितमत्यंतमनुचितमि दमार्येणकिमुपलक्षितमनवदातमिदं मयिकिं वास्यचेतसश्च्युतः सौमित्रिः विस्मृतावृको दरप्रभृतयः अनपेक्षितभक्तजनस्वार्थनिष्पा दननिष्ठुरानासीदियमार्यस्येदृशीप्रभविष्णु ता अपिचार्ये तपोवनगतेजिजीविषुः कोमन सापि महीं ध्यायेत् ॥

कितवोद्यूतकृत् गोप्योदासःराजसूनुरदुर्विनीतश्चेत्येतत्प्रस्तावे न तदुक्तं खेलाः सविलासाः अनवदातमनिर्मलंसौमित्रिर्लक्ष्म णः वृकोदरोभीमसेनः ३७ ॥

कुलिशशिखरखरनखरप्रचयप्रचंड चपेटापा
टितमत्तमातंगोत्तमांगमदच्छटाच्छुरित केसर
भारभास्वरमुखे केसरिणि वनविहारायविनि
र्गते निवासं गिरिगुहां कःपातिपृष्ठतः प्रताप
सहाया हि सत्त्ववन्तः कश्चपलां लक्ष्मीं प्र
त्य नुरोधोऽथ मार्थस्य यदीयमपिन चीरान्त
रितकुचा कुशकुसुमसमित्पलाशपूलिकां वहं
ती तत्रैवोपवने वनमृगीव नीयते जरा जालि
नीकिंवा ममानेन वृथा वहुधा विकल्पितेन तू
ष्णीमिवार्यमनुगमिष्यामि गुरुवचनातिक्रमकृ
तंच किल्विषमेतत्तपोवने तपएवापास्यतीत्य
वधार्य मनसा प्रथमतरं गतस्तपोवन मधो
मुख स्तूष्णीमवातिष्ठत अत्रांतरे पूर्वादिष्टैर्
वरुदता वस्त्रकर्मांतिकेन समुपस्थापितेषु व
ल्कलेषु निर्दयकरतलताडनभियेव कांपिग
तहृदये रटति राजस्त्रैणे तारमब्रह्मण्यमूर्ध्वदो
ष्णिविरुदति विप्रजने पादप्रणतिपरे फूत्कु
र्वतिपौरवृन्दे विद्रातिविद्रुतचेतसि चिरन्तने
परिजने परिजनावलंबिते गते वर्षीयसि

प्रचयः समूहः चपेटा करतलाघातः वनमृग्यपि कुशादिवह
ति जालिनी मायिनी अत्रेत्यादौ संवादकोनाम सदस्यात्मान
मपातयदितिसंबंधः कर्मांतिकोधिकृतः करतलताडनेति हृदये
वा स्त्रैणेस्त्रीसमूहे अब्रह्मण्यमवध्योक्तौ फूत्करणमुद्दामरोदन
ध्वनिः विद्रातिः कुत्सितः ३८ गते प्राप्ते वर्षीयसि वृद्धतरे ॥

वेपमानवपुषि पर्याकुलवाससि शोकगद्गद वचसि गलितनयनपयसि निवारणोद्यत मनसि विशति बंधुवर्गेनिराशेषुनखलिखि तमणिकुट्टिमेष्ववाङ्मुखेषु निःश्वसत्सुसामं तेषु सबालवृद्धासु तपोवनायप्रस्थितासु स र्वासु प्रजासुसहसैव प्रविश्य शोकविक्लवःप्र क्षरितनयनसलिलोराज्यश्रियः परिचारकः संवादकोनाम प्रज्ञाततमोविमुक्ताक्रन्दः स दस्यात्मानमपातयत् अथसंभ्रांताभ्रात्रासह स्वयंदेवोराज्यवर्धनस्तं पर्यपृच्छत्भद्रभ णभणकिमस्मद्व्यसनव्यवसायवर्धनवद्धधृति रवनिपतिमरण मुदितमतिरधृतिकरमपर मधिकतरमितःसमुपनयति विधिरिति सक थंकथमप्यकथयत् पिशाचानामिव नीचा त्मनां चरितानि छिद्रप्रहारीणि प्रायशोभवं तियतोयस्मिन्नहन्यवनिपतिरुपरतइत्यभू द्वार्ता तस्मिन्नेव देवोग्रहवर्माढुरात्मनामाल वराजेन जीवलोकमात्मनःसुकृतेन सह त्या जितः ॥

भर्तृदारिकापि राज्यश्रीः कालायसनिगड युगलचुंवितचरणा चौरांगनेव संयता कन्य कुब्जे कारायां निक्षिप्ता किंवदंतीच यथाकि ला नायकं साधनं मत्वा जिघृक्षुः सुदुर्मतिरे ता मपि भुव माजिगमिषतीति विज्ञापिते प्र भुः प्रभवतीति ततश्च तादृशमनुपेक्षणीयम संभावितमाकस्मिकमुपारि व्यतिकरमाक र्ण्य। श्रुतपूर्वत्वात्परिभवस्य परपरिभवास हिष्णुतयास्वभावस्य दर्पवहुलतयाच नवयौ वनस्यवीरक्षेत्रसंभवत्वाच्च जन्मनःकृपाभूमि भूतायाश्चस्वसुःस्नेहात्सतादृशोपि वद्धमूलो प्यत्यंतगुरुरेकपदएवास्थननाशशोकावेशः विवेशचसहसा केसरीव गिरिगुहागृहं गंभी रंहृदयंभयंकरःकोपावेगः केशिनिसूदनशं काकुलकालियकुलभंगुरभ्रूभंगतरंगिणिश्या मायमाना यमस्वसेव प्रथीयसि ललाट पट्टे भीषणा भ्रुकुटिरुदभिद्यत

कारायांवंधने ३१ किंवदंती लोकवार्त्ता केशिनिसूदनःकृष्णः यमस्वसायमुना सापि कालियकुलासतरंगा श्यामायमानाच

दर्पात्परामृषन्नखकिरणसलिलनिर्झरः सम
रभारसंभावनाभिषेकमिव चकार दिङ्नाग
कुंभकूटविकटस्य बाहुशिखरकोशस्य वामः
पाणिपल्लवः संगलत्स्वेदसलिलपूरितोदरो
निर्मलमालवोन्मूलनाय गृहीतकेश इव दुर्म
दश्रीकचग्रहोत्कंठयेव च कंपमानः पुनरपि स
मुत्ससर्प भीषणं कृपाणं पाणिरपरः शस्त्रग्रह
णमुदितराजलक्ष्मीक्रियमाणदिष्टवृद्धिविधुत
सिंदूरधूलिरिव कपिलः कपोलयोरदृश्यत
रोषरागः समासन्नसकलमहीपालचूडा
मणिचक्राक्रमणजाताहंकार इव च समारुरो
ह वाममूरुदंडमुत्तानितश्चरणो दक्षिणः नि
ष्ठुरांगुष्ठकषणनिष्ठ्यूतधूमलेखो निर्वीरोर्वीकर
णाय विमुक्तशिख इव लिलेख मणिकुट्टिम
मितरः पादपद्मः दर्पस्फुटितसरसव्रणोच्छलि
तरुधिरसटावसेकैः शोकविषप्रसुप्तं प्रबोध
यन्निव पराक्रममनुजमवादीत् ॥

परामृषन्नित्यर्थाद्बाहुशिखरमेव कोशोदिव्यं उक्तंच कोशोऽस्त्रीकु
ड्मले खड्गपिधानेर्थौघदिव्ययोरिति कोशकारः पाणिःसलिलपू
रितोदरो भवति कचाः केशाः यथा कामी कामिनीकचग्रहणं प्रत्यु
त्कंठते सकम्पतस्वेदवांश्च भवति ४० दिष्टमानंदः विमुक्तेति धी
राः किल रोषणेक थासंयमनमपरिभवप्रतीकारं नकुर्वते ॥

आयुष्मन्निदंराजकुलं अमीबांधवाः परिजनो यं इयं भूमिः भूपतिभुजपरिघपालिताश्चैताः प्रजाःगतोहमद्यैवमालवराजकुलप्रलयायइद मेव तावद्वल्कलग्रहणं इदमेवतपःशोकापग मोपायश्चायं यदत्यंताविनीतारिनिग्रहः सोयं कुरंगकैःकचग्रहःकेसरिणःभेकैःकरपातः का लसर्पस्यवत्सकैर्वंदिग्रहोव्याघ्रस्य अलगर्दैर्ग लग्रहोगरुडस्यदारुभिर्दाहादेशोदहनस्य ति मिरैस्तिरस्कारोरवेःयोमालवैः परिभवःपुष्प भूतिवंशस्य अंतरितस्तातोमे महीयसा मन्यु ना तिष्ठंतुसर्वएव राजानः करिणश्च त्वयैवसा र्धं अयमेकोभंडिरयुतमात्रेण तुरंगमानामनु यातुमामित्यभिधाय चानंतरमेव प्रयाणपटह मादिदेश तं च तथा समादिशंतमाकर्ण्यजामि जामातृवृत्तांतविज्ञानप्रकोपाध्मानदूयमानेमन सिनिर्वर्त्तनादेशेनदूरप्ररूढप्रणयपीडइवप्रोवा चदेवोहर्षःकमिवदोषंपश्यत्यार्योममानुगमने न यदि वालइति नितरां तर्हिनत्याज्योस्मि रक्षणीयइति

भेकोमंडूकः करपातश्चपेटादानं अलगर्दैर्जलसर्पैः ॥ ४१ ॥
जामिभगिनी ॥

भवद्भुजपंजरं रक्षास्थानं अशक्तइति कपरी
क्षितोस्मि संवर्धनीय इति वियोगस्तनूकरोति
अक्लेशसहइति स्त्रीपक्षे निक्षिप्तोस्मि सुखमनु
भवत्वितित्वयैवसहतस्प्रयातिमहानध्वनः क्ले
शइति विरहोविषह्यतरः कलत्रंरक्षत्वितिश्री
स्तेनिस्त्रिंशेधिवसतिपृष्ठतस्तिष्ठत्विततिष्ठत्ये
वप्रतापः राजकमनधिष्ठितामिति तत्सुवद्धमार्य
गुणैःनवाह्यःसहायोमहत इति व्यतिरिक्तमिव
मांगणयति प्रलघुपरिकरःप्रयामीतिपादरज
सिकोतिभारःद्वयोर्गमनमसांप्रतामिति मामनु
गृहाणगमनाज्ञया कातरेभ्रातृस्नेह इति सद्द
शोदोषः काचेयमात्मंभरिता भुजस्य ते यदे
काकी क्षीरोदफेणपटलपांडुरममृतामिव यशः
पिपासति अवंचितपूर्वोस्मिविप्रप्रसादेषुतत्प्र
सीदत्वार्यःनयतुमामपि इत्यभिधाय क्षितित
लविनिहितमौलिःपादयोरपतत् तमुत्थाप्य
तदग्रजोजगादतातकिमेवमतिमहारंभपरिग्र
हणेन गरिमाणमारोप्यते बलादतिलघीया
नप्यहितः हारिणार्थमतिह्रेपणः सिंहसंभारः

नवाह्योतिकिलयएवत्वंसएवाहमिति कोसौ सहायोस्य आत्मंभारि
ता स्वासुत्रपता ॥ ४२ ॥ अतिह्रेपणोत्यन्तलज्जाकारी ॥

तृणानामुपरि कर्तिकवचयंत्याशुशुक्षणयः अपिचतवाष्टादशद्वीपाष्टमंगलकमालिनी मेदिनी अस्त्येव विक्रमस्य विषयः नहि कुलशैलनिवहवाहिनो वायवः सन्नह्यंत्यतितरले तूलराशौ नसुमेरुवप्रप्रणयप्रगल्भा वा दिक्करिणः परिणमंत्यणीयसि वल्मीके अहीष्यासि सकलपृथ्वीपतिप्रलयोत्पातमहाधूमकेतुं मांधातेव चारुचामीकरपत्रलतालंकारं ककायं कार्मुकं ककुभां विजये ममतु दुर्निवारायामस्यां विपक्षक्षपणक्षुभितायां क्षम्यतामयमेकाकिनः कोपकवलएकस्तिष्ठतु भवान् इत्यभिधाय च तस्मिन्नेव वासरे निर्जगामाभ्यामित्रं अथ तथागते भ्रातरि उपरते च पितरि प्रोषितजीविते च जामातरि संयतायां च स्वसरि स्वयूथभ्रष्ट इव वन्यः करी देवो हर्षः कथं कथमप्येकाकीकालं तमनैषीत् अतिक्रांतेषु वहुवासरेषु कदाचित्तथैव भ्रातृगमनदुःखासिकया दत्तप्रजागरः त्रिभागशेषायां त्रियामायां यामिकेन गीयमानामिमामार्यामशुश्राव

कवचयंति सन्नह्यंति आशुशुक्षणयोऽग्नयः अष्टमंगलकं कंकणमित्यन्ये तूलं कार्पासः परिणमंति तटाघातक्रीडां न कुर्वंति अणीयस्यतिस्वल्पे वल्मीके पिपीलिकोत्खातमृत्स्थले ॥४३॥ अभ्यमित्रं शत्रुसंमुखं यामिकेन जागरानियुक्तेन ॥

द्वीपोपगतगुणमपिसमुपार्जितरत्नराशिसार
मपि पोतंपवनइवविधिःपुरुषमकांडेनिपातय
तितांचश्रुत्वासुतरामनित्यताभावनया दूयमा
नहृदयः प्रक्षीणभूयिष्ठायांक्षपायांक्षणमिवनि
द्रामलभतस्वप्नेचाभ्रंलिहंलोहस्तंभंभज्यमान
मपश्यत् उत्कंपमानहृदयश्च पुनः प्रत्यवुध्य
तत्राचिंतयच्चखलुमामेवममीसततमनुवध्नंतिदुः
स्वप्नाःस्फुरतिचादिवानिशमकल्याणाख्यानवि
चक्षणमदक्षिणमक्षि सुदारुणाश्चाक्षुद्रक्षितिप
क्षयमाचक्षाणाःक्षणमपिनशाम्यंति पुनरुत्पा
ताः प्रत्यहं राहुरविकलवाहुवंध इव कवंधव
ति व्रध्नविंवे घटमानोविभाव्यते तपःकरणका
लकवलितानिव धूसारितसमग्रग्रहानुद्गिरंतिधू
मोद्गारान्सप्तर्षयः दिनेदिने दारुणादिशांदा
हादृश्यंते दिग्दाहभस्मकणनिकरइव निपत
ति नभस्तलात्तारागणः तारापातशुचेवनि
ष्प्रभः शशी निशिनिशीतस्ततः प्रज्वलिता
भि रुल्काभिरुग्रं ग्रहयुद्धमिव वियतिविलो
कयंति विलोलतारकाःककुभः

रत्नराशिर्मणिसमूहोब्धिश्च तस्यसाराः श्रेष्ठरत्नानि पोतंयानपात्रं
निपातयतिव्यापादयति अत्युन्नतं अभ्रंलिहं नभःस्पृशं अक्षुद्रःप्र
धानभूतः राहोरविकलकायवंधनेकवंधयोगात् कवंधदर्शनेचोत्पा
तसूचकम् ॥ ४४ विलोलतारकाइति

राज्यसंचारसूचकः संचारयतीव क्ष्मां क्वापिवहद्वहलरजःपटलकलिलशर्कराशकलशूत्कारीमारुतः न कुशलमिव पश्यामि लग्नस्य अस्मिन्नस्मद्वंशे करिणइव करीरंकोमलमपि कलमपिकलयतः कृतांतस्य कःपरिपन्थीसर्वथा स्वस्तिभवत्वार्यायइतिचिन्तयित्वा चांतर्भिन्नं भ्रातृस्नेहकातरं द्रवदिव हृदयं कथंकथमपि संस्तभ्योत्थाय यथाक्रियमाणं क्रियाकलापमकरोत् आस्थानगतश्चसहसैवप्रविशन्तमनुप्रविशता विषण्णवदनेनलोकेनानुगम्यमानमसह्यदुःखोष्णनिःश्वासधूमरक्ततंतुनेवमलिनेनपटेन प्रावृतवपुषं जीवितधारणलज्जयेवावनतमुखंनासावंशस्याग्रग्रथितदृष्टिं दुःखदूरप्ररूढरोम्णामूकेनापिमुखेनस्वामिव्यसनम.विच्छिन्नैरस्रुबिंदुभिर्विज्ञापयंतं कुंतलंनाम बृहदश्ववारंराज्यवर्धनस्य प्रसादभूमिमभिज्ञाततमं ददर्श

...णांच यद्दर्शनवशादक्ष्णोश्च लोलत्वंभवति कलिलानिव्याप्तानि वंशोवेणुरपि ॥४५ करीरोवंशांकुरःअपिशब्दः कृतांतस्येत्यतः परंयोज्यः परिपंथीरोधकः परिपूर्वपर्यायः परिपंथशब्दोस्तीतिज्ञापितं ॥

दृष्ट्वाच जाताशंकः चक्षुषिसलिलेन मुखश शिनिश्वसितेन हृदये हुताशेन उत्संगेभुवा दारुणाऽप्रियश्रवणसमये सममिव सर्वेष्वंगे ष्वगृह्यत लोकपालैः तस्माच्चहेलानिर्जितमा लवानेकपमपि गौडाधिपेन मिथ्योपचारोप चितविश्वासं मुक्तशस्त्रमेकाकिनं विस्रब्धं स्व भवनेच भ्रातरंव्यापादितमश्रौषीत् श्रुत्वाच महातेजस्वी प्रचंडकोपपावकप्रसरपरिचीय मानशोकावेगः सहसैव प्रजज्वाल अतश्चा मर्षविधुतशिरःशीर्यमाणशिखामणिशकलां गारकितमिव रोषाग्निमुद्वमन्ननवरतस्फुरिते नपिबन्निव सर्वतेजास्विनामायूंषि रोषनिर्भुग्ने न दशनच्छदेनलोहितायमानलोचनालोक विक्षेपैर्दिग्दाहानिवदर्शयन् रोषानलेनाप्य सह्यसहजशौर्योष्मदहनदह्यमानेनेवावितन्य मानस्वेदसलिलशीकरासारदुर्दिनःस्वावय वैरप्यदृष्टपूर्वप्रकोपभीतैरिव कंपमानैरुपेतः हरइवकृतभैरवाकारः हरिरिव प्रकटितनर सिंहरूपः

अप्रियेति अप्रियग्रहणकालेचदुःखंसर्वांगेषुगृह्यते अतइत्यादौ भृशंभीषणतामयासीदितिसंबंधः निर्भुग्नेनवक्रीकृतेनदह्यमानेनेति दाहभीतेनच सलिलकणा वितन्यन्ते भैरवोभीषणोपि प्रशस्तो नरोनरसिंहः इत्थंच स्युरुत्तरपदेव्याघ्रपुंगवर्षभकुंजराःसिंहशा र्दूलनागाद्याः पुंसिश्रेष्ठार्थवाचकाइति नृसिंहरूपीच हरिरिति

सूर्यकान्तशैल इवापरतेजः प्रसरदर्शन प्रज्वलितः क्षयादिवस इवोद्यतद्वादशदिनकरदुर्निरीक्ष्यमूर्त्तिर्महोत्पातमारुत इव सकलभूभृत्कंपकारी विंध्यइववर्धमाननिग्रहोत्सेधः महाशीविषइव दुर्नरेन्द्ररोषितः पारीक्षितइव सर्वभोगिदहनोद्यतः वृकोदर इव रिपुरुधिरतृषितः सुरराजइव प्रतिपक्षवारणप्रभावितःपूर्वागमइव पौरुषस्य उन्मादइवमदस्य आवेगइवावलेपस्य तारुण्यावतारइव तेजसः सर्वोद्योगइवदर्पस्य युगागमइवयौवनोष्मणः राज्याभिषेक इव रणरसस्य नीराजनदिवसइवासहिष्णुतायाः परांभीषणतामयासीत् अवादीच्चगौडाधिपमपहाय कस्तादृशं महापुरुषं तत्क्षण एव निर्व्याजभुजवीर्यनिर्जितसमस्तराजकं मुक्तशस्त्रंकलशयोनिमिव ॥

तेजोक्षमता आतपश्चदिनकरवर्चैश्च दुर्निरीक्षणः ॥ ४६ ॥ भूभृतोराजानोपि गिरयश्च वर्धमानेन देवेन उत्सेधऔन्नत्यं यस्य नरेन्द्रोमंत्रज्ञोराजापि परीक्षितिदग्धे जनमेजयः पितृपरिभवेन सर्पसत्रे भोगिनांक्षयार्थमयजदितिवार्त्ता भोगिनोराजानोवृकोदरोभीमसेनःवारणंनिषेधःहस्तीचवारणः अवलेपस्य दर्पस्य नीराजनंशांतिकर्मविशेषःकलशयोनि द्रोणाचार्यं

कृष्णवर्त्मप्रसूतिरीदृशेनसर्वलोकविगर्हितेन मृत्युना शमयेदार्यम् अनार्यचतंमुक्ताभागीरथीफेनपटलपांडुराः केषां मनस्सुसरः सुराजहंसाइवपरशुरामपराक्रमस्मृतिकृतोनकुर्युरार्यशौर्यगुणाः पक्षपातं कथमिवात्युग्रस्यास्यार्यजीवितहरणे निदाघरवेरिव कमलाकरसलिलशोषणे ऽनपेक्षितप्रीतयः प्रसृताः कराः कांनुगतिंगमिष्यति कां वायोनिंप्रवेक्ष्यतिकस्मिन्वानरके निपतिष्यतिश्वपाकोपिकइदमाचरेत् नामापिगृह्णतोस्य पापकारिणः पापमलेनलिप्यतइवमेजिह्वाकिंवांगीकृत्यकार्यमार्यस्तेन क्षुद्रेणानुप्रविश्यविगतव्रणेन घुणेनेव सकलभुवनाल्हादनचतुरश्चंद्रनहंतभः क्षयमुपनीतःनूनं नानेन मूढेन मधुरसास्वादलुब्धेन मध्विवार्यजीवितमाकर्षता भावीदृष्टः शिलीमुखसंपातोपद्रवः ॥

कृष्णवर्त्मप्रसूतिः पापमार्गप्रवर्तकः धृष्टद्युम्नश्चाग्निजातः कृष्णवर्त्मावह्निः भागीरथीत्यादि परशुरामइत्यादिच हंसानामपि विशेषणं रामेणहि हंसमार्गः कैलासेकृत इति हंसास्तत्कीर्त्तिस्मारयंति पक्षपातंस्नेहं पक्षैर्गमनंच अत्युग्रस्यातिक्रूरस्यातिचंडस्य च अत्रार्थस्य कमलाकरेणोपमा लक्ष्मीयात्रादिगुणयुक्तत्वात् कराहस्ताश्रश्मयश्च क्षुद्रेणक्रूरेणापरिचितपरिणेनच अनुप्रविश्यविश्वासंनीत्वांतर्भूयचघुणेन काष्ठकृमिणा शिलीमुखाः शरास्त्रमराश्च

निजगृहदूषणं जालमार्गप्रदीपकेन कज्जल मिवातिमलिनं केवलमयशः संचितं गौडाधमेन नत्वाश्वेवास्तमुपगतवत्यापि त्रिभुवनचूडामणौसवितरि वेधसादिसृष्टः सत्पक्षशत्रोरंधकारस्य निग्रहाय ग्रहषंडविहारैकहरिणाधिपःशशी विनयविधायिनि भग्नेपिचांकुशे विद्यतएव व्यालवारणस्य विनयाय सकलमत्तमातंगकुंभस्थलस्थिरशिरोभागभिदुरः खरतरःकेसरिनखरःतादृशाः कुवैकटिकाइव तेजस्विरत्नविनाशकाः कस्य न वध्याःक्वेदानींयास्यति दुर्बुद्धिः इत्येवमभिदधत एवास्यपितुरपि मित्रं सेनापतिः समग्रविग्रहप्राग्रहरो हारितालशैलावदातदेहः परिणतप्रगुणसालप्रकांडप्रकाशः प्रांशुरतिशौर्योष्मणेव परिपाकमागतो गजभूयिष्ठ वयसिवर्तमानोवहुशरशयनसुप्तोत्थितोपिहसन्निव

जालस्य कुसृतेर्मार्गंदीपयति यस्तेन गवाक्षमार्गेण यःप्रदीपःसयथाकज्जलंसंचिनुते नत्वाशु इत्यप्रस्तुतप्रशंसावोद्धव्या विशेषेणहरणंविहारःविच्छायीकरणं गमनंचषंडेहिसिंहोगमनंकरोति व्यालवारणस्यदुष्टदंतिनःस्थिरोदृढःशिरोभागः यस्ययंप्राप्यैवतस्यस्वयंविदारणंभवतीत्यर्थः वैकटिकोरत्नवंधकःइत्येवमादौसेनापतिः सिंहनादनामासन्निधावेवसमुपविष्टोविज्ञापितवानितिसंबंधःविग्रहाःसंभ्रमास्तेषुप्राग्रहरोग्रेसरःप्रगुणंस्पष्टंकाण्डंस्कंधः

शांतनवमतिदीर्घेणायुषा दुरभिभवशरीर
तयाजरयापि भीतभीतयेव प्रकटितप्रकंप
यापरामृष्टः कथमपि सारमयेषु शिरोरुहेषु
शशिकरनिकर सितसरलाग्रशिरोरुहसटालां
सैंहीमिवनिष्कपटपराक्रमरसरचितां संक्रां
ताजीवन्नेव जातिंअपरस्वामिमुखदर्शनमहा
पातकपरिजिहीर्षयेव भ्रूयुगलेन वलिनाशि
थिलप्रलंबचर्मणा स्थगितदृष्टिः धवलस्थू
लगुंजापिच्छप्रच्छादितकपोलभागभास्वरेण
वमन्निव विक्रमकालमकालेपि विकासिका
शकाननविशदं शरदारंभं भीमेनमुखेनमृत
मपिहृदयस्थितं स्वामिनमिव सितचामरेण
वीजयन्नाभिलंबेनकूर्चकलापेन परिणामेपि
धौतासिधाराजलपानतृषितैरिव विवृतवद
नैर्दृढाद्भि व्रणविदारैर्विशसितविशालवक्षाः
निशितशस्त्रटंककोटिकुंठितबहुदृढ दग्धाक्षर
पंक्तिनिरंतरतया च सकलसमरविजयपर्व
गणनामिव कुर्वन्

शांतनवं भीष्मं वलयोस्यसंति वलिनंगुंजाउत्तरोष्टोपरिरोमरा
जिः विक्रमकालमिति शरदारंभविशेषणं तत्र शत्रुषु जययात्रा
विधेयेति कूर्चकलापःश्मश्रुः परिणामे बृद्धत्वे तृषितोपिजलंपा
तुंविवृतवदनोभवति विदारैः स्फोटैःशस्त्राण्येवटंकाःछेदनभां
डानि कुंठितानि छेदाः

पूर्वपर्वतइव पाटचारीविविधवीररसपूर्ववृत्तांत रामणीयकेनमहाभारतमपि लघयन्निवप्रातिपक्ष क्षपणातिनिर्वेधनपरशुराममपि शिक्षयन्निव अभ्रमणेनानादरश्रीसमाकर्षणविभ्रमेण मन्दरमपि मन्दयन्निव वाहिनीनायकमर्यादानुवर्त्तनेनांभोधिमप्यभिभवन्निव स्थैर्यकार्कश्योन्नतिभिरचलानपि ह्रेपयन्निव सहज प्रचंडतेजः प्रसरपरिस्फुरणेन सवितारमपि तृणीकुर्वन्निव ईश्वरभारोद्वहनधृष्टपृष्ठतया हरवृषभमपिहसन्निव अरणिरमर्षाग्नेः ऐश्वर्यशौर्यस्यमदोमदस्य विसर्पो दर्पस्यहृदयं हठस्यजीवितंजिगीषुतायाःउच्छ्वसितमुत्साहस्य अंकुशोदुर्मदानां नागदमनोदुष्टभोगिनां विरामोवरमनुष्यतायाः कुलगुरुर्वीरगोष्ठीनां तुला शौर्यशालिनां सीमंतदृश्वाशस्त्रग्रामस्य

पूर्ववृत्तांतः पूर्वप्रशस्तिः ४९ अभ्रमणंसमुद्रयात्रा जलेपरिवर्त्तनमापिताभ्योनादरेण यल्लक्ष्मीसमाकर्षणं तदर्थंयोविविधोभ्रमस्तेनवाहिनीसेनानदीचस्थैर्यं व्यवसायादचलनमपिकार्कश्यंपरविषयंनिर्दयत्वमापितन्ननिराभिमानोपि तेजोक्षमाघर्मंच ईश्वरोहरोपि कार्येषुक्षुण्णोल्लोकेषु घृष्टपृष्ठउच्यते नागदमनोगजमर्दनोगरुडश्च भोगिनोराजानःसर्पाश्च

निर्वोढा प्रौढवादानां संस्तंभयिताभग्नानांपा
रगः प्रतिज्ञायाःमर्मज्ञो महाविग्रहाणांआघो
षणपटहः समरार्थिनांसन्निधावेवसमुपवि
ष्टःसिंहनादनामास्वरेणैव दुंदुभिघोषगंभीरे
णसुभटानां समररसं मानयन्विज्ञापितवान्
देव न क्वचित्कृताश्रयया मलिनया मलिनत
राःकोकिलयाकाकाइवकापुरुषाहतलक्ष्म्या
विप्रलभ्यमानमात्मानं न चेतयंते श्रियोहि
दोषान्धतादयःकामलाविकाराः छत्रच्छायां
तरितरवयोविस्मरंत्यन्यतेजस्विनं जडधि
यःकिंवाकरोतुवराकःयेनातिभीरुतया नित्य
पराङ्मुखेन नतुदृष्टान्येव सर्वातिशायिशौ
र्यातिशयश्वयथुकपिलकपोलपुलकपल्लवित
कोपानलानिकुपितानां तेजस्विनां मुखानि

यथाआघोषणपटहः समरार्थिनामुत्साहंजनयतितथासावपी
त्यर्थःदेवेत्यादौ कापुरुषाहतलक्ष्म्याविप्रलभ्यमानं वंच्यमानमा
त्मानंनचेतयंत इतियोजना नक्वचित्कृताश्रययासर्वत्रचांचल्या
त्कस्मात्तान्हतलक्ष्मीर्विप्रलभतइत्याह श्रियोहिदोषांधतादयः
कामलाविकारा इति हि यस्माच्छ्रियोये दोषांधतादयोविकारा
स्तेहि कामलाःकमलसंबंधिनः कमलानांदोषायांरात्रौ अंधता
संकोचः तन्निवासाच्च लक्ष्म्या अपि सविकारश्चान्यंविप्रलभ
तेरागाद्यस्तेरंधतेवान्धतासत्कार्यानालोचनं अथच पांडुरोगद
भेदःतेनशंखादौ पीतत्वाद्विज्ञानं तद्विकाराश्च राज्यंधतादयोदो
षाभवंति ५० सर्वातिशायिना शौर्यातिशयेन श्वयथुर्येषांता
नि ततोविशेषणसमासः ॥

नासौतपस्वी जानात्येवं यथाभिचारा विप्र कृताः सद्यः सकलकुलप्रलयमुपहरंति म नस्विनः जलेपि ज्वलंति ताडितास्तेजास्वि नः सकलवीरगोष्ठीवाह्यस्य तस्यैवेदमुचि तमनुत्तारनिरयनिपातनिपुणंकर्ममनस्विनां हिप्रधनप्रधानधने धनुषि ध्रियमाणेसतिच कमलाकलहंसीकेलिकुवलयकानने कृपाणे कृपणोपायः पयोधिमथनप्रभृतयोपि श्री समुत्थानस्यकिंपुनरीदृशाः येच धात्राधरि त्रीत्रातुं नियुक्तः स्वयमसमर्था एव कुलिश कर्कशभुजपरिघप्रहरणहेतोरुद्धरंति गिर योपि लोहानिते कथमिववाहुशालिनोमन सापिविमलयशोवांधवाध्यायेयुरकार्यम् स र्वग्रहाभिभवभास्वराणांहिसुभटकराणामग्र तो दिग्ग्रहणपंगवः पतंगकराः महामहि षशृंगतरंगभंगभंगुरभीषणांतरालालोकप्र वादमात्रेणच

विप्रकृताउपद्रुताः विप्रैर्द्विजैः कृताः जलेनिजेपि ताडिताआह ताविद्युताश्चतेजस्विनोग्नयोपिगोष्ठीवाह्यश्चनजानातिधर्मवृद्धासे वितत्वात् प्रधनं रणः गिरयोलोहान्युद्गिरंति गिरिभ्यएवलोहो त्पत्तेः सर्वस्यवस्तुनोग्रहोपहरणंग्रहाश्चंद्राद्याः पतंगः सूर्यः म हामहिषशृंगयोस्तरंगवद्भंगुरायेभंगास्तैर्भीषणमंतरालंयस्याः सा च्छान्यत्रमहामाहिषशृंगतुल्या ॥ ५१ ॥

दक्षिणाशापरमार्थतोभटभ्रुकुटिराधिवासोय मस्य चित्रंचयदुन्मुक्तासिंहनादान.सहसासा हसरससरोमांचकंठकनिकरेणसह ननिर्यां ति सटाः शूराणां रणेषुहृयमेवच चतुःसाग रसंभृतस्य भूतिसंभारस्यभाजनं प्रतिपक्ष दाहि दारुणंवडवामुखं वामहापुरुषाणां हृद यंधाम तेजस्विनः सकलानन्याप्ययपयोरा शीन्सहजस्य कुतोनिवृत्तिरूष्मणः वृथावि ततविपुलफणाभारोभुजंगानाभर्त्ताविभर्त्तियो भोगेनमृत्पिंडमेव केवलं अप्रतिहतशासना क्रान्त्युपभोगसुखरसंतुरसाया दिक्कुंजरकर भारभास्वरप्रकोष्ठावीरवाहवएव जानंति र विरिवोन्मुखपद्माकरगृहीतपादपल्लवः सुखे ना खंडिततेजादिवसान्नयति शूरः कातर स्यतुशशिन इव हरिणहृदयस्य पांडुरपृष्ठस्य कुतोद्विरात्रमपि निश्चलालक्ष्मीः ॥

भूतिर्भस्मापि तेजस्विनोवडवाग्नेरपि मुखेनशोभनाकाशेनापि शूरोरविरपि हरिणहृदयस्याल्पसत्त्वस्यापि पांडुरपृष्ठस्य देशभा ग्यानिर्लज्जस्यापिद्विरात्रमपीतिपौर्णमास्यामिवशशिनः सातिश यशोभायुक्तत्वात् लक्ष्मीःश्रीः कांतिश्च ॥

अपरिमितयशःप्रकरवर्षी विकासीवीररसः पुरः प्रवृत्तप्रतापप्रहताःपंथानःपौरुषस्य श ब्दविद्रुताद्विषंति भवंति द्वाराणि दर्पस्य शस्त्रालोकप्रकाशिताः शून्यादिशःशौर्यस्य रिपुरुधिरशीकरासारेण भूरिव श्रीरप्यनुर ज्यते वहुनरपतिमुकुटमणिशिलाशाणकोण कषणेन चरणनखराजिरिव राजताप्युज्ज्व लीभवति अनवरतशस्त्राभ्यासेन करतला नीवरिपुमुखान्यापिश्यामीभवंति विविधव्रण वंधपट्टकशतैःशरीरमिवयशोपि धवलीभव ति कवचिषु रिपूरःकपाटेषुपात्यमानाः पाव कशिखामिव श्रियमपि वमंतेनिष्ठुरानिस्त्रिं शप्रहाराःयश्चाहितहतस्वजनोमनस्विजनो द्विषदुरस्ताडनेन कथयति हृदयदुःखपरुषा सिलतानिपातपवनेनोच्छ्वसितिनिरुच्छ्वा सितशत्रुशरीरास्त्रुधारापातेनरोदितिविपक्ष वनिताचक्षुषा ददाति जलं सश्रेयान् नेतरः नचस्वम्नदृष्टनष्टेष्विवक्षणिकेषुशरीरेषुनिवध्नं ति वंधुवुद्धिं प्रवुद्धाः ॥

शून्याअनावृताः ५२ अनुरज्यतेअनुरक्ताभवति उपलिप्ताचभव ति उज्वला रम्या निर्मला च श्यामानिकृष्णानिविच्छाय निच श्रेयान्प्रशंसनीयः॥ ५३ ॥

स्थायेनियशासि शरीरधर्धीशाणां अनवरत
प्रज्वलिततेजःप्रसरभास्वरस्वभावंच मणि
प्रदीपमिव कलुषः कज्जलमलइवनस्पृशत्ये
व तेजस्विनां शोकः सत्वं सत्त्ववतामग्रणीः
प्राग्रहरःप्रज्ञानां प्रथमःसमर्थानां प्रष्ठोभिजा
तानामग्रेसरस्तेजस्विनामादिरसहिष्णूनां
एताश्चसततसन्निहितधूमायमानकोपाग्नयः
सुलभासिधारातोयतृप्तयो विकटवाहुवन
च्छायोपगूढाधीरतायानिवासशिशिरभूमयः
स्वायत्ताःसुभटानामुरःकपाटभित्तयःयतः किं
गौडाधिपाधमेनैकेन तथाकुरुयथानान्योपि
कश्चिदाचरत्येवं भूयः सर्वोर्वीश्रद्धाकामुका
नामलीकविजिगीषूणां संचारय चामराण्यं
तः पुरपुरंध्रिनिः श्वसितैः उच्छिंधि रुधिरग
न्धांधगृध्रमंडलच्छादनैः छत्रच्छायाव्यसना
नि अपाकुरुकदुष्णशोणितोदकस्वेदैः कुल
क्ष्मीकुलटाकटाक्षचक्षूरगरोगान् उपशमय
निशितशरासिरावेधैर्वीरकार्यशौर्यश्वयथून्

शिशिरभूमयोप्यग्नितोयच्छायायुक्ताभवंति स्वेदैश्च नयनव्याध्यु
पशमोजायते एवं निशितशरासिरावेधैरित्यादि वोद्धव्यम् ॥

उन्मीलयल्लोह निगडापीडमालामलमहौष
धैःपादपीठदोहददुर्ललितपादपटुमान्द्यानि
क्षपय तीक्ष्णाज्ञाक्षरक्षारपातैः जयशब्द
श्रवणकर्णकंडूः अपनय चरणनखमरीचिच
न्दनचर्चाललाटलेपै रनमितास्तिमितमस्त
कस्तंभविकारान् उद्धरकरदानसन्देशसन्दे
शैर्द्रविणदर्पोष्मायमाणदुः शील लीलाश
ल्यानिभिन्धि मणिपादपीठदीधितिप्रदीपि
काभिः शुष्कसुभटाटोपभ्रुकुटिवंधांधकारा
न्जयचरणलंघनलाघवगलितशिरोगौरवा
रोग्यैर्मिथ्याभिमानमह.सन्निपातान् घद
य सततसेवांजलिमुकुलितकरसंपुटोष्मभि
रिष्वसनगुणाकिणकार्कश्यानि येनैव तेगतः
पिता पितामहःप्रपितामहोवातमेवमाहासी
स्त्रिभुवनस्पृहणीयं पंथानमपहायकुपुरुषो
चितांशुचंप्रतिपद्यस्वकुलक्रमागतांकेसरीव
कुरंगीं राज्यलक्ष्मींदेवदेवभूयंगतेनरेन्द्रेदुष्ट
गौडभुजंगजग्धजीविते चराज्यवर्धने वृत्ते
स्मिन्महाप्रलयेधरणीधारणायाधुना त्वंशे
षःसमाश्वासयाऽशरणाः प्रजाः ॥

सन्देशः शल्यांचनं ५४ सततांजलिवंधात्करयोरूष्मसंभवः इ
ष्वसनंधनुः देवभूयंदेवत्वं शेषोवशिष्टः शेषभट्टारकश्च

क्ष्मापतीनां शिरःसु शरत्सवितेवललाटंतपा न्प्रयच्छपादन्यासानूग्राहितानामभिनवसेवा दीक्षादुःखसंतप्तश्वासधूममंडलैर्नखपचैःप्र चलितचूडामणिचक्रवालवालातपैश्चायाहि कल्मषपादतां अपिचहतेपितर्यैकाकीतपस्वी मृगैःसह संवर्धितः सहजब्राह्मण्यमार्दवसु कुमारमनःकृतनिश्चयः चंडचापवनाटनिटां कारनादानिर्मदीकृतदिग्गजंगुजज्याजालज नितजगज्ज्वरं समग्रमुद्यतमेकविंशतिकृत्वः कृतवंशमुत्खातवान्राजन्यकंपरशुरामः किंपु नर्नैसर्गिककायकार्कश्यकुलिशायमानमान सोमानिनां मूर्धन्योदेवः तदद्यैव कृतप्रतिज्ञो गृहाणगौडाधमजीवितध्वस्तये जीवितसंक लनाकुलकालाकांडदंडयात्राचिह्नध्वजं धनुः नह्ययमरातिरक्तचंदनचर्चाशिशिरोपचारमं तरेण शाम्यति परिभवानलपच्यमानदेह स्य देव स्यदुःखदाहज्वरः

ललाटंतपानिति प्रचंडतोका कल्माषपादत्वं चित्रचरण त्वं राजन्यकं क्षत्रियसमूहः रामोभार्गवः नैसर्गिकः स्वाभा विकःमूर्धन्यो मुख्यः ५५ परिभवःनिकारः

सुदारुणनिकारसंतापशांत्युपायपरिक्षये हि हिडंबाचुंबनास्वादितमिव रिपुरुधिरामृतम मन्दशेपाय मपायि पवनात्मजेन जामद ग्न्येन च शाम्यन्मन्युशिखिशिखासंज्वर सुखायमानस्पर्शशीतलेषु क्षत्रियक्षतजहृदे ष्वस्नायि इत्युक्तोऽयरंसीत् देवस्तुहर्षस्तंभ स्यवादीत् करणीयमेवेदमभिहितं मान्येन इ तरथाहिमे गृहीतभुविभोगिनाथेपि दायाद दृ ष्टिरीर्ष्यालोर्भुजस्य उपरिगच्छतीच्छतीनिग्र हाय ग्रहगणेपि भ्रूलता चरितुं अनमत्सुशैले ष्वपि कचग्रहमभिलषति दातुं करः तेजोदुर्वि दग्धानर्ककरानपि चामराणि ग्राहयितुमीहते हृदयंराजशब्दरुषा मृगराजानामपि शिरां सिवांछतिपादःपादपीठीकर्तुंस्वच्छंदलोकपा लस्वेच्छागृहीतानामाक्षेपादेशाय दिशामपि स्फुरत्यधरः किंपुनरीदृशेदुर्जाते जाते जाता मर्षनिर्भरेचमनसिनास्त्येवावकाशः शोकक्रि याकरणस्य

हिडंबा राक्षसीभीमसेनेनपवनात्मजेनक्षतजहृदेषुरक्तडाकेषु इत रथापीत्यन्ययायदीदृशंदुर्जातंजातंनाभूत्तदादावेव मद्भुतं भुजस्यभो गिनाथेपिदायाददृष्टिःकिंपुनरीदृशेदुर्जातेव्यसनेजातेसंपन्ने शत्रुवृ द्धिभंवेदितियोजनाएवमुपरिगच्छतीत्यादौवेःद्धव्यं आक्षेपोपहरणं

अपिचहृदयविषमशल्ये मुसल्येजीवति जा
ल्मेजगद्विगर्हितेगौडाधिपाधमचंडाले जिह्रे
मिशुष्काधरपुटः पोटेवप्रतिकारशून्यं शुचाशू
त्कं तु अकृतारिपुवलावलाविलोललोचनोदकदु
र्दिनस्य कुतःकरयुगलस्य जलांजलिदानं अ
दृष्टगौडाधमचिताधूममंडलस्यवा चक्षुषःस्व
ल्पमप्यस्त्रुसलिलं श्रूयतां मेप्रतिज्ञा शपाम्या
र्यस्यैवपादपांसुस्पर्शेन यदि परिगणितैरेव
वासरैः सकलचापचापलदुर्ललितनरपतिच
रणरणरणायमाननिगडांनिगौंडां नकरोमिम
हींततस्तनूनपाति पीतसर्पिषिपतंगइव पात
कीपातयाम्यात्मानं इत्युक्त्वाच महासंधिविग्र
हाधिकृतमवंतिमंतिकस्थमादिदेश लिख्यता
म् आरविरथचक्रचीत्कारचाकितचारणमिथु
नमुक्तसानोरुदयाचलात् आत्रिकूटकटककु
ट्टाकटंकलिखितकाकुत्स्थलंकालुंठनव्यतिक
रात्सुवेलात्

मुसलेनवध्यः मुसल्यः तस्मिन् जाल्मेपापिष्ठे ५६ पोटा नपुं
सकंनिगडोवंधनशृंखला तनूनपाद्वान्हिः चारणागंधर्वाः काकु
त्स्थोरामः ॥

आवारुणीमदस्खलितवरुणवरनारीनूपररव मुखरकुहरकुक्षेरस्तागिरेः आगुह्यकगेहिनी परिमलसुगंधि गंधपाषाणवासितगुहागृहा च्च गंधमादनात् सर्वेषां राज्ञां सज्जीक्रियंतां कराः करदानाय शस्त्रग्रहणायवा गृह्यंतांदि शश्चामराणिवानमन्तु शिरांसिधनूंषिवाकर्ण पूरीक्रियंतामाज्ञा मौर्वीवाशेखरीभवंतु पादर जांसि शिरस्त्राणिवाघटंतामंजलयः करिघ टावंधावामुच्यंतांभूमयइषवोवासमालंव्यंतां वेत्रयष्टयः कुंतलयष्टयोवा सुदृष्टः क्रियतामा स्मा मच्चरणनखेषु मणिदर्पणेषुवा परागतो हमिति पंगोरिवमेकुतोनिवृत्तिस्तावत् याव भ्रकुतः सर्वद्वीपांतरसंचारीसकलनरपतिमुकु टमणिशिलालोकमयः पादलेप इतिकृतानि श्चयश्चमुक्तास्थानोविसर्जितराजलोकः स्ना नारंभाकांक्षी सभामत्याक्षीत् उत्थायच स्व स्थवन्निःशेषमाह्निकमकार्षीत् अगलच्चदर्प प्रसरइवश्रुतप्रतिज्ञस्यशाम्यदूष्मादिवसस्त्रि भुवनस्य ॥

वारुणीसुरा कुक्षिःवेदिःगुह्यकायक्षाः ५७ पंगोगंतिविकल स्य ऊष्मा उष्ण्यं

ततश्च निजाधिकारापहारभीतइव भगवत्य
पिक्कापिगते गततेजस्यहिमभासितामरसव
नेष्वपिनिगूढशिलीमुखालापेषु त्रासादिव
संकुचत्सुविहगगणेष्वपि समुपसंहृतनिजप
क्षविपक्षनिश्चलेषुभियेवप्रकटीभवत्सु भुवन
व्यापिनींसंध्यां प्रातिज्ञामिवमानयातनताशि
रसि घटितांजलिवनेजनेसकलेस्वपदच्युति
चकितदिकपालदयिमानाभ्रंलिहलोहप्राका
रवलयास्विव वहलतिमिरमालातिरोधीय
मानासु दिक्षु प्रदोषास्थानेनातिचिरंतस्थौ
नमन्नृपलोकलोलांशुकपवनकंपितशिखैर्दी
पिकाचक्रवालैरपि प्रणम्यमानइव प्राहिणो
छोकं प्रतिषिद्धपरिजनप्रवेशंच शयनगृहंप्रा
विशत् उत्तानश्चमुमोचांगानि शयनतले दी
पद्वितीयंचतमभिसरइवलब्धावसरस्तरसा
भ्रातृशोकोजग्राहजीवंतमिव हृदये निमीलि
तलोचनोददर्शाग्रजं उपर्युपरिभ्रातृजीवि
तान्वेषणइव प्रसस्रुः श्वासाः ॥

ततश्चेत्यादौप्रदोषास्थाने नातिचिरंतस्थावितिसंबंधः शराश्रपि
शिलीमुखाः सहायाश्रपिपक्षाः ५८ अभिसराश्चौराः ॥

धवलांशुकपटांतेनेव चास्रुजलप्लवेन मुखमा
च्छाद्यनिःशब्दमतिचिरंरुरोदचकारचचेतसि
कथं नामाकृतेस्तादृश्यायुक्तःपरिणामोयमी
दृशः पृथुशिलासंघातकर्कशकायवंधात्ताता
दचलादिवलोहधातुः कठिनतरत्र्प्रासीदार्यःक
थंचास्यमे हतहृदयस्यार्यमरणे मज्जीवितं त
त्तादृशमैक्यमेकपदएवक्वापिगतं त्र्प्रयत्नेनैव
हतविधिना पृथक्कृतोस्मि दग्धरोषांतरितशु
चासुचिरंरुदितमपिनमुक्तकंठगतघृणेनमया
सर्वथालूतातंतुच्छाटाभिदुरास्तुच्छाः प्रीतयः
प्राणिनां लोकयात्रामात्रनिवंधना वांधवताय
त्राहमपिनामपरइवार्ये स्वर्गस्थे स्वस्थइवासे
किंचदैवहतकेन फलमासादितमीदृशि परस्प
रप्रीतिवंधनिर्वृतहृदये सुखभाजि भ्रातृमिथुने
विघटिते तथा चन्द्रमयाइवजगदाह्लादिनो
लोकांतरीभूतस्य लज्जाचितान्नयइवार्यस्यात
एवदहंतिगुणाः इत्येतानिचान्यानि चहृदयेप
र्यदेवयत् ॥

लूतातंतुच्छटा जालकारसूत्रजालं ५१ लोकयात्रालोकाचारः
किंफलमासादितं नकिंचिदित्यर्थःपर्यदेवत् शुशोच

प्रभातायांचशर्वर्यां प्रातरेव प्रतीहारमादिदे
शत्रशेषगजसाधनाधिकृतं स्कंदगुप्तं द्रष्टुमि
च्छामीति अथयुगपत्प्रधावितबहुपुरुषपरंप
राहूयमानःस्वमंदिरादप्रतिपालितकरेणुश्चर
णाभ्यामेवसंभ्रांतःससंभ्रमैर्दंडिभिरुत्सार्यमा
णजनपदः पदेपदेप्रणमतः प्रतिदिशमिभभि
षग्वरान्वरवारणानां विभावरीवार्त्ताःपृच्छन्
उच्छ्रितशिखिपिच्छलांछितवंशलतावनगहन
गृहीतदिगायामैर्विंध्यवनैरिव वारणवंधविम
र्दोद्योगागतैःपुरःप्रधावद्भिरनायत्तमंडलैराधो
रणगणैश्च मरकतहरितघासमुष्टीश्च दर्शयद्भि
र्नवग्रहगजपतींश्च प्रार्थयमानैश्च लब्धाभिम
तमत्तमातंगमुदितमानसैश्च सुदूरमुपसृत्यन
मस्यद्भि रात्मीयमातंगमदागमांश्च विनोदय
द्भिः डिंडिमाधिरोहणायच विज्ञापयद्भिः प्रमा
दपतितापराधापहतद्विरददुःखधृतदीर्घश्मश्रु
भिरग्रतो गच्छद्भि रभिनवापसृतैश्चकर्पटिभिः

अथेत्यादोस्कन्दगुप्त एतैरेतैः क्रियमाणकोलाहलोराजकुलं विवे
शेतिसंवधः भिषग्वरान्वैद्योत्तमान् वंधोरोधनं अनायत्ताहास्तिपा
श्चवरक्षिणःआधोरणागजारोहाः डिंडिमः पटहः ॥

वारणाप्तिसुखप्रत्याशयाधावमानैःगणिका
धिकारिगणैश्चिरलब्धांतरैरुच्छ्रितकरैः क
र्मण्यकरेणुकासंकथनाकुलै रुल्लासितपल्ल
वांचेल्लाभिररण्यपालपंक्तिभिश्च निष्पादि
तनवग्रहनागनिवह निवेदनोद्यताभिरुत्तंभि
ततुंगतोत्रवनै र्महामात्रपेटकैश्च प्रकटित
करिकर्मचर्मपुटै रभिनवसाधनसंचरणवार्त्ता
निवेदनाविसर्जितैश्च नागवनवीथीपालदू
तवृंदैः प्रतिक्षणप्रत्यवेक्षितकरिकवलकूटैश्च
कटभंगसंग्रहं ग्रामनगरनिगमेषु निवेदयमा
नैश्च कटककदंबकैः क्रियमाणकोलाहलः
स्वामिप्रसादसंभृतेन महाधिकाराविष्कारे
ण स्वाभाविकेन चाऽवष्टंभाभोगेनोदासीनो
प्यादिशन्निव असंख्यकरिकर्णशंखसंपत्सं
पादनाय समुद्रानाज्ञापयन्निव शृंगारगैरि
कपंकांगरागसंग्रहाय गिरीन्मुष्णन्निव दि
ग्गजाधिकारं ककुभामैरावतमिवा पहरन्हरे
र्हैरपदभारनामितकैलासगिरिगुरुभिः पाद
न्यासै र्गुरुभारग्रहणगर्वमुर्व्याः संहरन्निव

गणिकागजानांप्रतिलोभनार्थंहस्तिनी कर्मण्यकरेणुका करिग्र
हकुशला।करिणीतुदंत्यनेनेतितोत्रंप्रेषणकंमहामात्राःप्रधानहस्त्या
रोहाःतेषांपेटकैःसमूहैःकरिणांकर्मार्थे युद्धशिक्षायैचर्मपुटःचर्मकृ
तोहस्त्याकारःकटभंगःप्रत्यग्रं गोधूमादियवसंघासइत्यर्थः६१नि
गमावणिक्पथाःकटकाहस्तिपटानियुक्ताः अग्रेसरावेत्रिणइत्यन्ये

गतिवशा विलोलस्यचा जानुलंबस्य बाहुदंड द्वयस्य विक्षेपै रालानशिलास्तंभमाला मिवो भयतो निखनन्नीषदुत्तुंगलंबेनाऽधरविंबेना धररसस्वादुना नवपल्लवकोमलेन कवलेनेव श्रीकरेणुकां विलोभयन्निजनृपवंशदीर्घं नासावंशं दधानः अतिस्निग्धमधुरधवलविशालतया पीतक्षीरोदेनेव पित्र्नीक्षणयुग्मायामेन दिशामायामं मेरुतटादपि विकटविपुलालिकः सततमविच्छिन्नच्छत्रच्छायाप्ररूढिवशादिव नितांतायतनीलकोपलच्छविसुभगेन स्वभावभंगुरेण कुंतलवाल्लवल्लरीवेल्लितविलासिना लुनन्निव लुमालोकानर्ककरान्ववर्वरकेन अरिपक्षपरिक्षयपरित्यक्तकार्मुककर्मापि सकलदिगंतश्रूयमाणगुरुगुणध्वनिः आत्मस्थसमस्तमत्तमातंगसाधनोपि अस्पृष्टोमदेन भूतिमानपि स्नेहमयः पार्थिवोपि गुणमयः ॥ कारिणा मिव दानवता मुपरि स्थितः स्वामितामिव स्पृहणीयां भृत्यता मप्य परिभूतामुद्वहन् एकभर्तृभक्तिनिश्चलां

गुणाः शौर्याद्याः मौर्वीच गुणः मदोगर्वो भूतिः संपद्भस्मच पार्थिवो राजा पृथिव्यारब्धश्च गुणारब्धोपि नहि घटः पटोभवतीतिविरोधः ॥ दानं मदोवितरणंच ६२

कुलांगनामिवानन्यगम्यांप्रभुप्रसादभूमिमा
रुढःनिष्कारणबांधवोविदग्धानांअभृतभृत्यो
भजतांअक्रीतदासोविदुषांस्कंदगुप्तोविवेश
राजकुलं दूरादेव चोभयकरकमलावलंवितं
स्पृशन्मौलिना महीतलं नमस्कारमकरोत्
उपविष्टं नातिनिकटे तं तदा जगाद देवोह
र्षः श्रुतो विस्तर एवा ऽस्यार्थव्यतिकरस्या
स्मच्चिकीर्षितस्य च अतः शीघ्रं प्रवेश्यंतां
प्रचारनिर्गतानि गजसाधनानि न क्षाम्यत्य
ति स्वल्पमप्यार्यपरिभवपीडापावकः प्रण
यविलंबं इत्येवमभिहितश्च प्रणम्य व्यज्ञा
पयत् कृत्य मवधारयतु स्वामी समादिष्टं
किंतु स्वल्पं विज्ञाप्य मस्ति भृत्यभक्तेः त
दा कर्णयतु देवः देवेन हि पुष्पभूतिवंशसंभू
तस्या ऽभिजनस्या ऽभिजात्यस्य सहजस्य
तेजसो दिक्करिकरप्रलंबस्य बाहुयुगलस्या
साधारणस्य च सोदरस्नेहस्य सर्वं सदृश
मुपक्रांतं काकोदराभिधानाः कृपणाः क्रिम
योपि न मृष्यंति निकारं किमुत भवादृशा
स्तेजसां राशयः केवलं राज्यवर्धनोदन्तेन
कियदपि दृष्टमेव देवेन दुर्जनदौरात्म्यं
ईदृशाः खलु लोकस्वभावाः ॥

प्रचारोभक्षणं गज साधनानि करिसैन्यानि

प्रतिग्रामंप्रतिदिशंप्रतिनगरंप्रतिविषयंप्रति द्वीपंभिन्नावेशाश्चा काराश्चाहाराश्च व्यवहाराश्च जनपदानांतादियमात्मदेशाचारोचिता स्वभावसरलहृदयजा स्यज्यतां सर्वविश्वासिता प्रमाददोषाभिषंगेषु वहुश्रुतवार्त्त एव प्रतिदिनं देवःयथानागकुलजन्मनः प्लावितमंत्रस्या सीन्नाशो नागसेनस्य पद्मावत्यां शुकश्रुतरहस्यस्यच श्रीरशीर्यतश्रुतवर्मणः श्रावस्त्यां स्वप्नायमानस्य च मंत्रभेदो भून्मृत्यवे मृत्तिकावत्यांस्वर्णचूडस्यचूडामणिलग्नलेखप्रतिबिंबवाचिताक्षराच चारुचामीकरचामरग्राहिणी यमतां ययौयवनेश्वरस्य

अभिषंगाअभिभवाःप्रतिग्राममितिद् ३ उपक्रांतंनिदर्शयितुमाह यथेति अत्रकथा नागसेननामापद्मावत्यांराजा मंत्रिणमर्धराज्यहरमपाकर्तुंशारिकासमक्ष मंत्रमकरोत् सचापि मंत्रीशारिकामुखाद्विज्ञायविस्त्रंभपूर्वकंतं दंडेनावधीदिति श्रावस्त्यांचश्रुतवर्मा पूर्ववच्छुकश्रावितमंत्रोराज्याच्च्युताव अनेनच गूढमंत्रेण यत्नाद्भाव्यमित्युक्तं मृत्तिकावत्यांसुवर्णचूडोनामराजाकांचिद्विस्त्रंभपूर्वकं जिघृक्षन्मंत्रितव्यांस्तदेवतस्मै विललास ततस्तत्पूर्वंतत्प्रयुक्तेन विश्वासिना शिरोरक्षकेन स्वस्वामिप्रयुक्तेन व्यापादितइत्यनेन च कुलस्वभावाद्यपरीक्ष्य न कार्योभृत्य इत्युक्तं यवनेश्वरः केनचिच्छत्रुणासाद्यव्यापादितुमिष्टः स्वसुहृदा शत्रुद्रोहंलेखेन वोधितः लेखपृष्ठेच तेन लिखितं स्वयं वाचयितव्योलेख इति ततोयवनेश्वरस्य स्वयंवाचयतः चूडामणिप्रतिबिंबितान्यक्षराणिवाचयित्वातत्प्रहिता चामरग्राहिणी प्रभवे निवेद्य तदाज्ञया संजघानेति अनेन सूक्ष्मोपि रहस्यभेदहेतूरक्षणीय इत्युक्तम्

लोभवहुलंच वहलनिशि निधानमुत्खनंतमु त्खातखड्गप्रमाथिनी ममन्थमाधुरं वृहद्रथं विदूरथवरूथिनी नागवनविहारशीलंच मा यामातंगांगान्निर्गतामहासैनसैनिका वत्सप तिंन्ययंसिषुःअतिदयितलास्यस्यच शैलूष मध्यमध्यास्यमूर्धानमसिलतयामृणालमिवा लुनादग्निमित्रात्मजस्य सुमित्रस्यमित्रह्यामि त्रेदेवः प्रियतंत्रीवाद्यस्यालावुवीणाभ्यंतरसु षिरनिहितनिशिततरवारयोगांधर्वच्छात्रच्छ द्मानश्चिच्छिदुरश्मकेश्वरस्यशरभस्यशिरोरि पुपुरुषाःप्रज्ञादुर्वलंचवलदर्शनव्यपदेशदर्शि ताशेषसैन्यःसेनानीरनार्योमौर्यंवृहद्रथंपिपेष

विदूरथप्रयुक्तेन नरेन्द्रवृन्दप्रतारितोवृहद्रथोनाम राजालोभवशा त्खन्यवादेकृष्णनिशिप्रवृत्तः तत्सेनयाप्रहतइति अतःप्रवर्चितव्य मित्युक्तं महासेनोनामोज्जयिनीपतिः स्वदुहितरं वासवदत्ताख्या मुदयनायदित्सुःकपटजंनागवीथ्यांप्रसन्यच्छन्नप्रहितैःशैरनामगु णान्प्रख्याप्योदयनंलोभितवान्सोप्यविचार्यैवगजग्रहग्राहिकया कतिपयाप्तपरिवारोघोषवतींवीणामादाय तत्र गतः कपटकुंजरां तर्गतैर्महासेनसैनिकैःसंयतइति अतोनाल्पपरिवारैःसंवीक्ष्यचावि स्रब्धैर्भाव्यमित्युक्तंसुमित्रोराजामित्रव्यसनीस्त्रीजनपरिवारइवनट जनेविस्रब्धोमित्रदेवेननटत्वमाश्रित्यहतःसचयोगचूर्णावघूर्णित स्तिरोहितोवभूवेति अतोव्यसनिभिः प्रकृतलोकविश्वासिभिश्चन भाव्यमित्युक्तं शरभोतिशायितान्वाद्यवतःप्रवेशमदादितिगूढायुधै रिपुपुरुषैर्हतइत्यतोमनागपिव्यसनंवर्जनीयामित्युक्तं अकार्यमत्रप रदारगमनादि तरवारिःएकधारःखड्गः ६४ प्रज्ञेत्यादिमृष्टाकथा अनेनचभृत्यवलदर्शनमसन्नद्धेनंकार्यमित्युक्तंमौर्येमिति गोत्रनाम

पुष्पमित्रः स्वामिनं अकार्यकुतूहली च दंडो पनतयवननिमित्तेननभस्तलयायिना यंत्रयानेनानीयत क्वापि काकवर्णः शैशुनागिर्नगरोपकंठेकंठंचास्यनिचकृते अतिस्त्रीसंगरतमनंगपरवशं शुंगममात्यो वसुदेवो देवभूतिदासीदुहित्रा देवीव्यंजनयावीतजीवितमकारयत् असुरविवरव्यसनिनंचापजहुरुरपरिमितरमणीमणिनूपुरझणझणाह्लादरम्ययामागधं गोधनगिरिस्वरुंगयास्वविषयं मेकलाधिपमंत्रिणः महाकालमहेचमहामांसविक्रयवादवातूलं वेतालस्तालजंघोजघान जघन्यजंप्रतोद्यस्य पौणाकिंकुमारं कुमारसेनम् रसायनरसाभिनिवेशिनश्च वैद्यव्यंजनाः सुवहुप्रकाशांतरप्रकाशितौषधगुणा गणपतेर्विदेहराजसुतस्य राजयक्ष्माणमजनयन् स्त्रीविश्वासिनश्च महादेवीगृहगूढभित्तिभाग्भ्राता भद्रसेनस्याभवन्मृत्यवे कालिंगस्य ॥

काकवर्णोयवनान्विजित्य तैश्चस्वपुरुषानुपायनीकृत्ययंत्रयानैस्तद्वैः परदारादीन्गच्छन्यवनैरात्मदेशंप्रापय्य निहतइतिअतःशत्रुप्राभृतेषुभृत्येषुनविश्वसनीयामित्युक्तंदेवीव्यंजनयामहिषीव्याजयामेकलाधिपमंत्रिभिर्वांतिकच्छद्मभिराहिविवरं साधितंतपसास्माभिरित्युक्त्वामागधोगुहाद्वारमतिद्वारैर्बद्धोभूत्गोधनगिरिः सूर्याख्यः पर्वतःस्वरुंगाविवरंमेकलःविंध्याद्रिः महउत्सवः वातूलव्यसनोन्मत्तप्रायंजघन्यजंकनीयांसंपुणकोगोत्रविशेषःतत्रभवःपौणाकिः वैद्यकंव्यंजयंतिप्रकाशयंतीति वैद्यव्यंजनाःराजयक्ष्माणंक्षयरोगम्

वीरसेनोमातृशयनीयतूलिकातलनिषण्णश्च
तनयोन्यतनयमभिषेक्तुकामस्य दध्रस्य क
रूषाधिपतेः उत्सारकरुचिंच रहसि ससचिव
मेवदूरीचकारचकोरनाथं शूद्रकदूतश्चन्द्रके
तुं जीवितात् मृगयासक्तस्यचमथ्नतोगंडका
नुद्दंडनडूवलनलवननिलीनाश्च चंपाधिपच
मूचरभटाश्चामुंडीपतेराचेमुः प्राणान्पुष्कर
स्य वन्दिरागपरंच परप्रयुक्ता जयशब्दमुख
रमुखामंखामौखरिं मूर्खंक्षत्रवर्माणमुदखनन्
अरिपुरेच परकलत्रकामुकं कामिनीवेशगुप्त
श्चचंद्रगुप्तःशकपतिं शशासेतिप्रमत्तानांप्रम
दाकृताःप्रमादाः श्रुतिविषयमागता एव देव
स्य यथा मधुमोचितमधुरकसंलिप्तै र्लाजैःसु
प्रभा पुत्रराज्यार्थं महासेनं काशिराजंजघान
व्याजजनितकंदर्पदर्पाचदर्पणेनक्षुरधारापर्यं
तेनायोध्याधिपतिं परंतपं रत्नवती जारूथ्यं
चूर्णचुंवितमकरन्देनचकर्णेन्दीवरेण देवकी
देवरानुरक्ता देवसेनं सौह्मम्

दध्राख्यस्यकरूषाधिपतेःपितुस्तनयोमृत्यवेऽभवदिति प्राक्तनक्रिय यासंगतिः६५गंडकाःखड्गाद्याःप्राणिनः चामुंडीतिनगरीनाम आचेमुरभक्षयन्शकानामाचार्यःशकाधिपतिः चंद्रगुप्तभ्रातृजायां ध्रुवदेवींप्रार्थयमानश्चंद्रगुप्तेनध्रुवदेवविवेशधारिणास्त्रीवेशजनपरिवृ तेनरहसिव्यापादितइतिमधुरकंविषं परंतपप्रतापवंतंजारूथ्यमि तिजघानेति प्राक्तन्येव क्रियोत्तरत्रच चूर्णविषक्षोदः मकरन्दः पुष्परसःदेवरः कनीयान्भ्राताभर्तुः

योगपरागविसरवर्षिणा च मणिनूपुरेण वत्सभा सपत्नीरुषा वैरंत्यां रन्तिदेवं वेणीनिगूढेन च शस्त्रेण विंदुमती वृष्णिं विदूरथं रसदिग्धमध्येन च मेखलामणिना हंसवती सौवीरं वीरसेनं अदृश्यागदलिप्तवदना च विषवारुणीगंडूषपायनेन पौरवी पौरवेश्वरं सोमकमित्युक्त्वा विरराम स्वाम्यादेशसंपादनाय निर्जगाम देवोपि हर्षः सकलराज्यस्थितीश्चकार ततश्च तथाकृतप्रतिज्ञे प्रयाणं विजयाय दिशां दित्सति देवे हर्षे हतायुषां प्रतिसामंतानामुदवसितेषु बहुरूपाण्युपलिंगानि वितेनिरे तथाहि प्रविष्टकालदूतदृष्टय इव इतस्ततश्चेरुश्चटुलाः कृष्णशारश्रेणयः प्रचलितलक्ष्मीनूपुरप्रणादप्रतिमा मधुसरघासंघातझांकारा जहादिरे चिरं विवृतविकृतवदनविवरविसृतवह्निविसरा वासरेपि विरसं विरेसुरुपशिविरं शवार्थमशिवाः शिवाः शवपिशितप्ररूढप्रसरा इव कपिपोतकपोलकपिलपक्षतयः काननकपोताः पेतुः आमंत्रयमाणा इव दधुरकालकुसुमानि समम्रुपवनतरवः

योगपरागो भिचारचूर्णं वैरंती नाम नगरी रसादिग्धं विषोपलिप्तं अगदो विषहरद्रव्यसमूहः वारुणी सुरा ६६ उदवसितेषु गृहेषु उपलिंगान्यानामित्तानि सरघा मधुमक्षिकाः काननकपोता गृध्राः ६७

तरलकरतलप्रहारप्रहतपयोधरारुरुदुः प्रस
भंसालभंजिकाः ददृशुरासन्नकचग्रहभयोद्भ्रां
तोत्तमांगमिवात्मानं कवंधमादर्शोदरेषुयोधाः
चूडामाणिषु चक्रशंखकमललक्ष्माणः प्रादुर
भवन्पादन्यासाराजमहिषीणां चेटीचामरा
एयकस्मादधावन्त पाणिपल्लवाः प्रणयकल
हेपिदत्तपृष्ठाश्चिरमभवन्भटाःपराङ्मुखामा
नीनां करिकपोलेषु व्यघटंत मधुलिहां मधु
मदिरापानगोष्ठ्यः समाघ्रातयममहिषगंधाइ
वतप्यंतः स्तंवकरिमपि हरयोहरितं नवयव
सं न चेरुः चलवलयावलीवाचालवालिकाता
लिकातोद्यलालिताअपि न नन्तुर्मन्दामान्दि
रमयूराः निशि निशि रजनिकरहारिणानिहि
तनयन इव उन्मुखस्तारमुपतोरणमकार
णमकाणीत्कौलेयकगणः

व्यघटंत आसन् स्तंवकरिं वद्धस्तंवं पक्वंवा हरयोहयाःअक
णीदध्वान कौलेयकाः श्वानः ॥

गणयंतीव गतायुषस्तर्जनतरलया तर्जन्या दिवसमार वाटकेषुकोटवी कुट्टिमेषु कुटिलह रिणखुरवेणीतरंगिण्यः शष्पराजयोजायंत जनितवेणीवंधानि निरंजनरोचनारोचींषि च षणमधुनि मुखनालप्रतिविंबान्यदृश्यन्त भ टीनांसमासन्नात्मापचकिताइव चकंपिरे भूम यःवंध्यालंकाररक्तचन्दनरसच्छटाइवालक्ष्यं तशूराणांपतिताः शरीरेषु विकसितवंधूककु सुमशोणितशोचिषः शोणितवृष्टयःपर्यग्नी कुर्वाणाइव विनश्वरींश्रियंअविरलस्फुरत्स्फु लिंगांगारोद्गारदग्धतारागणागणशःपतन्तः प्रज्वलंतोनव्यरंसिषुरुल्कादंडाः प्रथममेवप्र तीहारीव तरंती प्रतिभवनं चामशतपत्रव्य जनानिपरुषा वभ्रामवात्येति इतिश्रीवाण भट्टविरचिते हर्षचरितेमहाकाव्येराजप्रति ज्ञानामषष्ठउच्छ्वासः ॥ ६ ॥ *

आर वभ्राम कोटवी नग्नास्त्री शष्पं बालतृणं वंधूकंवंधुजीवः अपरिगताग्निंपरिगताग्निकुर्वाणाः अग्नौसमंतात्क्षिपंतःव्यरंसिषु निववृतिरे ॥ इतिश्रीशंकरकविवरविरचितेहर्षचरितसंकेतेराज प्रतिज्ञानामषष्ठउच्छ्वासः ॥६ ॥ *

उर्व्यंगनवेदीवसुधाकुल्याजलधिः स्थलीच पातालम् वल्मीकश्चसुमेरुः कृतप्रतिज्ञस्य वीरस्य १ धृतधनुषिवाहुशालिनिशैलाननमं तियत्तदाश्चर्यं रिपुसंज्ञकेषुगणना कैववराकेषुकाकेषु २ अथ व्यतीतेषुच केषुचिद्दिवसेषुमौहूर्त्तिकमंडलेन शतशःसुगणिते सुप्रशस्तेहनिदत्तेचतसृणामपि दिशांविजययोग्ये दंडयात्रालग्ने सलिलमोक्षविशारदैः शारदैरिवांभोधरैःकालधौतैः शातकौंभैश्चकुंभैः स्नात्वाविरचय्य परमया भक्त्या भगवतोनीललोहितस्यार्चां उदर्चिषं हुत्वाप्रदक्षिणावर्त्तशिखाकलापमाशुशुक्षणिंरजतजातरूपकृत पत्रलताशफशृंगशिखराः

उर्व्यंगनेत्यादिना उद्योगितां सूचयति शूराहिस्वशौर्यमात्रेणावर्जितत्रिभुवनाधिपत्या नतु तेषां सामग्र्यंतरप्रयोजनं तथा चाह कृतप्रयत्नस्य वीरस्य सर्वाभूरंगनवेदीत्यनायासेनाक्रमणात् अनेनेदमपि प्रतिक्षिप्तं कदाचित्कश्चिद्ब्रूयादभिमानान्मोहाद्दत्यंहर्षेणप्रतिज्ञातमन्यथा गिरिगुहादौपलायितंहर्षःकथंपरिभवेत् कथंच वहुपालितामुर्वीमेकोजयेदिति तन्न यतोंगनवेदीत्यादि नन्वेवमपितत्तुल्योवीरोनभवेदित्याह धृतेत्यादि २ अथेत्यादौ भवनान्निर्जगामेति संवन्धः मौहूर्त्तिकागणकाः दंडश्चतुरंगवलं तस्य यात्रागमनं तत्र लग्नोमेषादिस्तस्मिन् विशारदैः प्रवीणैःशुक्लैश्च कालधौतैः कालवशेनधौतैश्च शातकौंभैः सौवर्णैः नीललोहितः असितरक्तः आशुशुक्षणिमग्निं रजतं रौप्यंजातरूपंसुवर्णं पत्रलतापत्रभंगःशफाःखुराः

गाश्चार्बुदशः समुपविश्य विततव्याघ्रच
र्माणि भद्रासने विलिप्य प्रथमविलिप्ता
युधो निजयशोधवलेनाचरणतश्चन्दनेन
शरीरं परिधायराजहंसमिथुनलक्ष्मणीसद
शेदुगूले परमेश्वरचिन्हभूतां शशिकला
मिवकल्पयित्वा सितकुसुममुंडमालिकां शि
रसि नीत्वा कर्णाभरणमरकतमयूखमिवक
र्णगोचरतां गोरोचनाच्छुरितमभिनवं दूर्वा
पल्लवं विन्यस्य सह शासनवलयेन गम
नमंगलप्रतिसरं प्रकोष्ठे परिपूजितप्रहृष्टपुरो
हितकरप्रकीर्यमाणशांतिसलिलशीकरा भ्यु
क्षितशिराः संप्रेष्य महार्हाणि वाहनानि व
हलरत्नालोकलिप्तककुंभिच भूषणानि भूभु
जांसंविभज्याक्लिष्टकार्पटिककुलपुत्रलोकमोचि
तैःप्रसाददानैश्च विमुच्यबंधनानिनियुज्यत
त्कालस्मरणस्फुरणेन कथितात्मानामिवचा
ष्टादशद्वीपजेतव्याधिकारे दक्षिणं भुजस्तंभं
अहमहमिकयासेवकैरिव सुनिमित्तैरपिसम
ग्रैरग्रतोभवद्भिःप्रमुदितप्रजाजन्यमानजयश
ब्दकोलाहलः हिरण्यगर्भइवब्रह्मांडात्कृतयु
गकरणाय भवनान्निर्जगाम

अर्बुदं दशकोटयःनृपासनं भद्रासनंसिंहासनंतुतद्धैमामिति ६१
परमेश्वरोराजा हरश्च शासनवलयेनमुद्राकटकेनप्रतिसरंकंकणं

नातिदूरेच नगरादुपसरस्वतिनिर्मितेतृणम येसमुत्तंभिततुंगतोरणे वेदीनिहितपल्लवलला महेमकलशे बद्धवनमालाधाम्निधवलध्वजमालिनेभ्रमच्छुक्लवासःसिपठद्द्विजन्मनि मन्दिरेप्रस्थानमकरोत् तत्रस्थस्यचास्यग्रामाक्षपटालिकः सकलकरणिपरिकरः करोतु देवोदिवसग्रहणमद्यैवाबंध्यशासनःशासनामित्यभिधाय वृषांकमभिनवघटितां हाटकमयींमुद्रामुपनिन्येजग्राहचतांराजासमुपस्थापितेच प्रथमतएव मृत्पिंडेपरिभ्रश्यकरकमलादधोमुखी महीतलेपपात मुद्रामंदाश्यानपंकपटलेमृदुमृदिसरस्वतीतीरे स्फुटमव्यंजंतराजयोवर्णानां अमंगलाशंकिनिचविषीदतिपरिजनेनरपतिरकरोन्मनस्येतत् अतत्त्वदर्शिन्योहिभवंत्यविदग्धानांधियःतथाहि एकशासनमुद्रांकाभूर्भविष्यतीतिनिवेदितमपिनिमित्तेनगृह्णंतिग्राम्याःइत्यभिनंद्यमनसा महानिमित्तंतत् सीरसहस्रसंमितसीम्नां ग्रामाणांशतमदाद्द्विजेभ्य निनायचतत्रतांदिवसम्

ललामंचिन्हंललामंपुच्छपुंड्राश्वभूषाप्राधान्यकेतुषु ७० वनमालापुष्पपत्रप्रतियेःजितास्रक् अक्षाणांभूतानांपटलेसमूहेनियुक्तोक्षपटालिकः ग्रामाणामक्षपटलिकः करणिलेख्यं कायस्थइत्यन्ये मुद्रावालिकामन्दाश्यानमीषच्छुष्कं एकशासनमुद्रैवांकेयस्याः सा सीरंहलं सम्मितंपरिच्छिन्नं ॥ ७१ ॥

प्रतिपन्नायां शर्वर्यां संमानितसर्वराजलोकः सुष्वापअथगलतितृतीये यामेसुप्तसमस्तस स्वनिःशब्दे दिक्कुंजरजृंभमाणगंभीरध्वनिर ताडयत प्रयाणपटहःअग्रतः स्थित्वाचमुहूर्त्त मिवपुनःप्रयाणक्रोशसंख्यापकाः स्पष्टमष्टा वदीयंत प्रहाराः पटहे पटीयांसः ततोरटत्प टहे नन्दन्नान्दीकेगुंजत्कुंजेकूजत्काहलेशब्दा यमानशंखे क्रमोपचीयमानकटककलकले परिजनोत्थापनव्यापृतव्यवहारिणि द्रुतद्रु घनघातघट्ट्यमानकोणिकाकलि कोलाहलक लितककुभि वलाधिकृतवध्यमानपाटीपतिपेटके जनज्वलितोल्कासहस्रालोकलुप्यमानात्रियामा तमसि यामचेटीचरणचलनोत्थाप्यमानकामिमि थुने कटुकटुकनिर्देशनश्यन्निद्रोन्मिषन्निषादिनि प्रबुद्धहास्तिकशून्यक्रियमाणशय्यागृहे

अष्टक्रोशाअग्रगंतव्यमितिप्रायेणक्रोशसंख्यापकाः ततइत्याद। वेवंविधप्रयाणसमयेराजभिरापुपूरेराजद्वारमितिसंबंधःनान्दीमंग लपटहः गुजासंज्ञः शंखभेदोयत्पृष्ठेजतुपरिकालितंभवतिसन्नाड़ तियस्यप्रसिद्धिः शंखश्चमुंडशंखइतिप्रसिद्धः द्रुघनोयस्ताडनभां डंकोणिकाः पटहकुटयादिकेषु याः कालिकाः पाटी वहुपरि वारपुरुषगृहीतोनिवासभूभागःकुलपुत्रकसमूहइत्यन्येपटकंतत्स मूहः पाटीपतीतिपाठेपाटीपतयः प्रतिनियतस्वस्थानपरिरक्षि णः उल्कादीपिका यामचेटी प्रहरजागरणनियुक्ता तत्क्षणंचर णचरणंपादेषुस्पर्शः कटुकाणांहास्तिपकयोक्राणांयःकटुकः रूक्षो निर्देशःआज्ञा।निषादिनांहस्त्यारोहाणाम् हास्तिकंहस्तिसमूहः

सुप्तोत्थिताश्वीयविधूयमानसटेरटत्कटकमु
खरखनित्रखन्यमानक्षोणीपाशेसमुत्कील्य
मानकीलशिंजानहिंजीरेउपनीयमाननिग
डतालककलरवोत्तालतुरंगतरंग्यमाणखुरप
टेलेशिकमुच्यमानमदरूपंदिदंतिसंदानशृंख
लाखनखननिनाद.निर्भरभरितदशदिशिघा
सपूलिकप्रहार प्रमृष्टपांसुलकारिपृष्टप्रसार्य
माणप्रस्फोटितप्रमृष्टचर्माणिगृहाचितकचेटक
संवेष्ट्यमानपटकुटीकांडपटमंडपपरिवस्त्रावि
तानके कीलककलापापूर्यमाणचिपिटचर्मपुटे
संभांडायमानभांडागारिणि भांडागारवहनवा
ह्यमानवहुनालीवाहिके निषादिनिश्चलानेका
नीकपारोप्यमाणकोशकलशपीडा पीडसंकटा
यमानसामंतौकसि दूरगतदक्षदासेरकाक्षिप्र
क्षिप्यमाणोपकरण संभारभ्रियमाणदुष्टदंतिनि

अश्वीयमश्ववृंदंक्षोणीपाशोभूम्यानिबंधनं समुत्कील्यमानान्यु
त्खन्यमानानि हिंजीरं लौहीशृंखला निगडार्थतालकंतालपत्र
निगडतालकंलौहएवाश्वबंधनविशेषइत्यन्येतरंग्यमाणाः कुटि
लीक्रियमाणाः लेशिकाघासिकाः संदानशृंखलाबंधनादकः
प्रस्फोटितंविपूरितंप्रमृष्टंशोधितं ॥ ७२ ॥ पटकुट्यादयःस्कं
धावारसरणिकाभेदाःतथाच पटैःकुटीसूक्ष्मगृहंकांडपटकंकां
डैःपटैश्च गृहं परिवस्त्रातिरस्कारिणीवितानकोरकक:चिपिटोह्
स्तःचर्मपुटश्चर्मप्रसेवकःसंभांडायमानोभांडानिसमाचिन्वन्भां
डादसमाचयनइतिणिच्संवाह्यमानाः प्राप्यमानाः नालीवाहि
कःकरिणांचासग्रहणानियुक्तोहस्तिपकोमेंठाख्यः

तिर्यग्गानमज्जाघनिक करकृच्छ्राकृष्टलंबमान परतंत्रतुंदिलचुंदीजनजनितजनहासेपीड्यमानशारशारिवरत्रागुणग्राहितगात्र विहारेण बृहद्बृहुबृहदुन्मदकरिणि करिघटाघटमानघंटाटांकारक्रियमाणकर्णज्वरे पृष्ठप्रतिष्ठाप्यमाणकंठालक कदर्थितकूजत्करभे अभिजातराजपुत्रप्रेष्यमाणकु प्रयुक्ताकुलकुलीनकुलपुत्रकलत्रवाहने गमनवेलाविप्रलब्धवारणाधोरणान्विष्यमाणनवसेवके प्रसादावित्तपत्तिनीयमाननरपतिवल्लभवारवाजिनि चारुचारभटसैन्यन्यस्यमाननासीरमंडलाडंबरस्थूलस्थासके स्थानपालपर्याणलंबमानलवणकलायीकिंकिणीनालीसनाथसंकलिततलसारिके ॥

चुंदी कुट्टनी शारिर्मंजरी हस्तिपर्याण मित्यर्थः तत्स्थैः पीड्यमानदामभिर्ग्राहितेन गात्रविहारेण देहकंपेन बृंहंतः शब्दायमानाः करिणो यत्र तस्मिन् प्रसादेनावित्ताः पत्तयः वारोवसरः निवहावसरौ वार इत्यमरसिंहः तत्र वाजिनो ये सेवकानां प्रत्यवसरं विसृज्यंते वरेति पाठः चारुचारभटसैन्येन न्यस्यमाना आस्मानएव क्रियमाणा नासीरेण कर्पूरेण मंडलाडंबरार्थः स्थूलाः स्थासकाः चंद्रका यत्र अन्ये नासीरमग्रे सरमाहुः स्थानपालानां पर्याणेषु लंबमाना लवणकलायी किंकिणी नालीसनाथा संकलिता तलसारिका यत्र ७३ स्थानपालाः अश्वपालाः अश्वभांडागारिका इत्यन्ये लवणकालायी मृगाकृतिरश्वानां दारुमयी क्रियते किंकिण्यः सूक्ष्मघण्टाः नाली प्रधानार्थं वैणवी नाडिरुच्यते तरसारिका अश्वमुखपट्टिका वर्णादि सूत्रमयी उरःपट्टिकेत्यन्ये

कुंडलीकृतावरक्षणी जालजटिलवल्लभपाला श्वघटानिवेश्यमानशाखामृगे परिवर्धकाकृष्यमाणार्धजग्धयोग्याशनप्रारोहकेव्याक्रोशी जृंभमाणघासिकघोषे गमनसंभ्रमभ्रमदुत्तुंडतरुणतुरंगमतन्यमानानेकमन्दुराविमर्दे सज्जीकृतकरेणुकारोहाह्वानसत्वरसुंदरीदीयमान मुखालेपने चलितमातंगतुरंगप्रधावितप्राकृतप्रातिवेशिकलोकलुंठ्यमाननिर्घाससस्यसंचये संचरच्चेलचक्राक्रांतचक्रीवति चक्रचीत्कारिगंत्रीगणगृह्यमाणप्रहतवर्त्मनि अकांडदीयमानभांडभरितानडुहि निकटघासलाभलुभ्यल्लंवमानप्रथमप्रसार्यमाणसारसौरभेये प्रमुखप्रवर्त्यमान महासामंतमहानसे पुरःधावद्वजवाहिनि

कुंडलीकृतैरवरक्षणीजालैर्जटिला वल्लभपालायासु तास्वश्वघटासुनिवेश्यमानाःशाखामृगायासु अवरक्षणी अश्वबंधनरज्जुःवल्लभपालोश्वपालः अन्येतु योवलवान् महाकारोहयोपकरणं यवसतंडुलादि वहति सवल्लभपालोऽश्वपाल इत्याहुः शाखामृगोवानरोरक्षार्थमश्वानां परिवर्धकोश्वपालःप्रौढिको योग्याशनार्थं प्रसेवको योवुकण इतिप्रसिद्धः व्याक्रोशी परस्पराह्वानं उत्तुंडाउत्प्रोथा मुखालेपनं सिंदूरादिना करेणुकार्थमेव प्रातिवेशिकलोकाः प्रत्यासन्ननिवासाजनाः निघासोभुक्तशेषो घासः चेलवस्त्रंवालकोवाचेलः चक्रीवान्गर्दभः उष्ट्रोवा गंत्री शकटिका गृह्यमाणमधिष्ठीयमानं प्रहतं क्षुण्णं सर्वसेवितमित्यर्थः लंवमानोगर्दभदासोवणिजां कर्मकरोवा सारसौरभेयो वलवाननड्वान् प्रमुखेऽग्रे महानसं सूपकारशाला

प्रियशतोपलभ्यमानसंकटकुटीरकांतरालनिः सरणे करिचरणचलितमाठिकोत्थितलोकलोष्टहन्यमानमेठक्रियमाणासन्नसाक्षिणि ॥ संघट्टविघट्टमानव्याघ्रपल्लीपलायमानक्षुद्रकुटुंबके कलकलोपद्रवद्रवद्द्राविणवलीवर्दविद्राण वणिजि पुरः सरदीपिकालोकविरलायमानलोकोत्पीडाप्रस्थितांतःपुरकरिणीकदंबके हयारोहाहूयमानलंवितशुनि सरभसचरणनिपतननिश्चलगमन सुखायमानखक्खटस्तूयमानतुंगतंगनगुणे स्त्रस्तवेसरविसंवादिसीदद्दाक्षिणात्यसादिनि रजोजग्धजगति प्रयाणसमये प्रतिदिशमागच्छद्भि र्गजवधूसमारूढैराधोरणैरूर्ध्वंध्रियमाणहेमपत्रभंगशारशार्ङ्गै रंतरासनासीनां तरंगगृहीतासिभि स्तांवूलिकविधूयमानचामरपल्लवैः पश्चिमासनिकार्पितभस्त्राभरणभिंदिपालपूलिकैः पत्रलताकुटिलकलधौतनलकपल्लवितपर्याणैः ॥

कुटीरंमाठिकास्वल्पगृहं मेठोजागारिकः व्याघ्रपल्ली तृणकुटीभेदः क्षुद्रमल्पं कुटुंबकं परिवारःविद्राणाः सशोकाः ७४ लंविताः पश्चात्खचिताःखक्खटावृद्धाःतुंगाउच्चाः तद्देशजोश्वा अश्वस्तंगतः विसंवादोपरिशीलनंदाक्षिणापथेवेसरानसंतीत्यहष्टदेशाःसादिनोश्वारोहाःभस्त्राभरणं तूणभेदःभिंदिपालः शरभेदःतोमरइत्यन्ये ॥

पर्याणपक्षकपरिक्षेपपाट्टिका वंधनिश्चलपट्टोप धानस्थिरावधानैः प्रचलपादफालिकास्फालन स्फायमानपदवंधमणिशिलाशब्दैः उच्चित्रनेत्र सुकुमारस्वस्थानस्थगितजंघाकांडैश्च कार्दमि कपटकल्माषितपिशंगासितांगैरलिनीलमसृण सतुलासमुत्पादितसितसमायोगपरभागैश्च अवदातदेहविराजमानराजावर्त्तमेचकैः कंचुकैश्चा पचितचीनचोलकैश्च तारामुक्तस्तवकितस्तव रकवारवाणैश्च नानाकषायकर्बुरकुर्पासकैश्च शुकपिच्छच्छादनकैश्च व्यायामोल्लुप्तपार्श्वप्र देशप्रविष्टचारुशस्तैश्च गतिवेशवेल्लितहारल तागलल्लोलकुंडलोन्मोचनप्रधावितपरिजनैः

पक्षकः प्रांतः पार्श्वंवा परिक्षेपोवेष्टनंपादफालिका उभयपार्श्वयोः पर्याणे याक्रियते आगुल्फंपादत्राणमित्यन्ये आस्फालनंचालनं स्फायमानोवर्धमानः पादवंधः पादकटकः नेत्रं पटविशेषः स्व स्थानं स्वस्थानेति यस्याः प्रसिद्धिः कार्दमिकंकर्दमेनरक्तंकल्माषि ताःशवलिताः पिशंगालोहिताःपिंगाजंघिकाअन्येजंघालाइत्या हुः सतुलाअर्धजंघिकाइत्यन्ये अर्धजंघालेत्याहुः समायोगो व्यापृतकेषु प्रसिद्धःपरभागो वर्णस्य वर्णांतरेण शोभातिशयः रा जावर्त्तः कृष्णपाषाणः मेचकः वर्हिकंठवर्णःकंचुकोवारवाणोस्त्री अपचितंपरिहितंपूजितंवाचायृपूजानिशामनयोरित्यस्यापचितश्चे तिनिपानाद्रूपंताराःशुद्धाःस्तवकिताःसंजातपुष्पनिकुरुंवाकाराः ७५ स्तवरकोवस्त्रभेदः वारवाणः कंचुकः कर्बुरःकपोतकंठवर्णः कुर्पासकाःचोलकाः पिच्छानिपक्षाः आच्छादनमुत्तरीयंउल्लुप्तस्त नूकृतःशस्तं शाटिकाडोरःकटीसूत्रमित्यर्थः ७६ वेल्लिताःचालिताः

चामीकरपत्रांकुरकर्णपूरकविघट्टमानवाचालवालपाशैश्चोष्णीषपट्टावष्टब्धकर्णोत्पलनालैश्च कुंकुमरागकोमलोत्तरीयांतरितोत्तमांगैश्च चूडामणिखंडखचितक्षौमखोलैश्च मायूरपत्रायमानशेखरषट्पदपटलैश्च मार्गागतशारिकशारिवाहवेगदंडैः पुरश्चंचच्चामरकिर्मीरकार्दरंगचर्ममंडलमंडनोड्डीयमानचटुलडामरचारभटभरितभुवनांतरैरास्कंदत्कांवोज वाजिशतशिंजानजातरूपायानरवमुखरितादिङ्मुखैश्च निर्दयप्रहितलंवापटहशत पटुरववधिरीकृतश्रवणविवरैः उद्घोषमाणनामभिरुन्मुखपादातप्रतिपाल्यमानाज्ञापातै राजभि रापुपूरे राजद्वारम् उदिते च भगवति दिनकृति राज्ञः समायोगग्रहणसमयशंसी सस्वान संज्ञाशंखो मुहु र्मुहुः ॥

कर्णाभरणभेदः वालपाशः कोमलं संच्छायं अंतरितमाच्छादितं खोलः शिरस्त्रं मायूरपत्रायमानं वेगदंडस्तरुणोहस्ती किर्मीराणि शवलानि कार्दरंगकानि कार्दरंगदेशोद्भवानि वहुसुवर्णसूत्ररचितानि चर्माणि स्फोटकाः स्निग्धवर्णमांसस्फाराणि कार्दरंगचर्माणि डामराउद्भटाः चारभटाःशूराः आस्कंदंतः चलंतः कांवोजाः वाह्लीकदेशजाः आयानमश्वभूषणं लंवापटहाः पटहभेदास्तमिला इतिप्रसिद्धाः संज्ञा संकेतः ॥ ॥

अथच नचिरादेव प्रथमप्रयाणएव दिग्विज
याय दिग्गजसमागमभिवगमनविलोलकर्ण
तालदोलाविलासैःकुर्वाणया करेणुकयाउह्य
मानोवैदूर्यदंडविकटेनोपरिप्रत्युप्तपद्मरागखं
डखचिततया सूर्योदयदर्शनकोपादिव लो
हितायतया ध्रियमाणेन मंगलातपत्रेण कद
लीगर्भाभ्यधिकम्रदिम्ना नवनेत्रनिर्मितेनद्वि
तीयइवभोगिनामधिपतिरंगलग्नेन कंचुकेन
अमृतमथनदिवस इव क्षीरोदफेनपटलधव
लांवरवाहीवालएव पारिजातपादपइवाखंड
लभूमिमारूढोविधूयमान चामरमरुद्विधूतक
र्णपूरकुसुममंजरीरजसासकलभुवनवशीकर
णचूर्णेनेव दिशश्छुरयन् अभिमुखचूडामणि
घटमानपाटलप्रतिबिंबमुदयमानं सवितारम
पि पिबन्निव तेजसातांबूलसिंदूरच्छुरितयावि
लभमानइवद्वीपांतराण्ययाष्वमुद्रया अनुरागस्य
स्फुरन्महाहारमरीचिचक्रवालानि चामराणी
व दिशो पि ग्राहयन् राजकेक्षणोत्क्षिप्तत्रिभा
गया त्रीनपि लोकान्करदानाया ज्ञापयन्निव

अथेत्यादौ दिग्विजयाय निर्जगाम नरपतिरितिसंबंधः ७७ मंग
लातपत्रेण कंचुकेन नतूत्प्रेक्ष्यतेद्वितीयइवभोगिनामीशइति
योजना यद्वा मंगलातपत्रेणेति इत्थंभूतलक्षणे तृतीया अंबरंवस्त्रं
नभश्च विलभमानोर्थिसान्कुर्वन् मुद्रयाहिसासिंदूरया विलभ्यते

सविभ्रमंभ्रूलतया द्राघीयसावाहुप्राकारेण प
रिक्षिपन्निव रिरक्षया सप्तापिसागरमहाखा
तान् अखिलामिवक्षीरोदमाधुर्यमादायोद्गत
या लक्ष्म्या समुपगूढो गाढं अमृतमयइवपीय
मानः कुतूहलोत्तानकटकलोकोत्तानकटकलो
कलोचनसहस्रैः स्नेहार्द्रेषुराज्ञांहृदयेषुगुणगौ
रवेनमज्जन्निवलिंपन्निवसौभाग्यद्रवेणद्रष्टॄणां
अमरपतिरिवा ग्रजबधकलंकप्रक्षालनाकुलः
पृथुरिवपृथिवीपरिशोधनावधानसंकलितस
कलमहीभृत्समुत्सारणः पुरःसरैरालोककार
कैः सहस्रसंख्यैरर्क इव किरणैःअधिकारचा
तुर्यचंचलचरणैर्व्यवस्थास्थापननिष्ठुरैः भय
पलायमानलोकोत्पीडान्तरितादशापिदिशो
ग्राहयद्भिरिव चलितकदलिकासंपातपीतप्र
चारंपवनमपिविनयेस्थापयद्भिरिवद्रुतचरणो
द्धूनधूलि पटलावधूतान्दिनकरकिरणानप्यु
त्सारयद्भिरिवकनकवेत्रलतालोकविक्षिप्यमा
णं दिनमपि दूरीकुर्वद्भिरिवदंडिभिरितस्ततः
समुत्सार्यमाणजनसमूहोनिर्जगामनरपतिः

परिक्षिपन्वेष्टयन् ७८ अग्रजोज्येष्ठोराज्यवर्धनोद्विजश्च पुराब्रा
ह्मणःकिल सुतोसुरपक्षपाती त्रिशिरास्तद्भ्राताच वृत्रस्तौतपस्यं
तौशक्रेणहताविति महीभृतोराजानःपर्वताश्च पृथुनाह्यद्रयोभूमि
मास्तीर्यस्थिताश्चापकोटचा समुत्सार्यतेप्रक्षिप्ताः लोकइत्येवंयेव
दंतिते आलोककारकाः तैरन्यत्रालोकःप्रकाशःपुरःसरैःसहस्र
संख्यैरितिचसाधारणं दिशोग्राहयद्भिः पर्यंतेषुचाविसर्जयद्भिः ७९

अवनमति च विनयनमितवपुषि भयचकितम
नसि चलनशिथिलमणिकनकमुकुटकिरणनि
कररुचिरशिरसिविलुलितकुसुमशेखररजसि
राजचक्रे प्रभामुचां चूडामणीनां अवांचस्ति
र्यंचउदंचश्च चंचंतोमरीचयः चापराशयइव
सुशकुनसंपादनाय चेलुःमेघायमानरेणुमेदु
रमन्दिरशिखंडिनइव खमुड्डीयंतः कोमलक
ल्पपादपपल्लववंदनमालाकलापा इवावध्यं
त दिग्द्वारेषुदिक्पालैःप्रणम्यमानश्चनेत्रत्रि
भागैश्च कटाक्षैश्च समग्रेक्षितैर्भ्रूवंचितैश्चा
र्धस्मितैश्च परिहासैश्च छेकालापैश्च कुश
लप्रश्नैश्च प्रतिप्रणामैश्चोन्मत्तभ्रूवीक्षितै
श्च आज्ञादानैश्चाक्रीणन्निव मानमयान्प्रा
णान्प्रणयदानैः प्रवीराणां वीरोयथानुरूपं
विबभाजराजकम् अथप्रस्थितेराजनिकल
कलत्रहृतादिङ्नागशूत्काररव इवेतस्ततस्त
स्तार तारतरस्तूर्याणां प्रतिध्वनिराशातटेषु
दिग्गजेभ्यः प्रकुपितानां त्रिप्रस्रुतानांकरि
णां मदप्रस्रवणवीथीभिरलिकुलकालीभिः
कालिंदीवेणिकासहस्राणीव सस्यंदिरे

उदंचऊर्ध्वप्रसारिणः चापराशयइवेत्याद्युत्प्रेक्षात्रयंसमीचीनं उ
ड्डीयंतःप्रसृताःकटाक्षैरपांगदृष्टैः भ्रूवंचितैः भ्रूचलितैःभ्रूवांचितै
रितिपाठेउन्नतकभ्रूक्षितैरित्यर्थःछेकालापैर्वक्रोक्तिभिःछेकोंतरां
तरावातरतारेतिविस्तृतोभवत्त्रिप्रस्रुतानांत्रिषुगंडादिषुमदमुचां

सिंदूररेणुराशिभिररुणायमानबिंबरवावस्त
मयसमयं शशंकिरे शकुनयः करिणां षट्प
दकोलाहलमांसलैः कर्णतालनिःस्वनैस्ति
रोदधिरे दुन्दुभिध्वनयःदोधूयमानश्च सच
राचरमाचचाम चामरसंघातो विश्वं अश्वीय
श्वासानिक्षिप्तैःशिञ्जिन्दसिंधुवारदामशुचिभि
र्निरंतरमंतरिक्षं फेनपिंडैः पिंडीभूततगरस्त
बकपांडुराणिपपुरिव परस्परसंघट्टनष्टाष्टदि
शिदिवसमुच्चचामीकरदंडातपत्रवनानिरजो
रजनीनिमीलितामुकुटमणिशिलावलीबाला
तपेनविचकासवासरःराजतैर्हिरण्मयैश्चमंड
नकभांडमंडलैर्ह्रादमानैर्हरितीकृताः परिह्रा
दाहरितो वधिरतांदधुः अरिप्रतापानलनिर्मू
लनायेव मह्योष्मशीकरैःशिशीकिरेकरिणःक
कुभांचक्रं चक्षुषामुन्मेषमुमुषुस्तडिच्चचलानि
चूडामणीनामर्चींषिस्वयमपिविसिस्मिरेवला
नांभूपालःसर्वतोविक्षिप्तचक्षुश्चाद्राक्षीदावा
सस्थानसकाशात्प्रतिष्ठमानंस्कंधावारम् अ
धोक्षजकुक्षेरिवयुगादौनिष्पततंजीवलोकम्
अंभोनिधिमिव कुंभभुवो वदनात्प्लावितभुव
नमुद्वसंतं अर्जुनवाहुदंडसहस्रसंपिंडितमिव

शकुनयोत्र चक्रवाकाः ८०मंडनकमायानं स्याद्भांडमश्वाभरणे
अधोक्षजो हरिःकुंभभुवोगस्त्यस्य प्लावितभुवनंस्कंधावारंनर्म
दाप्रवाहंच ८१ पूर्वं कार्त्तवीर्येणांतःपुरैः सह रेवातीरे विहरता
तत्स्रोतोभुजसहस्रेणोभयतोवृत्वा स्यक्तमभूत्

सहस्रधाप्रवर्त्तमानं प्रवाहं नर्मदायाः प्रसरत
तातभाव किं विलंबसे लंघति तुरंगमः भद्रभग्न
चरण इव संचरसि यावदमी पुरःसराः सरभ
समुपरि पतंति किं वाहयसि किमुष्ट्रं न पश्यसि
निर्दय निशूकशिशुं शयानं वत्सरामिल रज
सियथा न नश्यसि नापश्यसि गलति सक्तुप्रसे
वकः किमेव मित्वर त्वरसे सौरभेय सरणिमप
हाय हयमध्यं धावसि धीवरिविश सि गंतुका
मामातंगिमातंगमार्गं अंगगलति तिरश्चीना
चणकगोणी गणयसि नमामारटंतं अवटमव
टेनावतरसि सुखमास्स्व स्वैरिणि सौवीरिक
कुंभोभग्नोमन्थरक खादिष्यसि गतः सन् इ
क्षुउक्षाणं प्रसारय किय च्चिरं चिनोषि चेटवद
राणि दूरं गंतव्यं किमद्यैव विद्रासि द्रोणकर
द्राघीयसी दंडयात्रा विनैकेन निष्ठुरकेन नि
ष्क्रेयमस्माकं अग्रतः पंथा स्थपुटकः स्थावर
कयथा न भनक्षि फाणितस्थालीं गर्गयान्गं
डकतंडुलभारकोन निर्वहति ॥

प्रसरतेत्येवमादिप्रवर्त्तमानानेकसंलापनामिति स्कंधावारविश्राम
स्थं तातेति भावेतिच मान्यामंत्रणं ८१ लसतिगलति प्रसेवको
भस्त्राभरणमित्यन्ये इत्वरोगमनशीलः सौरभेयोदांतः अंगेति
इष्टामंत्रणंअवटंश्वभ्रं अवटेनामार्गेण स्वैरिणिस्वतंत्रेस्वादौरैर
णोरितिवृद्धिः सौवीरिकंकांजिकं विद्रासि लंघसि निष्ठाश्लेषः स्थपु
टोनिम्नोन्नतोविषमइत्यन्ये फाणितमिक्षुविकारः गुडइतिप्रसिद्धः

दम्योदासकमाषीणादमुतःद्राग्दात्रेण मुखघा
सपूलकं लुनीहिकोजानाति यवसगतं गतानां
धववारयवलीढंद्वान्वाहीकरक्षितं क्षेत्रमिदंलं
विता शाकटीशाकरं धुरंधरंधुरिधवलं नियुंक्ष्व
यक्षपालितप्रमदाःपिनक्षित्रक्षिणीकिंस्फुटि
तेहतहास्तिपकरे दीव्यसिकरिकरदंडे समद
संमर्दकर्दमेस्खलसि भ्रातर्भावविधुरवंधुरुद्ध
रपंकादनड्वाहं इतएहिमाणवकघनेभघटा
संघट्टसंकटेनास्तिनिःसरणमित्येवमादिप्रव
र्तमानानेकसंलापं क्वचित्स्वेच्छामृदितोद्दाम
सस्यघासविघससुखसंपन्नान्नपुष्टैःकेलिकलैः
किलकिलायमानैः मेठवंठवठरलंवनलेशिक
लुंठकचेटशाटचंडालमंडलैरांडीरैः स्तूयमानं

दम्योदांतः माषाणांभवनंक्षेत्रं धान्यानांभवनेक्षेत्रेखञ् किंचिन्मा
त्रंवुभुक्षानिवृत्तये घासोमुखघासःयवसं घासःउक्तंच शष्पंवालतृ
णंघासो यवसमिति धवःपुरुषःवाहीकः काष्टकःपरिपालकइत्य
न्ये गोरक्षक इतिचान्ये लंविता मार्गमाक्रांतु नशक्नोतिशाकरंस्थू
रंतरुणंवा धवलंमहोक्षंनेदीयासिकरदंडेन्यहस्तसंवंधिनिसति ८ २
करीसमदोर्थात्संपन्नः स्वेच्छया अनायासेनमृदितानि क्षुण्णानि
उद्दामानिप्रभूतानिसस्यानितथाघासोयवसं तथाविघसोभृत्याद्युप
युक्तशेषमन्नंपरस्परलुंठनंवा तैःसुखेनसंपन्नंयदन्नंतेनपुष्टैः केलि
कलाः प्रहसनावहुभाषिणोवा मेठाहस्तिजागरिकाः वंठाः अ
कृतविवाहाः तरुणा येदंडमादायहास्तिनांदर्पमाकर्षयंतिपत्तयइत्य
न्ये वठरामूर्खाः लंवनागर्दभदासा लेशिकाजनपरिचारकाः लुं
ठकाश्चौराः चेटादासाः शाटाधूर्ताः चंडालाश्वपालाः आं
डीराःप्रगल्भाः यद्वा रांडीरारण्डापुत्राः ॥

क्वचिदसहायैः क्लेशार्जितकुग्रामकुटुंबि संपादितसीदत्सौरभेयशंवलसंवाहनायासागतसंयोगैः स्वयं गृहीतगृहोपस्करणैः इयमेका कथंचिद्दंडयात्रा यातुयातु पातालतलं तृष्णाभूतेरभवानि भंजतु शिवसेवा करोतुस्वस्तिसर्वं दुःखकूटायकटकायइतिदुर्विधवृद्धकुलपुत्रकैर्निन्द्यमानं क्वचिदतितीक्ष्णसलिलस्रोतःपाति नौगतैरिव ग्रथितैरिव पंक्तिभूतैर्जनैरतिद्रुतं द्रवद्भिः कृष्णकठिनस्कंधगुरुलगुडैर्गृहीतसौवर्णपादपीठपर्यंककलशपतद्ग्रहावग्राहैः प्रत्यासन्नपार्थिवोपकरणग्रहणगर्वदुर्वारैः सर्वमेव वहिःकारयद्भिः भूपतिभृतकभारिकैर्महानसोपकरणवाहिभिश्च वद्धवराहवध्रवाध्रीणसैर्लंवमानहरिणचटुकचटकजूटजटिलैः ॥

संपादितोदत्तः सीदन्नसमर्थोयः सौरभेयस्तेनशंवलसंवाहनाय यआयासोयोगस्तेनगतसंयोगैरुत्पन्नचित्तक्षोभैरितिसमासः अभवनिरित्याक्रोशेनञ्यनिः दुर्विधादरिद्राः वृद्धाः स्थविराः कुलपुत्राः कुलक्रमागताः सेवकाः तैर्निन्द्यमानमिति स्कंधावारविशेषणम् ८३ क्वचिच्चभूभृद्भारिकैर्महानसोपकरणवाहिभिश्चसमुत्सार्यमाणगुरोवर्त्ति जनमितिस्कन्धावाराविशेषणं अतितीक्ष्णं वेगवत् ग्रथितैर्वद्धयेषांतैः करकः तांवूलाधारः पतद्ग्रहोनिष्ठीवनपात्रं अवग्राहः स्नानद्रोणी वहिःकारयद्भिर्निरस्यद्भिः महानसासूपकारशाला वराहवध्रं सूकरचर्म सूकरपाठेतिप्रसिद्धं वाध्रीनसायाज्ञियाः छागविशेषाः हीरणानांचटुकाः पूर्वभागाजूटः संघः

शिशुशशकशाकपत्रवेत्राग्रसंग्रहसंग्राहिभिः शुक्लकर्पटप्रावृतमुखैकदेशदत्तार्द्रमुद्रागुप्तगोरसभांडैः तलकतापकतापिकाहस्तकताम्रचरुकटाहसंकटपिटकभारिकैः समुत्सार्यमाणपुरोवर्तिजनं क्वचित्क्लेशोऽस्माकं फलकाले अन्य एवविटाः समुपस्थास्यंत इतिमुखरैः पदे पदे पततांदुर्बलवलीवृंदानांनियुक्तैः स्खलने खलचेटकैः खिद्यमानासंविभक्तकुलपत्रकलोकं क्वचिन्नरपतिदर्शनकुतूहलादुभयतः प्रजवितप्रधावितग्रामेयकजनपदं मार्गग्रामनिर्गतैराग्रहारिकजाल्मैः पुरःसरजरन्महत्तरोत्तंभितांभःकुंभैरुपायनीकृतदधिगुडखंडकुसुमकरंडैः घटितपेटकैः सरभसं समुत्सर्पिभिः प्रकुपितप्रचंडदांडिकत्रासनविद्रुतैः दूरगतैरपि स्खलद्भिरपि पतद्भिरपि नरेन्द्रनिहितदृष्टिभिरसतोपि पूर्वभोगपतिदोषानुद्भावयद्भिः ॥

वेत्राग्राणि वंशांकुराः तलकोऽग्निशकटिका तापकोऽपूपादिकरणस्थानं तापिका काकपालिका यत्र तैलादिना भक्ष्याः पच्यंते हस्तकः शूलं पिटका भांडानि विटाधूर्ताः समुपस्थास्यंते ढौकयिष्यंति पततां स्खलतां स्खलने प्रेरणे नियुक्तैः स्थापितैः असंविभक्ताः अकृतविभागाः ग्रामे भवा ग्रामेयकाः ग्रामाद्यन्यत्रो अग्रहारिकजाल्मे दीयमाण तस्य संरक्षणमितिसंगतिः जाल्मा मूर्खाः उत्तंभिता ऊर्ध्वीकृताः अंभः कुंभा जलपूर्णकलशाः खंड इक्षुविकारः समुपसर्पद्भिः ढौकमानैः त्रासनं भयोत्पादनम् ॥

अतिक्रांतायुक्तकशतानि च शंसद्भिः श्चिरंत
नचाटापराधां श्चा भिदधानै रुद्धूयमानधू
लिपटलं क्वचिदेकांतप्रवृत्ताश्ववारचक्रचर्व्य
मानागामिगौडविमृग्यमाणसस्यसंरक्षणं अ
परै रादिष्टपरिपालकपुरुषापरितुष्टैः धर्मः
प्रत्यक्षो देव इति स्तुती रातन्वाद्भिः अपरै
र्लूयमाननिष्पन्नसस्यप्रकटितविषादैः क्षेत्र
शुचा सकुटुंवैरेव निर्गतैः प्ररूढच्छेदैः परिता
पत्याजितभयैः क्व राजा कुतो राजा कीदृशो
वा राजेति प्रारब्धनरनाथनिन्दं शशकैश्च
पदेपदे प्रजाविप्रचंडदंडपाणिपेटकानुवंधैर्गि
रिगुडकैरिव हन्यमानैरितस्ततः संचरद्भिः
अपरैर्युगपत्परापतितमहाजनग्रस्तैस्तिल
शो विलुप्यमानै रनेकजंतुजंघांतरालनिःस
रणाकुशलिभिः कुटिलिकाव्यंसितसादिवहु
श्वभिः पतल्लोष्टलगुडकोणकुठारकीलकुद्दाल
खनित्रदात्रयष्टिभिरपि निःसरद्भिरायुषोव
लात्कृतकलकलं अन्यत्रसंघशो घासिकैर्वुस
धूलिधूसरितघासजालजालकितजघनैश्च

आयुक्तकाः व्यापृतकाः चाटाधूर्ताः ८४ अपरैरायहारिकजालमे
रुपलक्षितं अपरैः प्रारब्धनरनाथनिन्दामितियोजना निष्पन्नानि
पक्वानि सकुटुंवैः सदारैः शशकैः कृतकलकलमित्यन्वयः अनुव
द्धाः अनुसृताः गिरिगुडकैर्लोष्टैः कुटिलिकया वक्रगमनेन व्यंसि
तावंचिताः सादिनामश्ववाराणां वहवः श्वानो यैः कोणो वादन
भांडं अन्यत्रवासिकैः उद्धूयमानधूलिपटलमिति संवंधः संघशो
वहुशः घासेनियुक्ता घासिकाः घासजालं घाससंघातः॥

पुराणपर्याणैकदेशदोलायमानदात्रैश्च शीर्णाणशकलशिथिलमलिनमलकुथैश्च प्रभुप्रसादीकृतपाटितपटच्चर चलच्चोलकधारिभिश्च धावमानैरुद्धूयमानधूलिपटलं क्वचिदेकांतप्रवृत्ताश्ववारचक्रचर्व्यमाणग्रामिगौडविग्रहं क्वचित्पंकिलप्रदेशपूरण दुःशाकुलसकललोकलूयमानतृणपूलकं क्वचित्तलवर्त्तित्रिवेत्रवित्रास्यमानशाखिशिखरगतविक्रोशद्विवादिब्राह्मणं क्वचित्कुलुंठकपाशविक्षिप्यमाणग्रामीणग्रासाकृष्टकौलेयकं क्वचिदन्योन्यविभवरूपर्धोद्धुरराजपुत्रवाह्यमानवाजिसंघट्टमंडितं अनेकवृत्तांततया कौतुकजननंप्रलयजलधिमिव जगद्ग्रासग्रहणायप्रवृत्तं पातालमिव महाभोगिनां गुप्तये समुत्पादितंकैलासमिवपरमेश्वरवसतयेसृष्टं दृश्यमानसकलप्राणिपर्यायंचतुर्युगसर्गकोशमिवप्रजापतीनां क्लेशवहुलमपि तपःकरणमिव क्रमकारणंकल्याणानामेवं च वीक्षमाणः कटकं जगाम

एकदेशःपश्चिमादिक् मलकुथैरितिपाठः मल[illegible]थामलपट्टीछावि रित्यर्थः अंसोपरिवासइत्यन्ये पटच्चरंजीर्णवस्त्रं ९५ कुलुंठकाः शुनावधनलगुडाः उद्धुरउद्दामप्रसराः जगतोग्रहणंस्वीकरणंप्लाव नंच भोगिनोभोगवंतःसर्पाःपरमेश्वरोहरोपि परितःसमन्तादायः आगमनं पर्यायः ॥

आसन्नवर्त्तिनां च तत्र भवतामांधात्राप्रवर्त्तिताः
पंथानो दिग्विजयाय अप्रतिहतरथरंहसार
घुणालघुनैव कालेनाकारि ककुभां प्रसादनं
शरासनद्वितीयः करदीचकार चक्रं क्रमागत
भुजवलाभिजनधनमदावलिप्तानां भूभुजां
पांडुः पांडवः सव्यसाची चीनविषयमतिक्र
म्यराजसूयसंपदे क्रुध्यद्गंधर्वधनुष्कोटिटांका
रकूजितकुंजं हेमकूटपर्वतं पराजैष्टसंकल्पांत
रितो विजयस्तरस्विनां सहिमहिमवद्व्यव
हितोप्युवाह वाहुवलव्यतिकरकातरःकरं कौ
रवेश्वरस्य किंकरइवाकृती द्रुमःनातिजिगीष
वःखलुपूर्वेयेनाल्पएव भूभागे भूयांसोभगद
त्तदंतवक्रक्राथकर्णकौरवशिशुपालसाल्वज
रासंधसिंधुराजप्रभृतयोभवन्भूपतयःसंतुष्टो
राजायुधिष्ठिरो योह्यसहत समीप एवधनंज
यजयजनितजगत्कंपः किंपुरुषानां राज्यं अ
लसश्चंडकोशोयोनप्राविक्षल्लक्ष्मां जित्वा स्त्री
राज्यंहूसीयएवांत रं तुषारगिरिगंधमादनयोः

आसन्नेत्यादौपार्थिवसुतानामित्येवंप्रायानालापान् शृएवन्नेवास
सादावासभिनिसंबंधः तत्रभवतापूज्येन सव्यसाची अर्जुनः परा
जैष्टजिगाय ८६ तरस्विनांपराक्रमवतांकौरवेश्वरोदुर्योधनः अकृ
तीअकृतार्थःद्रुमाख्यः किन्नरराजाःसिंधुनाथोजयद्रथः ह ।यो
ह्मवतरं ॥

उत्साहिनः किष्कुरुतुरुष्कविषयः प्रादेशः पारसीकदेशः शशपदं शकस्थानं अदृश्यमानप्रतिप्रहारे पारियात्रयात्रेवाशिथिला शौर्यशुल्कः सुलभो दक्षिणापथः दक्षिणार्णवकल्लोलानिलचलितचंदनलतासौरभसुंदरीकृतदरीमंदरादद्दुरादद्रि र्नेदीयसि मलये मलयलग्न एव च महेन्द्र इत्येवंप्रायानुद्योगद्योतकानामालापान्पार्थिवकुमाराणां बाहुशालिनां शृण्वन्नेवासससादावासम् मन्दिरद्वारि चोभयतः सबहुमानं भ्रूलताभ्यां विसर्जितराजलोकः प्रविश्य चावनतार वाह्यास्थानमंडपस्थापितमासनमाचक्राम अपास्तसमायोगश्च क्षणमासिष्ट अथ तत्र प्रतीहारः पृथ्वीपृष्ठप्रतिष्ठापितपाणिपल्लवो विज्ञापितवान् देवप्राग्ज्योतिषेश्वरेण कुमारेण प्रहितो हंसवेगनामा दूतोन्तरंगस्तोरणमध्यास्त इति राजा तु तमाशु प्रवेशयेति सादरमादिदेश अथ दक्षतयाक्षितिपालादरा च प्रतीहारः स्वयमेव निरगात्

सांगुष्ठया प्रदेशिन्य प्रादेशः प्रादेशतालगोकर्णतर्जन्यादियुतेतते अंगुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशांगुलमित्यमरसिंहः शौर्यकृतः शुल्कः पणो यत्र स शौर्यशुल्कः अतिशयेनांतिकं नेदीयः अंतिकनिकटयोर्नेदसाधाविति ८७ प्राग्ज्योतिषं कामरूपाख्यो देशः

अनंतरंचहंसवेगः सविनयमाकृत्यैव नयना
नन्दसंपादनसुभगाभोगभद्रतया समुल्लंघ्य
मानगुणगरिमा प्रभूतप्राभृतभृतां पुरुषाणांस
मूहेन महताऽनुगम्यमानः प्रविवेशराजमन्दि
रम् आरादेवपंचांगालिंगितां गतः प्रणामम
करोत् एह्येहीतिस बहुमानमाहूतश्च प्रधावि
तोपसृतः पादपीठलुठितललाटलेखः न्यस्त
हस्तः पृष्ठे पार्थिवेणोपसृत्य भूयोनमश्चक्रे
स्निग्धनरेन्द्रदृष्ट्यानिर्दिष्टमविप्रकृष्टं सप्रदेश
मध्यास्त ततोराजा तिरश्चीं तनुमीषदिव द
धान श्चामरग्राहिणी मंतरालवर्त्तिनीं समु
त्सार्य संमुखीनस्तं सप्रश्रयं पप्रच्छ हंसवेग
श्रीमान्कच्चित्कुशली कुमार इतिसतमन्ववा
दीत् अद्य कुशली येनैवं स्नेहस्नापतयासौहा
र्दद्रवार्द्रयासगौरवंगिरापृच्छति देवःइतिस्थि
त्वाच मुहूर्त्तमिव पुनः सचतुरमुवाच चतुरंभो
धिभोगभूतिभाजनभूतस्यदेवस्यसद्भावगर्भ
मपहायहृदयमेकमन्यमनुरूपं प्राभृतमेवदुर्ल
भं लोके

समुल्लंघ्यमानोनीयमानः संमुखीनोभिमुखः ८८ भोगःपालनं

तथाप्यस्मत्स्वामिना सन्देशमशून्यतां नय तापूर्वजोपार्जितं वारुणातपत्र माभोगाख्यम नुरूपस्थानन्यासेन कृतार्थीकृतमेतत् अस्यच कुतूहलकान्ति वहून्याश्चर्याणि दृश्यंतेप्रतिदि वसं प्रविशति शैत्यहेतोः छायायाःकिरणस हस्रादेकैकः सोमस्य रश्मिमस्मिन् प्रवि ष्टे प्रध्य.नानंतरं स्वादवो दंतवीणोपदेशा चार्याःच्योतंति चन्द्रभासामंभसां मणिशला कावोधावदिच्छमच्छधाराः प्रचेताइवयश्च तुर्णामर्णवानामधिपतिर्भूतोभावी वा तमनु गृह्णाति च्छायया नेतरं इदं चन सप्तार्चिर्दह ति नपृषदश्वोहरति नोदकमार्द्रयति नरजांसि मालिनयंति न जरा जर्जरयतीति एतत्तावद नुगृह्णातु दृशादेवः सन्देशमपि विस्रब्धं श्रो ष्यसीत्येवमभिधाय विवृत्यात्मीयंपुरुषमभ्य धात् उत्तिष्ठ दर्शय देवस्येति सवचनानंतरमु त्थाय पुमानूर्ध्वीचकार तद्धौतदुगूलकालिपता च्च निचोलकादकोषीत् ॥

दंतानामन्योन्याघातोदंतवीणा सप्तार्चिरग्निः पृषदश्वोवायुः वि वृत्य स्थिरित्वा ८९ निचोलकादाच्छादनप्रसेवकात् अकोषीत् निष्कासितवान् ॥

आकृष्यमाण एव च यस्मिन्नतिसितमहसि सरभसमहासीव हरेण रसातलादुदलासीव शेषफणिफणाफलकमंडलेन अस्थायीव चक्रीभूयांतरिक्षे क्षीरोदेन अघटीव गगनांगने गोष्ठीबंधः शारदेन वलाहकव्यूहेन विश्रांतमिव विततपक्षतिना वियति पितामहविमानहंसयूथेन अत्रिनेत्रनिर्गतस्य धवलधाममंडलमनोहरो दृष्ट इव जनेन जन्मदिवसः कुमुदबंधोः प्रत्यक्षीकृत इवोद्गमनक्षणो नारायणनाभिपुंडरीकस्य आहितेव कौमुदीप्रदोषदर्शनानन्दत्तांभिरक्षणा उदमांक्षीदिव मंदाकिनीपुलिनमंदिरं महदंबरोदरे परिवर्त्तित इव दिवसः पौर्णमासीनिशया मन्दमन्दमिन्दूदयसन्देहदूयमानमानसैर्विघटितं घटमानचंचुच्युतमृणालकोटिभिरासन्नकमलिनीचक्रवाकमिथुनैः शरज्जलधरपटलाशंकासंकोचितकेकारवमूकमुखपटैः पराङ्मुखीभूतंभवनशिखंडिमंडलैः प्रवुद्धमावद्धचन्द्रानन्दोद्दामोद्दलद्दलपुटाट्टहासविषदं

उदलासि उल्लासितं अस्थायि स्थितं अघटि घाटितं विश्रांतं व्यश्रमत उद्गमनक्षणः उत्पत्तिसमयः उदमांक्षीत् उन्मग्नं परिवार्त्तितः स्वरूपः कृतः

कुमुदषंडैः श्चित्रीयमाणचेताश्च सराजकोराजा दंडानुसाराधिरोहिण्या दृष्ट्यासादरमैक्षिष्टतत तिलकमिव त्रिभुवनस्यशैशवमिव श्वेतद्वीपस्य अंशावतारमिवशरदिन्दोःहृदयमिव धर्मस्यानि वेशमिवशशिलोकस्यदंतमंडलकधवलंमुखमि व चक्रवर्त्तित्वस्य मौक्तिकजालपरिकरसितंसी मंतचक्रमिव दिवः बहलज्योत्स्नाशुक्लोदरमैन्द वमिव परिवेशवलयं शौक्ल्या हसितशंखश्रीकं श्रवणमंडलमिव निश्चलतांगतमैरावतस्य श्वे तगंगावर्त्तपांडुरं पदमिव त्रिभुवनवंदनीयं त्रिवि क्रमस्य प्रचेतसश्चूडामणिमरीचिशिखाभिरिव श्लिष्टाभि र्मानसविसतंतुमयीभि श्चामरिकाव लीभि र्विरचितपरिवेश उपरिचक्रवर्त्तिलक्ष्मीनू पुरस्वनश्रवणदोहदनिश्चलेनेव लक्ष्मणा वित तपत्रेण हंसेनसनाथीकृतशिखरंस्पर्शवताचप्र भावस्तंभितेन मन्दाकिनीमृणालेन मुकुलित फणेन वासुकिनेव नीतेनदंडतां द्योतमानं धव लिम्ना क्षालयदिव नक्षत्रपथं

निवेशःस्थानं दंतमंडलकं दशनकृतंचक्रवालंदशनसमूहश्च मुखमा रंभोवक्रंच परिकरंपरिवेष्टनं परिवेशवलयं परिधिकटकं स्यादाव र्त्तोंभसांभ्रमः आवर्त्तनमावर्त्तः ॥

प्रभाप्रवाहप्रथिम्ना प्रावृएवादिवादिवसं समु
च्छायेणाधः कुर्वदिव दिवं उपरिस्थितमिव
सर्वमंगलानां श्वेतमंडपमिव श्रियः स्तवक
मिव व्रह्मस्तंभस्य नाभिमंडलमिव ज्योत्स्ना
याः विशदहासमिव कीर्त्तेः फेणराशिमिव ख
ड्गधाराजलानां यशःपटलमिव शौर्यशालि
तायाः त्रैलोक्याद्भुतभूतं महच्छत्रम् दृष्टचत
स्मित्राज्ञाप्रथमंशेषामिवप्राभृतंप्रकाशयांचक्रुः
क्रमेणकार्मीः तद्यथा पराध्यरत्नांशुश्रेणीरु
तदिग्भागान्भगदत्तप्रभृतिख्यातपार्थिवपरं
गतानाहतलक्षणानलंकारान् प्रभालेपिनां
चचूडामणीनांसमुत्कर्षान् क्षीरोदधेर्धवलता
हेतूनिव हारान् अनेकरागरुचिरवेत्रकरंडकुं
डलीकृतानि शरच्चन्द्रमरीचिरुंचि शौचक्षमा
णिक्षौमाणि कुशलशिल्पलोकोल्लिखितानां
चशुक्तिशंखगल्वर्कप्रमुखानांपानभाजनानां
निचयान् निचोलकरक्षितरुचांच रुचिरकांच
नपत्रभंगभंगुराणामतिवंधुरपरिवेशानां

प्रावृएवदाच्छादयत् ११ कार्माःभृतका आहतलक्षणान्गुणैःप्र
सिद्धान् उक्तंच गुणैःप्रतीतेतुकृतलक्षणाहतलक्षणाविति समुत्क
र्षान् अतिशयान् गल्वर्कोमसारल्योमणिभेदः चंद्रकांत इत्यन्ये

कार्दरंगचर्मणांसंभारान् भूर्जत्वक्कोमलाःस्प
र्शवतीर्जातीपट्टिकाः चित्रपटानांचम्रदीयसां
समूरुकोपधानादीन्विकारान् प्रियंगुप्रसव
पिंगलत्विचिचासनानि वेत्रमयाण्यागुरवव
ल्कलकल्पितसंचयानिच सुभाषितभांजि
पुस्तकानि परिणतपाटलपटोलत्विषिचतरु
णहारीतहरिन्ति क्षीरक्षारीणिच पूगानांपल्ल
वावल्लीनिसरसानिफलानि लतासहकाररं
सानांचकृष्णागुरुतैलस्यच कपोतकपिलका
पोतिकापलाशकोशीकवचितांगीः स्थवीय
सीःवैणवीर्नाडीश्च पट्टसूत्रप्रसेवकार्पितांश्च
भिन्नांजनकृष्णस्य कृष्णागुरुणो गुरुपरिता
पमुषश्चगोशीर्षचंदनस्य तुषारशिलाशक
लशिशिरस्वच्छसितस्यच कर्पूरस्यकस्तूरि
काकोशकानांच पक्कफलजूटजटिलानांचक
क्कोलपल्लवानां लवंगपुष्पमंजरीणां जातीफ
लस्तवकानांच राशीन्

शौचोधावनंकार्दरंगचर्मणां कार्दरंगदेशभवानां स्फटकानांजा
तीपाट्टिकाः श्रेष्ठानि जघनग्रंथनानि १२संचयाः पत्रसमूहाःप
टोलस्तिक्तकः ओषधिभेदः उक्तंच अथकुलकं पटोलस्तिक्तकः
पटुरिति कापोतिका ओषधिभेदःगोशीर्षचंदनस्य चंदनभेदस्य
कोशकानाभयः ॥

अतिमधुरमधुरसामोदानिर्हारिणीश्च उल्लककलशीः सितासितस्यच चामरजातस्यचानिचयान् अवलंवमानतूलिकालावुकांश्च लिखितानालेरूयफलकसंपुटान्कुतूहलकृति कनकशृंखलानियमितग्रीवाणांकिन्नराणांच वनमानुषीणांच जीवजीवकानांचजलमानुषाणांच मिथुनानिपरिमलामोदितककुभश्च कस्तूरिकाकुरंगान् गेहपरिसरणपरिचिताश्च चमरीः चामीकररसचित्रवेत्रपंजरांतर्गतांश्च वहुसुभाषितजल्पाकजिह्वांश्च शुकशारिकाप्रभृतीन्पक्षिणः प्रवालपंजरगतांश्च चकोरान् जलहस्तिनामुदग्रकुंभमुक्ताफलदामदंतुराणि च दंतकांडकुंडलानि राजातु छत्रदर्शनात्प्रहृष्टहृदयःप्रथमप्रयाणेशोभननिमित्तमितिमनसाजग्राह हंसवेगंच प्रीयमाणोवभाषे भद्र सकलरत्नधाम्नःपरमेश्वरशिरोधारणार्हस्यास्यमहातपत्रस्य महार्णवादिवकुमुदवांधवस्य

अतिमधुंमधुरसायाइवामोदानिहरंतिमुंचंतियास्ताः मधुरसाद्राक्षा उक्तंचमृद्वीकागोस्तनीद्राक्षामाध्वीमधुरसेतिचेत्यन्येमधुरसं मकरंदद्रवमाहुःउल्लकःसुगंधिफलविशेषरसः आसवभेदइत्यन्ये तूलिकायया चित्रंक्रियते अलाव्यस्तुंव्यः १३ प्रवालोविद्रुमः उक्तंच अथविद्रुमःपुंसिप्रवालःपुंनपुंसकमितिनीहारोमिहिकाचाथ१४

कुमाराह्लाभोनविस्मयाय वाल्यविद्याः खलु महतामुपकृतयइति अपनीतेच तस्मात्प्रदेशा दनाभृतसंभारे क्षणमिवास्थित्वा हंसवेगविश्र म्यता मिति प्रतीहारभवनं विसर्जयांबभूव॥ स्वयमप्युत्थायस्नात्वा मंगलाकांक्षीप्राङ्मुखः प्राविशदाभोगस्यच्छायां अथविशत एवास्य छायाजन्मना जडिम्नाचूडामणितामनीयतेव शशिबिंबमंबुबिंदुमुचश्चुचुबुरिव चंद्रकांतमण योल्ललाटतटंकर्पूररेणवइवव्यलीयंतलोचनयु गलेगलत्तुहिनकणनिकरकृतनीहारा हारा इ वावध्यंत हरिचंदनरसासारेणेवापाति संतत मुरसि कुमुदमयमिव हृदयमभवदतिशिशिरं अंतर्हिताहिमशिलेव विलीयमाना व्यालिंपदं गानिजातविस्मयश्चाकरोन्मनसि एकमज र्यसंगतमपहाय कास्त्यन्या प्रतिकौशलिका इत्याहारकालेच हंसवेगाय धवलकर्पटप्रावृ तधौतनारिकेरपरिगृहीतं विलिप्तशेषं चंदन मंगरुप्टेष्टंच वाससी शरत्तारकाकारतारमुक्ता स्तवकितपदंपरिवेशंनाम कटिसूत्रंअतिमहा र्हंपद्मरागालोकलोहितीकृतदिवसंच तरंगकं नामकर्णाभरणंप्रभूतंचभोज्यजातंप्राहिणोत् एवंप्रायेणच क्रमेण जगाम दिवसः॥

ततः कटकस्थबलचहलधूलिधूसरितवपुरंशु
माली मलीमसमंगमिव क्षालयितु मपरजल
धिमवातरत् आभोगातपत्रप्रदानवार्ता मिव
निवेदयितुं वरुणाय वारुणीं दिशमयासीत् मु
कुलायमानसकलकमलवना प्रमुख एव बद्ध
सेवांजलिपुटेव सद्वीपाभूरभूद्भूपतेः नृपानुरा
गमयइव निखिलजीवलोकलोकांजलिवद्धचं
धुर्जगज्जग्राह संध्यारागः गौडापराधशंकि
नीवश्यामतांप्रपेदे दिक्प्राचीप्रचिततिमिरानि
र्वाहा निर्वाणान्यनृपप्रतापानलकलापेव का
लिमानमतानीन्मेदिनी मेदिनीशप्रदोषास्था
नपुष्पनिकरमिव विकचतवररुचिरमवचकरु
रुडुनिकरमविरलं ककुभः स्कंधावारगंधगज
मदामोदधावितस्येव मार्गो वियति विरराज
रजः पांडरैरावतस्य कुपितनृपव्याघ्राघ्राता
मपसृष्टामिव पौरुष्टुतीं विहाय विहायस्तल
मारुरोह रोहिणीरमणः

कटकंहस्त्यश्वादीनांसर्वेषांसन्निवेशदेशः तत्स्थंबलंसैन्यं ९५ त
वरांपिंडीभवनं नृपव्याघ्रोराजशार्दूलोहर्षः उपसृष्टांसोपद्रवां पौरु
ष्टुतींऐंद्रींरोहिणीरमणश्चन्द्रोवृषभश्च रोहिणीगौः उक्तंच माहेयी
सौरभेयीगौरुस्रामाताचशृंगिणी अर्जुन्यघ्न्यारोहिणीस्यादुत्तमा
गोपुनैचिकीति ॥

प्रयाणवार्त्तामिव मानिनीनां हृदयभेदिन्योय युरिन्दुदीधितयो दशदिशः नवनृपदंडयात्रा त्रासातुरा इव तरलितसत्त्ववृत्तय श्चुक्षुभुः पतयो वाहिनीनां चिंतेव भूभृतां हृदयानिवि वेश गुहाविवराणि विमुक्तसर्वाशातिमिरसंत तिः प्रतिसामन्तचक्षुषामिव ननाश निद्रा कु मुदवनानि अस्यांचवेलायां विततवितानतल वर्त्तीनरेन्द्रोयात तावदितिविसर्ज्यानुजीविनो हंसवेगमादिष्टवान् कथयसंदेशमितिप्रणम्य सकथयितुंप्रास्तावीत् देवपुरामहावराहसंप र्कसंभृतगर्भया भगवत्याभुवा नरकोनामसूनु रसावि रसातलेवीरस्य यस्याभवन्बाल्यएव पादप्रणामप्रणयिनश्चूडामणयो लोकपाला नां यस्यच त्रिभुवनभुजोभुजशौंडस्यभवनक मलिनीचक्रवाकीकोपकुटिलकटाक्षाक्षितोऽपि भयचकितारुणपरिवर्त्तितरथो नाज्ञया विना रविरस्तमव्राजीत् यश्चवरुणस्य वहिर्वृत्ति हृद यामदमातपत्रमहार्षीत्॥

वृषभश्च कुपितव्याघ्राघ्रातामत एवसोपद्रवांदिशंविहाय स्थानांत रमारोहति मानः प्रियाविषये अन्यत्रधीरविषये सत्त्वानिप्राणिनः धैर्यंचसत्त्वंवाहिनीनांसेनानांनदीनांचआशादिशः आस्थाच नि द्रासंकोचःस्वापश्च ॥ १६

महात्मनस्तस्यान्वये भगदत्तपुष्पदत्तवज्रद
त्तप्रभृतिषु व्यतीतेषु वहुषुमेरूपमेषु महत्सम
हीपालेषु प्रपौत्रोमहाराजभूतिवर्मणः पौत्र
श्चन्द्रमुखवर्मणः पुत्रो देवस्य कैलासस्थिर
स्थितेः स्थितिवर्मणः सुस्थिरवर्मा नाम
महाराजाधिराजोजज्ञेतजसांराशिर्मृगांकइति
यंजनाजगुः योयमजेनेवाजायत सहैवाहंका
रेण यश्चवालएव प्रीत्या द्विजातीनप्रीत्या चा
रातीन्समग्रान्प्रतिग्रहानग्राहयत् यत्रचाति
दुर्लभं लवणालयसंभूतायाः परमाधुर्यमभूल्ल
क्ष्म्याः तथाचयोवाहिनीनाथानांशङ्खान्जहार
नरत्नानिपृथिव्याः स्थैर्यंजग्राह नकरंअवनि
भृतां गौरवमादत्त ननैष्ठुर्यं तस्यचसुगृहीतना
म्नोदेवस्यदेव्यां श्यामादेव्यां भास्करद्युतिर्भा
स्करवर्मापरनामा तनयः शंतनोर्भागीरथ्यां
भीष्मइव कुमारः समभवत् अयमस्यशैशवा
दारभ्यसंकल्पः स्थेयान्स्थाणुपादारविंदद्वया
दृते नाहमन्यंनमस्कुर्यामिति ईदृशश्चायंमनो
रथस्त्रिभुवनदुर्लभस्त्रयाणामन्यतमेन संपद्यते
सकलभुवनविजयेनवा ॥

प्रतिग्रहोद्विजदीयमानोर्थः सैन्यपश्चाद्भागश्च ॥ १७

मृत्युनावा यदिवाप्रचंडप्रतापज्वलनदिग्द। हेन जगत्येकवीरेण देवोपमेनवीरेण मैत्रीच कर्त्तव्यतापेक्षिणीक्षोणीभृतांकार्यंचकोदर्शना मतद्भवेद्यदुपन्यस्यमानमुपनयेन्मित्रतांदेवंदे वस्याहियशांसि संचिचीषतो बहिरंगभूतानि धनानिवाहाविवचकवलेनिषण्णस्य शेषावय वानामपि साहायकसंपादनमनोरथो निरव काशः किमुतवास्वजनस्यचतुः सागरश्यामग्र हणघस्मरस्य पृथिव्येकदेशदानोपन्यासेना पिकातुष्टिः अभिरूपकन्याविश्राणनविलोभ नमपि लक्ष्मीमुखारविंददर्शनदुर्ललितदृष्टेरु किंचित्करं एवमघटमानसकलोपायसंपादि तपदार्थेस्मिन्प्रार्थनामात्रमेव केवलमनुरुध्य मानः शृणोतुदेवः प्राग्ज्योतिषेश्वरोहि देवेनै कपिंगइवानंगद्विषा दशरथइव गोत्रभिदाध नंजयइव पुष्कराक्षेण वैकर्त्तनइव दुर्योधनेन मलयानिलइव माधवेनाजर्यंसंगतमिच्छति यदिचदेवस्यापिमैत्रीयति हृदयमवगच्छतिच पर्यायांतरितंदास्यमनुतिष्ठतिसुहृदइति ततः किमास्यते समाज्ञाप्यताम् ॥

अनुभवतु विष्णोर्मंदरगिरिरिव विकटकेयूरको टिमणिविघट्टनकणितकटकमणिशिलाशकला निगूढोपगूढानि देवस्य कामरूपाधिपतिः अ स्मिन्नातृप्ते रनवरतविमललावण्यसौभाग्यसु धानिर्झरिणि मुखशशिनि चिराच्चक्षुषी क्षाल यतु प्राग्ज्योतिषेश्वरश्रीः नाभिनन्दति चेद्देवः प्रणयमाज्ञापयतु किंकथनीयं मयास्वामिन इ ति विरतवचसि तस्मिन्भूपालः पूर्वोपलब्धैरेव गुरुभिर्गुणैरारोपितवहुमानः कुमारे सुदूरमा भोगातपत्रव्यतिकरेणतुरसां कोटिमारोपिते प्रे म्णिलज्जमानइवसादरं जगाद हंसवेग कथमि व तादृशिमहात्मनि महाभिजने पुण्यराशौगु णिनांप्राग्रहरे परोक्षसुहृदि स्निह्यति मादृधस्या न्यथा स्वप्नेपि प्रवर्त्तेत मनः सकलजगदुत्तापन पटवोपि शिशिरायन्ते त्रिभुवननयनानन्दक रे कमलाकरे करास्तिग्मतेजसः सवहुगुणग णक्रीताश्च के वयंसख्यस्य सज्जनमाधुर्याणा मभृत दास्योदशादेशःएकांतावदातोत्तानस्वभा वसंभृतसादृश्यस्य कुमुदस्यकृते केनाभिहितः शिशिररश्मिः श्रेयांश्च संकल्पः कुमारस्य

स्वयंवाहुशाली मयिचसमालंवितशरासने सुह
दि हरादृते कमन्यं नमस्यति संवर्धितामे प्रीति
रमुनासंकल्पेन अवलेपिनि पशावपिकेसरिणि
वहुमानो हृदयस्यकिंपुनःसुहृदितत्तथा यतेथाः
यथानचिरमियमस्मान्क्लेशयति कुमारदर्शनो
त्कंठेतिहंसवेगस्तु विज्ञापयांवभूव देवकिमप
रमिदानीं क्लेशयत्यभिजातमभिहितं देवेनसेवा
भीरवोहि संतः तत्रापि विशेषेणायमहंकारध
नो वैष्णवोवंशः आस्तांतावदस्मत्स्वामिवंशःप
श्यतु देवः पुरुषस्यहिसेवां प्रति दुर्जनजनन्ये
वातिवृद्धया दुर्गत्यावाभिमुखीक्रियमाणस्यकु
टुंविन्येवासंतुष्टया तृष्णया वाध्यमाणस्य दु
रपत्यैरिव यौवनजनितैर्नानाभिलाषिभि रस
त्संकल्पैर्व्याकुलीक्रियमाणस्य जरत्कुमारीमि
व परमार्गणयोग्यामतिमहतींचावस्थांपश्यतः
स्वगृहेदुर्वंधुभिरिव दुःस्थितैः समग्रैर्ग्रहैर्वा ग्रा
ह्यमाणस्याभियोगं पुरातनैरतिदुस्त्यजैर्भृत्यै
रिवमलिनैः कर्मभिर्वानुवर्त्यमानस्य सकलश
रीरसंतापकरं करीषाग्निमिव दुष्कृतिनःकृताचि
त्तस्य संप्रवेष्टुं राजकुलं ॥

उपहतसकलेन्द्रियशक्तेरिव मिथ्यैव हृदयगत विषयग्रामग्रहणाभिलाषस्य प्रथममेव तोरण तले वन्दनमालाकिसलयस्येव शुष्यतः द्वारर क्षिभिर्निरुद्धस्य पीडितस्य प्रविशतोद्वारे हरिण स्येवापरैर्हन्यमानस्य करिचर्मपुटस्येव मुहुर्मुहुः प्रतिहारमंडलकरप्रहारैर्निरस्यमानस्य निधि पादपप्ररोहस्येव द्रविणाभिलाषा दधोमुखीभ वतो प्यमार्गणस्याप्यतिविप्रकृष्टविवृतविस र्जितस्योद्वेगं व्रजतः अकंठकस्यापि चरणतल लग्नस्याकृष्य क्षेपीयःक्षिप्यमाणस्य अमकरके तो रप्यकालोपसर्पणाप्रकुपितेश्वरदृष्टिदग्ध स्य प्रलयमुपगच्छतः कपेरिव कोपानिर्भर्त्सित स्याप्याभिन्नमुखरागस्य ब्रह्मघ्नइव प्रतिदिवस वन्दनोद्घृष्टशिरःकपालस्य स्पर्शरहितस्याशु भकर्माणि निर्वहतः ॥

हस्तिनांयुद्धशिक्षार्थं चर्ममयोहस्ती प्रतीहारमंडलेन दौवारिकस मूहेनप्रतिसंहारेणवेष्टनेनमंडलं यस्य करस्यतत्प्रहारैश्च निधिपादपप्र रोहोनिधानपृष्ठजन्मा वृक्षांकुरःसच सर्वोनिधिप्रभावादधोमुखोभा वः प्रणामः अमार्गणस्यायाचकस्यच अतिविप्रकृष्टैः प्राकृतैः पूर्वं विवृतःस्वतःचलद्व्यदर्शनएवविसर्जितस्यातएवोद्वेगंमन्युंव्रजतः मा र्गणःशरश्चातिविप्रकृष्टं कर्णांते विवृतःसर्जितउद्धतवेगंयाति अमक रकेतोरशृंगारिणोपि अकाले अप्रस्तावे उपसर्पणंयस्यसः तथा अप्रकुपितस्यईश्वरस्यहर्षस्यदृष्ट्यादग्धः ततोविशेषणसमासः प्रल यःप्रकृष्टोलयोभिन्यादिाश्लिष्टत्वं नाशश्चसदृशः कपेर्लोहितमुखत्वा त् प्रतिदिवसेत्यादि ब्रह्मघ्नः हतब्राह्मणःकपालमहरहर्वन्दते

त्रिशंकोरिवोभयलोकभ्रष्टस्य नक्तं दिनमूर्ध्वा
कूशिरसस्तिष्ठतः वाजिनइव कवलवशेन सुख
वाह्यमात्मानं विदधानस्य अनशनशायिनइव
हृदयस्थापितजीवनाशस्य शरीरं क्षपयतः शुन
इव निजदारपराङ्मुखस्य जघन्यकर्मलग्नमा
त्मानं ताडयतः प्रेतस्येवानुचितभूमिदीयमाना
न्नपिंडस्यबलिभुजइव जिह्वालौल्योपयुक्तपुरुष
वर्चसो वृथाविहितायुषोजीवतः श्मशानपादपा
निवपिशाचस्य दग्धभूत्या परुषीकृतान्राजवल्ल
भानुपसर्पतः विपरीतजिह्वाजनितमाधुर्यैरोष्ठ
मात्रप्रकटितरागैराजशुकालापैः शिशोरिव मु
ग्धविलोभ्यमानस्यवेतालस्येवनरेन्द्रप्रभावावि
ष्टस्य किंचिन्नाचरतःचित्रधनुषइवालीकगुणा
ध्यारोपणैकक्रियानित्यनम्रस्य निर्वाणतेजसः

त्रिशंकुर्नाम चंडालभावमास्थितोपि याजयित्वा विश्वामित्रेणस्वर्गा
रोपितः कुपितेनेन्द्रेणहुंकारस्तर्जितः सचनिपित्सुरवीविश्वामित्रप्र
भावाद्भुवमनवाप्य तत्रैवपूर्वलंबमानोद्यापिस्थितः १८ कवलोग्रासः
सुखेनवाह्यंबवयोरैक्यात् सुखेभ्योवहिर्भूतं कृच्छ्रेणव्याप्यंच हृदयेस्था
पिताजीवनेवृत्त्युपायेआशायेन जीवस्यनाशश्च जघन्यंनिकृष्टंजघने
भवंजघन्यंचसुतं अनुचितायामयशस्यायां भूमौ चितायाः पश्चादनु
चितं बलिभुजः काकस्य लौल्यं चापलमभिलाषश्च उपयुक्तंव्ययीकृ
त भुक्तंच वर्चस्तेजोविष्ठाच वृथाविहितंकृतमायुर्यस्य विभ्यः पक्षि
भ्योहितमायुर्यस्य वृथानिष्फलंजीवतः पिशाचस्य मूर्खस्यभूतिः सं
पद्भस्मच राजानःशुकाइवराजशुकाः चराजशुकभेदाःनरेन्द्रोराजा
विषविद्यश्च गुणः उत्कर्षः ज्याचगुणः निर्वाणंप्रशांतंनिर्गतबाणंतेजश्च

संमार्जनीसमुपार्जितरजसोवकरकूटस्येव निर्मा ल्यवाहिनः कफविकारिण इव दिनेदिनेकटुकैरु द्वेज्यमानस्य सौगतस्येवार्थशून्यविज्ञप्तिजनित वैराग्यस्य काषायाण्यभिलषतः निशास्वपिमा तृवलिपिंडस्येव दिक्षु विक्षिप्यमाणस्य अशौच गतस्येव कुशयनजनितसमधिकतरदुःखदुःसेः तुलायंत्रस्येवपश्चात्कृतगौरवस्य तोयार्थमपिन मतः अतिकृपणस्य शिरसा केवलेनासंतुष्टस्य वचसापि पादौस्पृशतः निर्दयवेत्रिवेत्रताडनत्र स्तयेव त्रपयात्यक्तस्य दैन्यसंकोचितहृदयहृता वकाशयेवाहोपुरुषिकया परिवर्जितस्य कुत्सि तकर्मांगीकरणकुपितयेवोन्नत्या वियुक्तस्य धन श्रद्धया क्लेशानुपार्जयतः स्ववृद्धिवुद्ध्यावमानं वर्ध यतो मूढस्य सत्यपि विविधकुसुमाधिवाससुर भिणि वने तृष्णांजलिमुपरचयतः ॥

अवकरकूटोमार्जनीक्षिप्तोरजस्तृणादिसंघातः उक्तंच संमार्जनीशो धनीस्यात्संकरोवकरस्तयाक्षिप्तइति ।अमाल्यवाहित्वेन निःश्रीक त्वमुच्यते कटुकैःप्रतीहारिस्तीक्ष्णैश्च अर्थशून्यया।निष्फलयाविज्ञप्त्या प्रार्थनयाकृतोद्वेगस्यबौद्धानामपिवाह्यवस्तुशून्यानिविज्ञानानि अशौ चंमृतकादि कुशयनंकुत्सितशय्या भूमिश्चकुः ९९ पश्चात्कृतंवर्जि तंपृष्ठतश्चकृतंगौरवंमहत्त्वंगुरुत्वंच तोयशब्दोजलोपलक्षणार्थः तो यंजलंच पादस्पर्शनंपथोपि त्रययालज्जया आहोपुरुषिकादर्पाद्या स्यात्संभावनात्मनि स्वमात्माधनंच उक्तंच स्वोज्ञातावात्मनिस्वंत्रि ष्वात्मीयेस्वोस्त्रियांधनेइतिअधिवासः सौगंध्यंभावनाच वनंकाननं जलंच तृष्णा धनस्पृहा मृगतृष्णाच ॥

कुलपुत्रस्यापिकृतागसइवभीतभीतस्यसमीपमु
पसर्पतः दर्शनीयस्याप्यालेख्यकुसुमस्येवनिष्फ
लजन्मनः विदुषोपिवैधेयस्येवापशब्दमुखस्यश
क्तिमतोपि श्वित्रिणइव संकोचितकरयुगलस्यस
मसमुत्कर्षेषु निरग्निपच्यमानस्यनीचसमीकरणे
षु निरुच्छ्वासंम्रियमाणस्यपरिभवैस्तृणीकृतस्य
दुःखानिलेना निर्वृतेर्ज्वलतः भक्तस्याप्यभक्तस्य
निरूष्मणः संतापयतोवंधून् विमानस्याप्य
गातिकस्य च्युतगौरवस्याप्यधस्ताद्गच्छतः निः
सत्वस्यापिमहामांसविक्रयंकुर्वतः निर्मदस्यास्व
तंत्रवृत्तेःअयोगिनोध्यानवशीकृतात्मनः शय्यो
त्थायंप्रणमतोदग्धमुंडस्यगोत्रविदूषकस्यनक्तं
दिनंनृत्यतोमनस्विजनंहासयतःकुलांगारस्यवं
शंदहतःनृपशोस्तृणेपिलब्धेकंधरामवनमयतः

विदुषोजानानस्य पंडितस्य वैधेयस्यमूर्खस्य अपगतशब्दमुखस्य
लक्ष्यहीनश्चशब्दोपशब्दःश्वित्रंकुष्ठव्याधिभेदःसमास्तुल्यशीलाःअ
निर्वृतेरप्रतीतेः अनिर्वृतेर्गमनस्यागाभावाच भक्तस्यहितैषिणः अभ
क्तस्यालब्धभागस्य विरोधःस्पष्टःसर्वत्र ऊष्मागर्वोपि विमानस्यवि
गतमानस्य व्योमयानस्यच गतिरुपायोपि गौरवमादरोपि महामां
संस्वकायोपि मदोगर्वः क्षीवताच अयोगिनोविपरीतदैववतःदरि
द्रस्येत्यन्येअप्राप्तवलस्येत्यन्ये चित्तवृत्तिनिरोधाभाववतश्च १००दग्ध
मुंडस्य आतपहताशिरसः व्रतिभेदश्च दग्धमुंडः विदूषकोनायकश्च
नर्म सुहृच्च वंशोवेणुः

जठरपरिपूरणमात्रप्रयोजनजन्मनो मांसपिंड
स्य गर्भरोगस्य मातुरपुण्यानां कर्मणामाचरण
कृतकस्य किं प्रायश्चित्तंका प्रतिपत्तिक्रिया कगत
स्यशांतिः कीदृशंजीवितं कः पुरुषाभिमानः किं
नामानोविलासाः कीदृशी भोगश्रद्धा प्रवल्लपंक
इवसर्वमधस्तान्नयति दारुणोदासशब्दो धिक्कदु
च्छ्वसितं उपयातु निधनंधनं अभवनिर्भूतेरस्तु
तस्याः नमोभगवद्भ्यस्तेभ्यःसुखेभ्यःतस्याय
मंजलिरैश्वर्यस्यतिष्ठतु दूरएवसाश्रीःशिवंसपरि
च्छदःकरोतुयदर्थमुत्तमांगगांगमिष्यतिमुखप्रिय
रतः क्लीवः अपूतिमांसमयः क्रिमिः अगण्यमा
नोनरकःपादरजोधूसरोत्तमांगोजंगमःपादपीठः
पुंस्कोकिलः काकुक्कणितेषु शिखी सुखकरकेका
सु स्थूलकूर्मःक्रोडकषणेषु श्वा नीचचाटुकरणेषु

दारुणोदुःसहः काष्टस्यच सर्वमास्त्विति योजना मुखप्रियेत्यादावेवं
विधःसेवकोपियदिमर्त्यमध्येगण्यते तद्राजिलोपि भोगी कथं न भव
तिपुलाकोप्युप्तः कलमः कथं न स्यादितिसंबंधः रतःसक्तःमुखेआरं
भेवदनेच प्रियंरतंमोहनंयस्य क्लीवोशक्तः शरण्यश्च पूतिदुष्टगंधं अ
गण्यमानोनगणनार्हः कुत्सितोनरोनरकःअगण्यश्च मानोयस्य सो
गण्यमानोनरकोभौमनामाअवीच्यादिर्वा काकुक्कणितंमधुरवचनंभि
न्नध्वनिर्वक्रत्वकथनंनिर्व्यापारत्वाच्छोकाद्वा

कृकलासःशिरोविडंवनासु जाहकआत्मसंकोचनेषु वेणुर्मूर्च्छनासु वेश्याकायः करणवंधक्लेशेषु पलालं सत्त्वशालिषु प्रतिपादकः पादसंवाहनासु कंदुकः करतलताडनेषु वीणादंडः कोणाभिघातेषु वराकःसेवकोपिमर्त्यमध्येराजिलोपिवा भोगी पुलाकोपिवाकलमःवरंक्षणमपिकृतामानवता मानवतानमतोनमतःत्रैलोक्याधिराज्योपभोगोपि मनस्विनः तदेव मभिनन्दितास्मदीयप्रणयो देवोपि दिवसैः कतिपयैरेवपरागतःप्राग्ज्योतिषेश्वरइति करोतु चेतसीत्युक्त्वा तूष्णीमभूत् अचिराच्च नमस्कृत्य निर्जगामराजापि रजनींतांकुमारदर्शनौत्सुक्यस्वीकृतहृदयःसमनैषीत् आत्मार्पणंहिमहतामूलमंत्रमयंवशीकरणंप्रभातेचप्रभूतंप्रतिप्राभृतंप्रधानप्रतिदूताधिष्ठितं दत्त्वाहंसवेगं प्राहिणोत्

लासोप्यनवरतं शिरउन्नमयन्नास्ते आखुर्जाहकः प्राणिभेदः इत्यन्ये १ मूर्च्छना मोहः स्वराणां विशिष्टा स्थितिश्च ॥ शरीरंमंत्रोवा कामशास्त्रोदितकरणानि कोणोलगुडश्च यथा लिषुपलालमप्रयोजनं तदसौराजिलोडिंडिभाख्योनिर्विषः सर्पः कःफलदरिद्रः शालिः श्यामाकप्रायः मानवताअहंकारिणा वश्यकर्म मानवता पौरुषं नमतः नेष्टः नमतः प्रणामंकुर्वत न्योषधयःसाधनं इत्यादि ॥ २ ॥

आत्मनापि ततः प्रभृति प्रयाणकैरनवरतैर भ्यमित्रं प्रावर्त्तत कदाचित्तु राज्यवर्धनभुजव लोपार्जितमशेषं मालवराजसाधनमादायागतं समीप एवावासितलेखहारकाद्भंडिमशृणोत् श्रुत्वा चाभिनवीभूतभ्रातृशोकहुताशनः कातरहृदयो बभूव मूर्च्छान्धकारमेव विवेश अतिष्ठच्च समुत्सृष्टसकलव्यापारः प्रतीहारनिवारणनिभृतनिः शब्दपरिजने निजमन्दिरे सराजकपरिवार स्तदागमनमुदीक्षमाणो मुहूर्त्तं अथ भंडिरेकेनैव वाजिना कतिपयकुलपुत्रपरिवृतो मलिनवासा रिपुशरशल्यपूरितेन निखातबहुलोहकीलकपरिकररक्षितस्फुटनेनेव हृदयेन हृदयलग्नैः स्वामिसत्कृतैरिव श्मश्रुभिः शुचं समुपदर्शयन्दूरीकृतव्यायामशिथिलभुजदंड दोलायमानमंगलवलयैकशेषालंकृतिः अनादरोपयुक्ततांबूलविरलरागेण शोकदहनदह्यमानस्य हृदयस्यांगारेणेव दीर्घनिःश्वासवेगनिर्गतेनाधरेणाशुष्यता स्वामिविरहविधृतजीवितापराधवैलक्ष्यादिव वाष्पवारिपटलेन पटेनेव प्रावृतवदनः विशन्निव ॥

निभृतः सनयः अथेत्यादि राजद्वारंभण्डि राजगामेतिसंबंधः श्मश्रुरिति शोकवशेन ततो विक्षितत्वाद्वा ॥ ३

दुर्वलीभूतैः स्वांगमपत्रपयांगैःवमन्निवच व्य
र्थीभूतभुजोष्माणमायतैर्निःश्वसितैः पातकी
कीवापराधीवद्रोहीवमुषितइवच्छलितइवयूथ
पतिपतनविषण्ण इव वेगदंडवारणः सूर्यास्त
मयानिःश्रीक इव कमलाकरः दुर्योधननिधन
दुर्मनाइवद्रौणिः अपहृतरत्नइव सागरोराज
द्वारमाजगामअवतीर्यच तुरंगमादवनतमुखो
विवेशराजमंदिरम् दूरादेवच विमुक्ताक्रन्दः
पपातपादयोः अवनिपतिरपि दृष्ट्वातमुत्था
प्यविरलैःपदैः प्रत्युद्गम्योत्थायच गाढमुपगू
ह्य कंठे करुणमतिचिरं रुरोदाशिथिलीभूतम
न्युवेगश्च पुरेव पुनरागत्य निजासने निष
सादप्रथमप्रक्षालितमुखेच भंडौ मुखमक्षाल
यत्समतिक्रांतेच कियत्यपि काले भ्रातृमर
णवृत्तांतमप्राक्षीत् अथाकथयच्चयथावृत्तम
खिलंभंडिः अथ नरपतिस्तमुवाच राज्यश्री
व्यातिकरः क इति सपुनरवदीत् देवदेवभूयं
गते देवे राज्यवर्धने गुप्तनाम्नाच ॥

गृहीते कुशस्थले देवी राज्यश्रीःपरिभ्रश्य
बंधनाद्विंध्याटवीं सपरिवारा प्रविष्टेति लोक
तोवार्त्तामशृणवम् अन्वेष्टारस्तु तां प्रतिप्रभू
ताःप्रहिताजना नाद्यापि निवर्त्ततइतितद्वाक
र्ण्यभूपतिरब्रवीत् किमन्यैरनुपदिभिर्यत्रसात
त्रपरित्यक्तान्यकृत्यः स्वयमहं यास्यामिभवा
नपिकटकमादाय प्रवर्त्ततां गौडाभिमुखमित्यु
क्त्वोत्थाय स्नानभुवमगात् कारितशोकश्म
श्रुवपनकर्मणा च प्रतीहारभवनस्नातेन शा
रीरकवसनकुसुमांगरागालंकारप्रेषण प्रकटि
त प्रसादेन भंडिना सार्धमभुक्त निनायचतेनैव
सहवासरं अथापरेद्युरुषस्येव भंडिर्भूपालमु
पसृत्य व्यज्ञापयत् पश्यतु देवः श्रीराज्यवर्ध
नभुजबलार्जितंसाधनं सपरिवर्हं मालवराज
स्येति नरपतिना सएवं क्रियतामित्यभ्यनुज्ञा
तोदर्शयांबभूव तद्यथाअनवरतगलितमदम
दिरामोदमुखरमधुकर जूटजटिलकरटपट्टपं
किलगंडान्गंडशैलानिव जंगमान्गंभीरगर्जि
तरवान्जलधरानिव महीमवतीर्णानुत्फुल्लसप्त
च्छदवनामोदमुचःशरद्दिवसानिव पुंजीभूतान्

अनेकसहस्रसंख्यान्करिणः चारुचामीकर
चित्रचामरमंडलमनोहरांश्च हरिणरंहसोह
शान् बालातपविसरवर्षिणांच किरणैरनेकेन्द्रा
युधीकृतदशदिशामलंकाराणां विशेषान् वि
स्मयकृतः स्मरोन्मदितमालवीकुचपरिमल
दुर्ललितांश्च निजज्योत्स्नापूरप्लावितदिगन्ता
नपि ताराहारान् उडुपतिपादसंचयशुचीनि
निजयशांसीव वालव्यजनानि जातरूपमय
नालंच निवासपुंडरीकमिव श्रियः श्वेतातप
त्रं अप्सरसइव वहुसमररससाहसानुरागाव
तीर्णा वारविलासिनीः सिंहासनशयनासन्दी
प्रभृतीनि राज्योपकरणानि कालायसनिगड
निश्चलीकृतचरणयुगलंच सकलं मालवराज
लोकं अशेषांश्च ससंख्यालेख्यपत्रान्सालंका
रापीडपीठान्कोशकलशान् अथालोच्यतत्स
र्वमवनिपालः स्वीकर्त्तुं यथाधिकारमादिशद
ध्यक्षान् अन्यस्मिंश्चाहानि हयैःस्वसारमन्वेष्टु
मुच्चचाल विंध्याटवीमवापच परिमितैरेव प्रया
णकैस्तां अथ प्रविशन्दूरादेव दह्यमानषष्टिक
वुसविसरविसारिविभावसूनां वन्यधान्यवी
जधान्नीनां

धूमेन धूसरिमाणमादधानैः शुष्कशाखासं चयरचितगोवाटवेष्टितविकटवटैर्व्यापादित वत्सरूपकरोषरचितव्याघ्रयंत्रैः रयंत्रितवन पालहठ ह्रियमाणपरग्रामीणकाष्ठिककुठा रैः कुद्दालप्रायकृषिभिः कृषीवलैरवलंव द्भिरुच्चभागभाषितेन भज्यमानभूरिशालि खलक्षेत्रजखंडलकमल्यावकाशैश्च काशिलैः कालायसैरिव कृष्णमृत्तिकाकठिनैः स्थान स्थानस्थापितस्थणूत्थितस्थूलपल्लवैर्दुरपगम श्यामाकप्ररूढिभिरलंवुसवहुलैरविरहितको किलाक्षक्षुपैर्विरलविरलैःकेदारैःकृच्छ्रकृष्यमा णैः नातिप्रभूतप्रवृत्तगतागताप्रहतभुवमुप क्षेत्रमुपरचितैरुच्चैर्मंचैश्च सूच्यमानश्वपदो पद्रवं दिशिदिशिच प्रतिमार्गद्रुमकृतानां प थिकपादप्रस्फोटनधूलिधूसरैर्नवपल्लवैर्लांछि तच्छायानामटवीसुलभसालकुसुमस्तवका चितनवखातकूपकोपकंठप्रतिष्ठितनागस्फुटा नामच्छिद्रकटकल्पितकुटीरकाणां कुटिलकी टवेणीवेष्ट्यमानसक्तुशारशरावश्रेणीश्रिताना मध्वगजनजग्धजंवूफलास्थिशवलसमीपभु वामुद्धूलितधूलीकदंवस्तवकप्रकरपुलकिनीनां

कंठकितकर्करीचक्राक्रांतकाष्ठ मंचिकामुषित
तृषां तिम्यत्तलशीतलसिकातिलकलशी श
मितश्रमाणा माश्यानशैवलश्यामलितालिंज
रजायमानजलजडिम्ना मुदकुंभाकृष्टपाटलश
र्कराशकलशिशिरीकृतदिशां घटमुखघटित
कटहारपुष्पपुटानां शीकरपुलकित षल्लवपू
लीपाल्यमान शोष्यसरसाशिशु सहकारफ
लजूटीजटिलस्थाणूनां विश्राम्यत्कार्पटिकपे
टकपरिपाटीपीयमानपयसा मटवीप्रवेशप्र
पानां शैत्येन त्याजयंतमिव ग्रैष्म मूष्माणंक्व
चिदन्यत्र ग्राहयंतमिवांगारीयदारुसंग्रहदा
हिभिर्व्योकारैः सर्वतश्चप्रातिवेश्यविषयवासि
ना समासन्नग्रामगृहस्थापितस्थविरपरिपा
ल्यमानपाथेयस्थगितेन कृतदारुणदारुव्या
यामयोग्यांगाभ्यंगेन स्कन्धाध्यासितकठोर
कुठारकंठलंबमान प्रातराशपुटेन पाटच्चरस्त्र
स्यवायप्रतिपन्न पटच्चरेण कालवेत्रकत्रिगुण
व्रततिवलयपाशग्रथित ग्रीवाग्रथितैः पत्रवी
टावृतमुखैः पीतकूटैरूढवारिणा पुरःसरबल
वद्दलीवर्दयुगसरेण नैकटिककुटुंबिकलोकेन
काष्ठसंग्रहार्थमटवीं प्रविशता ॥

श्वापदव्यधनव्यवधानवहलीसमारोपितकुटी कृतकूटपाशैश्च गृहीतमृगतंतुतंत्रोजालवल्ययवागुरैः वहिर्व्याधैर्विचरद्भि रंसावसक्तवीतसव्यालंवमानवालपाशिकैश्च संगृहीतग्राहककरकपिंजलादिपिंजरकैः शाकुनिकैः संचरद्भिश्च्युतलासकलेशलिप्तलताबधूलद्वालंपटानांचपेटकैः पाशकशिशूनामटद्भि स्तृणस्तंवान्तरिततित्तिरितरलायमान कौलेयककुलचाटुकारैश्च विहगमृगयां मृगयुयुवभिः क्रीडद्भिः परिणतचक्रवाककंठकषायरुचां शीधव्यानां वल्कलानां कलापान्नातिचिरोद्धृतानांच धातुत्विषां धातकीकुसुमानां गौणीरगुणिताः पिचव्यानां चातसीगणपट्टमूलकानां पुष्कलान्संभारान्भारांश्च मधुनोमाक्षिकस्य मयूरांगजस्याक्लिष्टमधूच्छिष्टचक्रवालानालंवमानलामज्जकजूटजटानामपत्वचां खदिरकाष्ठानां कुष्टस्य कठोरकेसरिसटाभारवभ्रुणश्च रोध्रस्य ॥

मधुनः क्षौद्रस्य मयूरांगजस्य वर्हिपिच्छस्य मधूच्छिष्टं सिक्थकं लमज्जकामितिलामज्जकंलघुलयमित्यमरःउशीरभेदइत्यन्ये वभ्रुणः कपिलस्यरोध्रस्येति रोध्रोलोध्रः शावरकः शिल्लकः शिल्लकस्तरः तिरीटः कानहारिश्चाशिल्लोशावरपादपः ॥ ४

भूयसो भारकल्लोकेनादाय व्रजता प्रविचिन विविधवनफलपूरितपिटकमस्तकाभिश्चाभ्य र्णग्रामगत्वरीभिस्त्वरमाणाभिर्विक्रयचिन्ता व्यग्राभिर्ग्रामेयकाभिर्व्याप्तदिगंतरमितस्त तश्च युक्तशूरशकुरशाक्वराणां पुराणपांसूत्कि रकरीषकूटवाहिनीनां धूर्गतधूलिधूसरसैरि भसरोषस्वरसार्यमाणानां संक्रीडच्चटुलचक्र चीत्कारिणीनां शकटश्रेणीनां संपातैः संपद्य मानदुर्वलोर्वीविरूक्षक्षेत्रसंरुकारंभारक्षाक्षिप्त दांतवाहकदंडोड्डीयमान हरिणहेलालंघित तुंगवैणववृतिभिश्च निखातगौरकरंकशंकु शंकितशशाकशकालिततुंगशृंगैः प्रयत्नप्रभृत विशंकटविटपैर्वाटैरैक्षवैर्बहुभिः श्यामायमा नोपकंठं अतिविप्रकृष्टांतरैर्मरकतस्निग्धस्नु हावाटवेष्टितैःकार्मुककर्मण्यवंशविटपसंकटैः

शकुरास्तरुणाः शाक्वरावलीवर्दाः करीषंशुष्कगोमयं उक्तंच गोविड्गोमयमस्त्रियां तत्तुशुष्कंकरीषोस्त्रीति संक्रीडत् कूजत् वृतिर्वाटोपांतेल्लताकृतः प्राकारमयः करंकः कंकालः तदु पलक्षिताः शंकवः शृंगोग्रभागः वृतिरित्यन्ये प्रभृताः पोषिताः विशंकटाः विस्तीर्णाः विटपाः शाखाःअतिविप्रकृष्टेत्यादिक्ष्व टवीकुटुंबिनांगृहैरुपेतमितिवनग्रामविशेषणं स्नुहासुधावृक्षः उक्तं चस्नुक्स्नुहाचसुधावृक्षः शुंभोनिस्त्रिंशपत्रकः समंतदुग्धोगंडोरीमे कुंडोवज्रकंदकइति कर्मणिसाधुः कर्मण्यः ॥ ※

कंठकितकरंजराजिदुष्प्रवेश्यै रुरुवूकवचावंग
कसुरससूरणशिग्रुग्रंथिपर्णगवेधुका गर्मुद्गुल्म
गहनगृहवाटिकैः निखातोच्चकाष्ठारोपितका
ष्ठारुकलताप्रतानविहितच्छायैः परिमंडलवद
रीमंडपकतलनिखातखादिरकीलवद्धवत्सरूपैः
कथमपि कुक्कुटरटितानुमीयमानसन्निवेशै रंग
नाशस्तिस्तंभतलविरचितक्षिप्रपक्षिपूपिकावा
पिकैर्विकीर्णवदरपाटलपटलै र्वेणुपोटदलनल
शरमयव्रातिविहितभित्तिभिः किंशुकरोचनार
चितमंडलमंडपवल्वजवद्धांगारराशिभिः ॥

करंजोनक्तमालः उक्तंच करंजोनक्तमालः स्यात्प्रतीतश्चिरविल्वकः
इति उरुवूकः ऐरंडः उक्तंच उरुवूकस्तथैरंडोरुचकोवातनाशनः
पंचांगुलोवर्धमानश्चित्रोगंधर्वपात्तथा वचाउग्रगंधा उक्तंचवचोग्रगं
धागोलोमीजाटिलोग्रासलोमशेति वंगकोहरितकविशेषः सुरसा
भूतघ्नी उक्तंच सुरसातुलसीद्रुःस्यादलसोवहुमंजरी अपेताराक्षसो
गौरीभूतघ्नीदेवदुंदुभिरिति सूरणःकंदविशेषःशिग्रुः सौभांजनःउक्तं
चसौभांजनःकृष्णगंधामुखभंजोथशिग्रुकइतिग्रंथिपर्णमुस्ताकारः
सुगंधिः कंदविशेषः उक्तंच ग्रंथिपर्णंशुकंवर्हिपुष्पंस्थाणेयकुंदुरेइ
ति गवेधुकातृणधान्यभेदः गर्मुतूलता गुल्मःअप्रकांडस्तंभगुल्माइ
ति५काष्ठालुकलता अलावुवल्ली स्वल्पावत्सावत्सरूपासन्निवेशो
रचना अगस्तिर्मुनितरुःपक्षिपूपिकापक्षाणांवेत्रवलानिभांडभेदाः
पोटः शकलःकिंशुकानि पलाशाः वृक्षपुष्पाणि वल्वजास्तृणभे
दाःअंधकाष्ठाइति प्रसिद्धाः ॥

शाल्मलिफलतूलसंचयवहुलैःसान्निहितनलशालिशालूकखंडकुमुदवीजवेणुतंडुलैः संगृहीतमालवीजैः भस्ममलनम्लानकाश्मर्यकूटव्याधृतकटै रश्यानराजादनमदनफलस्फीतैर्मधूकासवमद्यप्रायैः कुसुंभकुंभगंडकुसूलै रविरहितराजमाषत्रपुसककर्कटिकाकूष्मांडालावुवीजैः पोष्यमाणवनविडालमालुधाननकुलशालिजातजातकादिभिरटवीकुटुंविनां गृहैरुपेत वनग्रामकं ददर्श तत्रैवचावसादिति॥ इतिश्रीहर्षचरिते सप्तमउच्छ्वासः ॥ ७ ॥ * ॥

शाल्मलिः रक्तपुष्पा उक्तंच शाल्मलीरक्तपुष्पाचकुकुटीस्थिरजीविता पिच्छिलातूलिनीमोचाकंडूकाढ्यासुपूरिणीति तूलंकर्पासःनलशालिःशालिभेदः६ शालूकंपद्ममूलं उक्तंच पद्ममूलंतुशालूकंसकिलंतत्किरातकं शालीनंपद्मकंदंचजालालूकंनिगद्यतइति काश्मर्यः कश्मीरीहीरः काश्मीरीमधुमत्यापि श्रीपर्णीसर्वतोभद्रागांभारीकृष्णमृत्तिकेति कूटाः कुनालानि राजादनः कपीष्टःउक्तंच क्षीरोदकस्तु राजन्यः क्षीरमृत्स्नः कपीनृपः राजादनोदृढस्कंधः कपीष्टः प्रियदर्शनइति मदनोरोधः उक्तंच मदनः शल्यकोरोधःगालःपिंडीतकः फलं भसरःकरहाटश्चसुमनोतिसुपुष्पकइति मधूकागुडपुष्पःउक्तंच गुडपुष्पोरोध्रपुष्पोमालप्रस्थोथमाधवइति राजमाषोनिष्पावः त्रपुसंलाडुकः कार्कटिकादयः प्रसिद्धाः मालुधानामालुकावधाख्याः प्राणिभेदाः नकुलादयश्च ॥ इतिश्रीशंकरकविविरचिते हर्षचरितसंकेतछत्रलब्धिर्नामसप्तमउच्छ्वासः ॥ ७ ॥

उं सहसा संपादयता मनोरथप्रार्थितानि वस्तूनि दैवेनापि क्रियते भव्यानां पूर्वसेवैव १ विद्वज्जनसंपर्को नष्टेष्टज्ञातिदर्शनाभ्युदयः कस्य न सुखाय भवने भवति महारत्नलाभश्च २ अथापरेद्युरुत्थाय पार्थिवस्तस्माद्ग्रामकान्निर्गत्य विवेश विन्ध्याटवीं आटच तस्यामितश्चेतश्च सुबहून्दिवसान् एकदा तु भूपते र्भ्रमत एवाटविकसामन्तशरकेतोः सूनु र्व्याघ्रकेतुर्नाम कुतोपि कज्जलश्यामलश्यामलतावलयेनाऽधिललाटमुच्चैः कृतमौलिबंधमन्धकारिणी मकारणभुवा भ्रुकुटिभंगेन त्रिशाखेन त्रियामामिव साहससहचारिणीं ललाटस्थलीं सदा समुद्वहंतं अवतंसितैकशुकपक्षकप्रभाहरितायमानेन पिनद्धकाचरकाचमणिकार्णिकेन श्रवणेन शोभमानं किंचिच्चुल्लस्य प्रविरलपक्ष्मणः चक्षुषः ॥

उंसहसेत्यादियुगलकेन श्रीहर्षाभ्युदयाशिवाकारमित्रराज्यश्रीप्राप्येकावलीलाभान्सूचयति भव्याना पूर्वसेवा दैवेन शुभसंपादनेन शुभाभ्यासभावितचिंता भूयोपि क्रियतेइति प्रतिपाद्यते १।२ एकदातिस्यादौ व्याघ्रकेतुर्नाम कुतोपि शवरयुवानमादाय भूपतेरर्थात् समीपमाजगामेति संबंधः अटव्यांभव आटविकः श्यामा गंधप्रियंगुः मौलयः केशाः अंधकारिणीं कृष्णां त्रिशाखेन त्रिरेखेन पिनद्धः बद्धः काचरस्य कपिलस्य काचमणेः कर्णिका यत्र तत्तेन चुल्लः चिल्लः उक्तंच स्युः क्लिन्नाक्षे चुल्लचिल्लपिल्लाः क्लिन्नाक्षिणचाप्यमीति

सहजेनरागरोचिषा रसायनरसोपयुक्तं तारक्ष वक्षःरजमिव क्षरंतं अवनाटनासिकंचिपिटाधरं चिक्किनचिबुकमहीनहनूत्कटकपोलकूटास्थिप र्यंत मीषदवाग्रग्रीवाबंधं स्कन्नस्कंधार्धभागं अनवरतकोदंडकुंडलीकरणकर्कश व्यायामवि स्तारितेनांसलेनोरसा हसंतमिव तटशिलाप्र थिमानं विंध्यगिरेः अजगरगरीयसाच भुजयुग लेन लघयंतमिव तुहिनशैलसालद्रुमाणां द्राघि मानं वराहवालवलितवंधनाभिर्नागदमनजूटि काभि र्जटिलीकृतपृष्ठे प्रकोष्ठे प्रतिष्ठांगतं गोदंत मणिचित्रं त्रापुषं वलयंविभ्राणं अतुन्दिलमपि तुंडिभं अहीरमणीचर्मनिर्मितपट्टिकयाश्चित्र चित्रकत्वक्परिवारया ॥

तरक्षस्तुमृगादनः आरण्यश्वेत्यर्थः तस्येदंतारक्षवं तच्चकाचिद्रसायने नोपयुज्यते अवनाटोनिम्नः चिपिटःस्थूलः ईषल्लंवश्च चिक्किनंस्थूले षद्रस्वंचिबुकमधराधः उक्तंच अधस्ताच्चिबुकंगंडौकपोलौतत्पराहनु रिति अवाग्रावनताग्रीवा कंधरा स्कन्नः शुष्कोलंवमानोवाउन्नतो वास्कंधोभुजाशिरोंसोस्त्री अंसलेनवलवताउरसावक्षसा ८ अजग रः सर्पभेदः द्राघिमानं दीर्घत्वं वराहःसूकरः नागदमनोविषहरः ओषधिभेदः जूटिका लघुमूलं गोदंतः सर्पभेदः त्रपुणोविकारस्त्रापुषं त्रपुजतुनोः षुक् अतुंदिलंकृशोदरंतुंडिभंवृहन्नाभिकं तुंदिवालिचाटे भेः साहिव्यायामवशात् क्षाममध्यउन्नतनाभिस्तुंडिभः अहीरमणी नामाहिवक्रः चित्रकःछाययागंधतोप्यपरसर्पत्रासकः ॥ १ ॥

संकुबूजाजिनजालिकया शृंगमयमसृणमुष्टि भागभास्वरया पारतरसलेशलिप्तसमस्तमस्तिकया कृपाण्या करालितविशंकितकटिप्रदेशं प्रथमयौवनलिख्यमानमध्यभागभ्रष्टमांसभरिताविव स्थवीयांसा वूरुदंडौदधतं अच्छभल्लचर्ममयेन भल्लीप्रायप्रभूतशरभृता शबलशार्दूलचर्मपट्टपीडितेनाऽलिकुलकालकंबललोम्ना पृष्ठभागभाजा भस्त्राभरणेन पल्लवितमिव कार्श्यमुपदर्शयंतं उत्तरत्रिभागोत्तंसितचाषपिच्छचारुशिखरैखदिरजटानिर्माणैखरप्राणैप्रचुरमयूरपित्तपत्रलताचित्रितत्वचि त्वाचिसारगुरुणि वामस्कंधाध्यासितधनुषिदोषि लंबमानेनार्वाक्शिरसाशितशरकृत्तकनलकविवरप्रवेशितेतरजंघाजानितस्वस्तिकबंधेन बंधूकलोहितरुधिरराजिरंजितघ्राणवर्त्मना वपुर्विततिव्यक्तविभाव्यमानकोमलक्रोडरोमशुक्लिम्णा शशेन शिताटनीशिखाग्रग्रथितग्रीवेण चापावृतचंचूत्तानताम्रतालुनातित्तिरिणावर्णकमुष्टिमिव मृगयायादर्शयंतं विषमविषदूषितवदनेनच विकर्णेन कृष्णाहिनेव मूलगृहीतेन व्यग्रदक्षिणकराग्रंजंगममिवागिरितटतमालपादपंयंत्रोल्लिखितमश्मसारस्तंभमिव भ्रमंतंअंजनशिलाछेदमिव चलंतं

श्रयः सारमिव गिरेर्विंध्यस्य गलंतंपालकंक
रिकुलानां कालपाशंकुरंगयूथानां धूमकेतुंमृ
गराजचक्राणां महानवमीमहं महिषमंडला
नां हृदयमिव हिंसायाः फलमिव पापस्य का
रणमिव कलिकालस्य कामुकमिवकालरात्रेः
शवरयुवानमादाया जगाम दूरेच स्थापयि
त्वाविज्ञापयांवभूव देवसर्वस्यास्य विंध्यस्य
स्वामी सर्वपल्लीपतीनां प्राग्रहरः शवरसेना
पतिर्भूकंपोनाम तस्यायं निर्घातनामास्वस्री
यः सकलस्यास्यविंध्यकांताराराण्यस्य पर्णा
नामप्यभिज्ञः किमुतप्रदेशानां एनंपृच्छतुदे
वः योग्योयमाज्ञां कर्तुं इति कथितेच निर्घा
तस्तु क्षितितलनिहितमौलिः प्रणाममकरोत्
उपनिन्येच तित्तिरिणासह शशोपायनम् अ
वनिपतिस्तु संमानयन्स्वयमेव तमप्राक्षीत्
अंगाभिज्ञायूयमस्य सर्वस्योद्देश्यस्य विहा
रशीलाश्च दिवसेष्वेतेषुभवंतः सेनापतेर्वान्य
स्य वातदनुजीविनः कस्यचिदुदाररूपा ना
रीत्रागता भवेद्दर्शनगोचरामिति निर्घातस्तुभू
पालालापनप्रसादेनात्मानं वहु मन्यमानः
प्रणनाम दर्शितादरंच व्यज्ञापयत् देव प्राये
णात्रहरिण्योपिनापारिगताः संचरंति सेनाप
तेः कुतएव नार्योनाप्येवंरूपा काचिदवला ॥

तथापि देवादेशाद्दिदानीमन्वेषणं प्रति दिनमनन्यकृत्यैः क्रियते यत्नःइतश्चाधिगव्यूतिमात्र एवमुनिमहिते महतिमहीधरमालामूलरुहि महीरुहषंडेपिंडपातीप्रभूतान्तेवासिपरिवृतः पाराशरी दिवाकरमित्रनामा गिरिनदीमाश्रित्य प्रतिवसति स यदि विन्देद्वार्त्तामिति तच्छ्रुत्वानरपतिरचिंतयत् श्रूयतेहि तत्रभवतः सुगृहीतनाम्नःस्वर्गतस्य गृहवर्मणोबालमित्रं मैत्रायणीय स्त्रयीं विहाय ब्राह्मणायनो विद्वानुत्पन्नसमाधिःसौगतेमते युवैव काषायाणि गृहीतवानिति प्रायशश्च जनस्यजनयतिसुहृदपिदृष्टोभृशमाश्वासं अभिगमनीयाश्च गुणाःसर्वस्य करुयनप्रतीक्ष्यांमुनिभावोभगवतीच वैधेयेपि धर्मगृहिणी गरिमाणमापादयति प्रव्रज्या किं पुनःसकलजनमनोमुषि विदुषिजने यतोनः कुतूहलि हृदय मभूत्सततमद्य दर्शनं प्रति प्रासंगिकमेवेदमापतितमतिकल्याणं पश्यामः प्रयत्नप्रार्थितदर्शनं जनामिति प्रकाशं चाब्रवीत्

पाराशरीभिक्षुः विन्देल्लभेत मैत्रायणीयः शाखायाअध्येता ऋग्यजुः सामनामाथत्रयीवेदास्त्रयः स्मृताः ब्राह्मणायनोद्विजवरिष्ठः समाधिरेकाग्रता १ अभिगमनार्हाः अभिगमनीयाः प्रतीक्ष्यः पूज्यः वैधेयेमूर्खे उक्तंच अज्ञेमूर्खंयथाजातमूर्खंवैधेयबालिशाइति ॥

अंगसमुपदिश तमुद्देश्यं यत्रास्तेसापिंडप॰ती ्येवमुक्त्वाच तेनैवोपदिश्यमानवर्त्मा प्रावर्तत गंतुम् अथक्रमेण गच्छतएवतस्यानवकेशि नःकुटू पलितकर्णिकाराः प्रचुरचंपकाः स्फी तफलेग्रहयः फलभरभरितनमेरवः नीलद लनलदनारिकेरनिकराः हरिकेसरसरलपरि कराः कोरकनिकुरुंवरोमांचितकुरवकराजयः रक्ताशोकपल्लवलावण्यलिप्यमानदशदिशः प्रविचलितहिंगवः प्रचुरपूगफलाः प्रसवपूग पिंगप्रियंगवः ॥

अथक्रमेणगच्छतएवास्यैवंविधास्तरवोदर्शनमवतेरुरितिसंबंधअ वकेशीनिष्फलतरुः उक्तंच वंध्योफलोवकेशीचकर्णिकारोद्रुमो त्पलः परिव्याधइतिपर्यायःस्याद्वंध्यःफलेग्रहिः नमेरुस्तरुभेदः न लदः सद्धकीमांसानारिकेलस्तुलांगलीत्यमरः हरिकेसरः उक्तंच वात्स्येयः केसरोनागकेसरः कांचनाह्वयः सरलादेवदारवः कोर कः कलिकाकुरवकायेयोषितामालिंगनैः पुष्यंतिरक्ताशोकायेसा लक्तककामिनीचरणाहताः फुल्लंति केसरावकुलाःये कांतागंडूष शीधुसेकेन विकसंतितिलकाः क्षुरकाः येप्रसादितकामिनीदर्शन मात्रेण कुसुमिताः संपद्यंते हिंगुरामठं उक्तंच सहस्रवेधिजतुकंवा ल्हीकंहिंगुरामठंइति पूगःक्रमुकवृक्षः प्रसवपूगाः पूगफलसमू हाः प्रियंगुः श्यामालता श्यामातुवनिताह्वयालतागोवर्धनीगुद्रा प्रियंगुः फलिनी फली विश्वक्सेनागंधफलीकारंभः प्रियक श्चेत्‌ ॥

परागपिंजरितमंजरीपुंज्यमानमधुपमंजुशिंजा जनितजनमुदः मदमलेमचकितमुचुकुंदस्कंध कांडकथ्यमानानिः शंककर्कर रफटकंडूतयः उड्डी यमानानिः शंकचटुलकृष्णशारशावसकलशा द्वलसुभगभूमयः तमःकालतमतमालमालामा लितातपाः स्तवकदंतुरितदेवदारवः तरलतां वूलीस्तंवजालकितजंवूजंभीरवीथयः कुसुमर जोधवलधूलीकदंवचक्रचुंवितव्योमानः वहल मधुमोक्षोक्षितक्षितयः परिमलघटितव्रणघ्राण तृप्तयः कतिपयदिवससूतकुक्कुटीकुटीकृतकुट जकोटराः चटकासंचार्यमाणवाचाटचाटकेरक्रि यमाणचाटवः सहचरीचारणचंचुरचकोरचंच वोनिर्भयभूरिभुरुंडभुज्यमानपाककपिलपील वः सदाफलकट्फलफलविशसनानिः शूकशुक शकुंतशातितशलाटवः ॥

पुंज्यमानःसंह्रियमाणः १ १ मुचुकुंदाःपुष्पतरुभेदाः करटीगंडैतमा लस्तापिच्छःउक्तंचशक्रपादयः पारिभद्रकःभद्रदारुद्रुकिलिमंपीत दारुचदारुचपूतिकाष्ठंचसप्तस्युर्देवदारुणीति तांवूलीनागवल्ली वृक्षभेदः जंभीरादंतशठाख्याः उक्तंच स्युर्जंवीरेदंतशठजंभजंभी रजंभलाइति समीरणः मरुवकः प्रस्थपुष्पः फणिज्जकः जंभीरेइ ति धूलीकदंवाख्याग्रैष्मिकावृक्षभेदाः कुटजोगिरिमल्लिका उक्तंच कुटजोगिरिमल्लिकेति चटकायात्र्यपत्यानिचाटकेराःचारणंभोज नंचंचुरानिपुणाः भुरुंडाः पक्षिभेदाः पीलुफलं त्रसीकंकट्फलः श्रीपर्णाख्यःवृक्षःउक्तंच श्रीपर्णिकाकुमुदिकाकुंभीकैडर्यकट्फला विति विशसनंभेदनं निः॥ शूकानि यः शलाटून्यपक्वानिफलानि उक्तंच आमेफलेशलाटुः स्यादिति ॥

शैलेयसुकुमारशिलातल सुखशायितशरभशिशवः शफलिकाशिफाविवरविस्रब्धविवर्त्तमानगोधेरराशयः निरातंकरंकवः निराकुलनकुलकुलकेलयः कलकोकिलकुलकवलितकलिकोद्गमाः सहकारारामरोमंथायमानचमरयूथाः यथासुखनिषण्णनीलांडजमंडलाः निर्विकारवृकविलोक्यमानपोतपीतगवयधेनवः श्रवणहारिसनीडगिरिनितंवनिर्झरनिनादनिद्रानंद मंदायमानकरिकुलकर्णतालदुंदुभयः समासन्नकिन्नरीगीतरवरसमानरुरवः प्रमुदिततरतरक्षवः क्षतहारितहरिद्राद्रवरज्यमाननववराहपोतपोत्रवलयः गुंजाकुंजगुंजज्जाहकाः जातीफलकसुप्तशालिजातकवलयः दशनकुपितकपिपोतपेटकपाटितपाटलकीटपुटकाः लकुचलंपटगोलांगूललंघ्यमानलवलयाः ॥

शिलासुभवंशैलेयं शफलिका लताभेदः स्त्रियांगोधेरगोधारगोधेयागोधिकात्मजेइति रंकवोमृगभेदाः सहकारआम्रः उक्तंच आम्रश्चूतोरसालोसौसहकारोतिसौरभ इति रोमंथायमानाः उद्गीर्णचर्वंतः चमरामृगविशेषाःनीलांडजामृगभेदाःवृका आरण्यश्वानःपोतः शिशुःपोतःपाकोर्भकोडिंबः पृथुकः शिशुरिति गवयाःगोसदृशाःप्राणिभेदाः १२ तरक्षुस्तुमृगादनः हरिद्रापीतद्रुः उक्तंच अथपीतद्रुःकालेयकहरिद्रवाः दार्वीपचंपचादारुहरिद्रापर्जनीत्यपि वराहः सूकरःपोत्रंसूकरमुखं गुंजारक्तिका जाहकाः शालिजातकाश्च प्राणिभेदाः पाटलाःकीटाः पुटकाआलयाः लकुचोलिकुचोडुहुरित्यमरः गोलांगूलाःकृष्णमुखवानराः लवलयोलताभेदः ॥

वद्धवालुकालवालवलयाः कुटिलकुटावलिव लितवेगगिरिनदिकास्रोतसः निविडशाखाकां डलंवमानकमंडलवः सूत्रशिक्यासक्तरिक्तभि क्षाकपालपल्लवितलतामंडपाः निकटकुटीकृत पाटलमुद्राचैत्यकमूर्त्तयः चीवरांवररागकषायो दकदूषितोद्देशाः मेघमया इव कृतशिखंडिकु लकोलाहलाः वेदमया इवापरिमितशाखाभे दगहनाः माणिक्यमया इव महानीलतनवः तिमिरमयाइव सकलजननयनमुषः यामुनाइ वोर्ध्वीकृतमहाहूदाः मरकतमणिश्यामलाः क्री डापर्वतका इव वसंतस्य अंजनाचलमया इव पल्लविताः तनया इवाटवीजाता विंध्यस्य पा तालांधकारराशयइव भित्त्वा भुवमुत्थिताः प्र तिप्रवेशिका इव वर्षावासराणां अंशावतारा इव कृष्णरात्रीणामिन्द्रनीलमयाःप्रासादाइवव नदेवतानांपुरस्ताद्दर्शनपथमवतेरुस्तरवःततो नरपतेरभवन्मनासिअदूरवार्त्तिनाखलुभावितव्यं भदंतेनेत्यवतीर्यंच गिरिसारिति समुपसृत्य

कमंडलुः मुनिजलभांडं शिक्यंभिक्षाभाजनं जालिका निकटकु टीषु कृताः मुद्रया कृतानामल्पचैत्यानां मूर्त्तयोयेषु शाखालताः कठाद्याःचमहानीलाअत्यंतकृष्णाः महानीलाश्चमणिभेदाः नयन मुषोरम्यत्वात्प्रकाशनाच्च १३ प्रतिप्रसवकाः प्रतिरुछंदकाः भदंत इति सौगतप्रतिमानां पूजावचनमुद्यानामित्यन्ये ॥

युगपद्विश्रामसमयसमुन्मुक्तहेषाघोषबधिरीकृ
ताटवीगहनामस्मिन्नेवप्रदेशेस्थापयित्वावाजि
सेनामवलंव्यच तपस्विजनदर्शनोचितविनयं
हृदयेन दक्षिणेनचहस्तेनमाधवगुप्तमंसेविरलै
रेव राजभिरनुगम्यमानःचरणाभ्यामेवप्रावर्त्त
तगंतुम् अथतेषांतरूणांमध्येनानादेशीयैःस्था
नस्थानेषुस्थाणूनाश्रितैःशिलातलेषूपविष्टैःल
ताभवनान्यध्यावसद्भिररण्यानीनिकुंजेषुनिली
नैःविटपच्छायासुनिषण्णैस्तरुमूलानिनिषेवमा
नैर्वीतरागैराहतैर्मस्करिभिःश्वेतपटैःपांडुरिभि
भिक्षुभिर्भागवतैर्वर्णिभिः केशलुंचकैः कापिलै
र्लौकायतिकैर्जैनैःकाणादैरौपनिषदैरैश्वरकार
णिकैः कारंधमिभिः ॥

अथेत्यादौतरूणांमध्येदिवाकरमद्राक्षीदितिसंबंधःनानादेशीयैर्वीत
रागैरिति चार्हतैरित्यादीनांसर्वेषांविशेषणं स्थाणूनाश्रितैरित्यादि
तु केषांचित् स्थाणुरस्त्रीध्रुवः शंकुरित्यमरः महारण्यमरण्यानी वि
स्तारोविटपोस्त्रियामित्यमरः मूलंवुध्नोंघ्रिनामकः अर्हन्देवतायेषां
ते आर्हतास्ते नग्नक्षपणकैः मस्करिभिः परिव्राजकैःश्वेतपटैः श्वे
ताणांकंवलीवासोभिः नग्नक्षपणभेदैः पांडुरभिक्षुभिःत्यक्तकाषायैः
भागवतैर्विष्णुभक्तैः वर्णिभिर्ब्रह्मचारिभिः केशलुंचनैर्यथार्थनाम
भिः लोकायतिकैश्चार्वाकैः जैनैर्बौद्धैः कापिलैः सांख्यैः काणादै
र्वैशेषतार्किकैः औपनिषदैर्वेदांतवादिभिः ऐश्वरकारणिकैः नैया
यिकैः कारंधमिभिर्धातुवादिभिः पाषांडभेदैरित्यर्थः ॥

धर्मशास्त्रिभिः पौराणिकैः साम्रतंतवैः शाब्दैः पांचरात्रिकैः अन्यैश्च स्वान् स्वान्सिद्धांताञ्छृएवद्भि रभियुक्तै श्चिंतयद्भिश्च प्रत्युच्चरद्भिश्च संशयानैश्च निश्चिन्वद्भिश्च व्युत्पादयाद्भिश्च विवदमानै श्चाभ्यस्यद्भिश्च व्याचक्षाणैश्च शिष्यतां प्रतिपन्नै दूरादेवावेद्यमानं अतिविनीतैः कपिभिरपि चैत्यकर्म कुर्वाणैस्त्रिसरणपरैः परमोपासकैः शुकैरपि शाक्यशासनकुशलैः कोशं समुपदिशद्भिः शिक्षापदोपदेशोपशमशालिनीभिः शारिकाभिरपि धर्मदेशनां दर्शयंतीभिः अनवरतश्रवणगृहीतालोकैः कौशिकैरपि बोधिसत्त्वजातकानि जपद्भिः जातसौगतशीलशीतलस्वभावैः शार्दूलै रप्यमांसाशिभि रुपास्यमानं आसन्नोपांतोपविष्टविस्रब्धानेककेसरिशावकतया मुनिपरमेश्वरमकृत्रिम इव सिंहासने निषण्णमुपशममिव पिवद्भिर्वनहारिणै र्जिह्वालताभि रुपलिह्यमानपादपल्लवं ॥

धर्मशास्त्रिभिः स्मृतिज्ञैः शाब्दैर्वैयाकरणैः पांचरात्रैर्वैष्णवभेदैः सिद्धांतानागमान् १४ त्रिसरणेति त्रयोवुद्धधर्मसंघाः शाक्योवुद्धःकोशोवुद्धसिद्धांतोवसुबंधकृतः देशना कथनं बोधिः समाधिः तत्प्रधानं सत्त्ववुद्धभट्टारकः तदीयानिजातकानिजीमूतवाहनादिजन्मकथाः मुनिवरमीश्वरं मुनीश्वरंवुद्धं ॥

वामकरतलनिविष्टेन नीवारमश्नता पारावतपोतेन कर्णोत्पलेनेव प्रियां मैत्रीं प्रसादयंतं इतरकरकिसलयनखमयूखलेखाभि र्जनितजनव्यामोहमुद्ग्रीवं मयूरं मरकतमणिकरकमिव वारिधाराभिः पूरयंतं इतस्ततः पिपीलकश्रेणीनां श्यामाकतंडुलकणान्स्वयमेव किरंतं अरुणेन चीवरपटलेन मृदीयसासंवीतं वहलवालातपानुलिप्तमिव पौरंदरंदिग्भागंउल्लिखितपद्मरागप्रभाप्रतिमया रक्तावदातयादेहप्रभया पाटलीकृतानां काषायग्रहणमिव दिशामप्युपदिशंतं अनौद्धत्यादधोमुखेन मंदमुकुलितकुमुदाकरेण स्निग्धधवलप्रसन्नेन चक्षुषा जनक्षुण्णक्षुद्रजंतुजीवनार्थममृतमिव वर्षंतं सर्वशास्त्राक्षरपरमाणुभिरिव निर्मितं परमसौगतमप्यवलोकितेश्वरं अस्खलितमपि तपसिलग्नं आलोकमिव यथावस्थितसकलपदार्थप्रकाशकं दर्शनार्थिनां सुगतस्याप्यभिगमनीयमिव

अपकारिण्यभिप्रीतिर्मैत्री पिपीलकःकीटभेदः १५ चीवरंमुनिवासः संवीतमाच्छादितं उल्लिखितः चरणोल्लीढः क्षुद्राः स्वल्पाः अवलोकितेश्वरनामा वुद्धविशेषोपि अस्खलितमपीति स्खलितोह्यन्यत्रलग्नोभवति सत्वभ्रष्टशीलस्तपःस्थश्च ॥

धर्मस्याप्याराधनीयमिव प्रसादस्यापि प्रसादनीयमिव मानसस्यापि माननीयमिव वंद्यत्वस्यापिवन्दनीयमिव जन्मजपस्य नेमिनियमस्य तत्त्वं तपसःशरीरं शौचस्यकोशंकुशलस्य वेश्म विश्वासस्य सर्वस्वं सहृदतायाः दाक्ष्यं दाक्षिण्यस्य पारं परानुकंपायाः निर्वृतिंसुखस्यमध्यमे वयसि वर्त्तमानं दिवाकरमित्रमद्राक्षीत् अतिप्रशांतगभीराकारारोपितवहुमानश्च सादरं दूरादेव शिरसावचसामनसा चववन्दे दिवाकरमित्रस्तु मैत्रीमयः प्रकृत्या विशेषतस्तेनापरेणादृष्टपूर्वेणामानुषलोकोचितेन सर्वाभिभाविना महानुभावाभोगभाजा भ्राजिष्णुनाभूपतेरप्राकृतेनाकारविशेषेणतेनचाभिजात्यप्रकाशकेन गरीयसा प्रश्रयेण चाल्हादितः चक्षुषिच चेतसि च युगपद्गृहीतवीरस्वभावोपिच संपादितससंभ्रमाभ्युत्थानः संकलय्य किंचिदुद्गमनकेन विलोलं विलंवमानं वामांसाच्चीवरपटांत मुत्क्षिप्यानेकाभयदानदीक्षादाक्षिणोदक्षिणं महापुरुषलक्षणलेखाप्रशस्तहस्तं

दिवाकरमित्रस्तुतेनभूपतावाकारविशेषेणप्रश्रयेणचयुगपच्चक्षुषि चेतसिचआल्हादितआनंदितः सन्नन्वयहादिति संबंधः महानुभावानामुत्तमानांआभोगंटंकंभजत इत्याकारविशेषणं संकलय्य संयम्य उद्गमन मुत्थानं ॥

स्निग्धमधुरया वाचा सगौरवमारोग्यदानेन रा
जानमन्वग्रहीत् अभ्यनन्दच्चस्वागतगिरा गुरु
मिवाभ्यागतं वहुमन्यमानः स्वेनासनेनाङ्गमन्त्रे
तिनिमंत्रयांचकार पार्श्वस्थितंच शिष्यमब्रवीत्
आयुष्मन्नुपानय कमंडलुना पादोदकमिति रा
जा त्व चिंतयत् अलोहः खलु संयमनपाशः सौ
जन्यमभिजातानांस्थानेखलु तत्रभवान् गुणा
नुरागीग्रहवर्मा वहुशो वर्णितवानस्य गुणानि
ति प्रकाशचावभाषे भगवन्दर्शनपुण्यानुगृहीत
स्य मम पुनरुक्त इवायम यं प्रयुक्तः प्रतिभात्य
नुग्रहः चक्षुष्प्रमाणप्रसादस्वीकृतस्यच परकर
णामिवासनादिदानोपचारचेष्टितं अतिभूमि भू
मिरेव भवादृशां पुरः संभाषणामृताभिषेकप्रक्षा
लितसकलवपुषश्च मे प्रदेशवृत्ति पाद्यमप्यपा
र्थकं आसतां भवंतोयथासुखमासीनोहामित्य
भिधायक्षितावेवोपाविशत् अलंकारोहिपरमा
र्थतः प्रभवतां प्रश्रयातिशयोरत्नादिकस्तु शि
लाभारः ॥

आगमनमागतंसुखेनागतंस्वागतंप्रश्नार्थंगीस्तयाअत्रोपविशेति १६
भूमिमतिक्रांताअतिभूमिःस्वर्गादिस्थानरूपाप्रदेशवृत्तिः एकदेशोवा

इत्याकलय्यपुनः पुनरभ्यर्थ्यमानोपियदानप्र त्यपद्यतपार्थिवोवचनंतदास्वयमेवासनं पुनर पिभेजेभदंतोभूपतिमुखनलिननिहितनिभृतन यनयुगलनिगडनिश्चलीकृतहृदयश्चस्थित्वा कांचित्कालकक्ष्यांकालिकालकल्मषकालुष्य मिवक्षालयन्नमलाभिर्दन्तमयूखमालाभिर्मूल फलाभ्यवहारसंभवमुद्वमन्निवच परिमलसुभ गंविकचकुसुमपटलपांडुरं लतावनमवादीत् अद्यप्रभृति नकेवलमयमानिन्द्योवन्द्योपिप्रका शितसत्सारः संसारःकिंनामनालोक्यतेजीव द्भिरद्भुतंयेन रूपमचिन्तितोपनतमिदंदृक्पथ मुपगंत एवंविधैरनुमीयंतेजन्मांतरावस्थितसु कृतानि हृदयोत्सवैः इहापिजन्मनि दत्तमेवा कस्माकममुना तपःक्लेशेनफलमसुलभदर्शनं दर्शयता देवानांप्रियं आतृप्तेः पीतममृतमी क्षणाभ्यांजातं निरुत्कंठंमानसं निर्वृत्तिसुख स्य महद्भिः पुण्यैर्विना न विश्राम्यंतिसज्जने स्वाद्याशिद्दश:सुदिवसः सयास्मिंजा तोस्मि सा सुजाताजननीयासकललोकजीवितजनकम जनयदायुष्मंतं

नयनयुगलमेवनिगडोबंधनशृंखला १७ निर्वृत्तिश्चितविश्रमः

पुण्यवंतिपुण्यान्यपितानियेषामासिपरिणामः
सुकृततपसस्तेपरमाणवःयेतवपरिगृहीतसर्वा
वयव : तत्सुभगंसौभाग्यमाश्रितोसियेनभ
व्यः सपुरुषभावोभवत्यवस्थितोयोयत्सत्यं
मुमुक्षोरपिमेपुण्यभाजमालोक्य पुनःश्रद्धा
जातामनुजजन्मनिनेच्छद्भिरप्यस्माभिर्दृष्टःकु
सुमायुधः कृतार्थमद्यचक्षुर्वनदेवतानामद्यस
फलंजन्मपादपानां येषामसि गतोगोचरममृ
तमयस्यभवतोवचसामधुर्यं कार्यमेवास्यत्वी
दृशिशैशवे विनयस्योपाध्यायंध्यायन्नपिनसं
भावयामिभुविसर्वथाशून्यआसीदजायते दी
र्घायुषिगुणग्रामोधन्यः सभूद्यस्यवंशेमणि
रिवमुक्तामयः संभूतोस्यैवंविधस्य पुण्यवतः
कथंचित्प्राप्तस्यके नाप्रियं समाचरामइतिपा
रिप्लवंचेतोनःसकलवनचरसार्थसाधारणस्य
कंदमूलफलस्यगिरिसरिदंभसोवा के वयम्

अमृतमयस्येतियतोमृतमयस्त्वमतोभवद्वचसांमाधुर्यंकार्यंप्रयोज्यं
कारणसदृशेनकार्येणभावितव्यमित्युक्तेः शून्यानिराश्रयाःवंशोव
णुरपि मुक्तामयस्त्यक्तदोषोमौक्तिकरूपश्चपारिप्लवंदोलाधिरू
ढमित्यर्थःअनेकदुःखहेतुत्वात् १८

अपरोपकरणीकृतस्तुकायकलिरयमस्माकं सर्वस्वमवशिष्टमिष्टातिथ्याय स्वायत्ताश्चवि द्यंते विद्याविदंवःकतिचित्उपयोगंतुनप्री तिर्विचारयतियदिचनोपरुणाद्धिकंचित्कार्यल वंअरक्षणीयाक्षरं वा कथनीयं तत्कथयतुभ वान् श्रोतुमभिलषतिहृदयंसर्वमिदंनःकेनकृ त्यातिभोरणभव्येभाषितवान्भूमिमेतामभ्रम णयोग्यांकियदवधिवाशून्याटवीपर्य्यनक्लेशः कल्याणराशेःकस्माच्चसंतप्तरूपेव तेतनुरिय मसंतापार्हाविभाव्यतइतिराजातुसादरतरम ब्रवीत्आर्य दर्शितसंभ्रमेणानेनमधुरसाविसरं धृतमिवहृदयधृतिकरमनवरतंवर्षता वचसैव तेसर्वमनुष्ठितंधन्योस्मि यदेवमभ्यर्हितमनुप चरणीयमपि मान्योमन्यते मां अस्यच महा वनभ्रमणपरिक्लेशस्य कारणमवधारयतु मति मान् ममाहविनष्टोनिखिलेष्टबंधोर्जीवितानुबं धस्य निबंधनमेकैव यवीयसीस्वसावशिष्टा

कायएवकलिः अरक्षणीयाक्षरमितियद्यस्मात्कमुपरिविश्वासो स्तीत्यर्थः अतिशयेनाल्पायवीयसीकनिष्ठा अयोगाविरुद्धात्रि धिवैधुर्यादिदंविंध्यवनमनिशं प्रविष्टेतिपदयोजना १९

सापि भर्त्तुर्वियोगाद्वैरिपरिभवभयाद्भ्रमंती क
थमपि विंध्यवनमिदमशुभशवरबलबहुलम
गणितगजकुलकालिलमपरिमितमृगपतिश
रभभयं उरुमहिषमुषितपथिकगमनमतिनि
शितशरकुशपरुषमवटशतविषममविशत्तूत्र
तरुतामन्वेष्टुं वयमनिशं निशिनिशिच सतत
मिमामटवीमटामः नचैनामासदयामः कथ
यतुच गुरुरपियदि कदाचित्कुतश्चिद्वनचरतः
श्रुतिपथमुपगतातद्वार्त्तेतिअथतच्छ्रुत्वाजा
तोद्वेगइवभदंतः पुनरभ्यधात् धर्मिन्नखलुक
श्चिदेवंरुपोवृत्तांतोस्मानुपागतःअभाजनंहि
चयमीदृशानां प्रियाख्यानोपायनानांभवतां
इत्येवंभाषमाणएव तस्मिन्नकस्मादागत्याघ
रःशर्मिनिवयसिवर्त्तमानःसंभ्रांतरूपइवपुर
स्ताद्विरचितांजलिर्जातकरुणःप्रक्षरितचक्षु
र्भिक्षुरभाषतभगवन्भदन्त महत्करुणं वर्त्तते
बालैवबलवद्व्यसनाभिभूता भूतपूर्वापि कल्या
णरूपा स्त्रीशोकवेगविवशा वैश्वानरं विशति
संभावयतु तामप्रोषितप्राणां भगवानभ्युपपद्य
तांसमुचितैः समाश्वासनैःअनुपरतपूर्वक्रमिकी
दृसापि दुःखितं दयाराशेरार्यस्यगोचरगतामिति

अनिशं सदा अटवीं अटामःगच्छामः २०

राजा तु जातानुजाशंकः सोदर्यस्नेहाच्चां तर्द्रुतइव दुःखेन दोदूयमानहृदयः कथं पिगद्गदिकागृहीतकंठोविकलवाग्बाष्पायमानदृष्टिःपप्रच्छपाराशरिन्किंयद्द्वरेसाय्योषिदेवं जातीयाजीवेद्याकालमेतावन्तामितिपृष्टावात्व याकासिकस्यासिकुतोसि किमर्थंवनमिदमभ्युपगतासिविशसिचकिंनिमित्तमनलमित्यादितःप्रभृति कात्स्न्येंन कथ्यमानमिच्छामि श्रोतुंकथमार्य स्यगतादर्शनगोचरमाकारतो वाकीदृशीतितथाभिहितस्तुभूभुजाभिक्षुराचचक्षेमहाभागश्रूयतांअहंहिप्रत्यूषस्यैवाघवन्दित्वाभगवंतमनेनैवगिरिनदीरोधसा सैकतसुकुमारेणयदृच्छयाविहृतवान्नातिदूरमएकस्मिंश्चवनलतागहनेगिरिनदीसमीपभाजि भ्रमरीणामिव हिमहतकमलाकरकातराणां शसितंसार्यमाणानामतितारतानवर्त्तिनीनावर्णांतंत्रीणामिव झांकरमेकतानंनारीणांरुदितमधृतिकरमतिकरुणमाकर्णितवानस्मि समुपजातकृपश्च गतोस्मि तं प्रदेशं

यदृच्छयास्वेच्छायासार्यमाणनां श्रुतिरीत्यास्थाप्यमानानांस्वराणांविशिष्टमवस्थानमेकलोपेहिलोपेवातानाःमूर्च्छनावावर्णास्थायिसंचादारोह्यवरोहिणश्चत्वारस्तदुपलक्षिताः तंत्र्योवर्णंतंत्र्यः एकतानमेकरूपंअनवरतंवा

दृष्टवानस्मिचदृषत्खंडखंडितांगुलिगलल्लोहि
तेन पार्ष्णिप्रविष्टशरशलाकाशल्यशूलसंको
चितेन चक्षुषा चाध्वनीनश्रमश्वयथुनिश्चल
चरणेन च स्थाणुव्रणव्यथितगुल्फवद्धभूर्ज
त्वचा च वातखुडखेदखंजजंघाजातज्वरेणच
पांसुपांडुरपिंडिकेन खर्जूरजूटजटाजर्जरित
जानुनाच्च शतावरीविदारितोरुणाच विदारी
दारिततनुदुकूलपल्लवेन चोत्कटवंशविटपकं
ठककोटिपाटितकंचुककर्पटेनच फललोभाल
वितानप्रवदरीलताजालकैरुत्कंठकै रुल्लिखि
तसुकुमारकरोदरेणच कुरंगशृंगोत्खातैः क
न्दमूलफलैः कदर्थितवाहुना तांबूलविरहावि
रसमुखखंडितकोमलामलकीफलेनच कुशकु
सुमाहतिलोहितानां श्वयतामक्ष्णां लपीकृत
मनःशिलेनच कष्टवकीवतालुनालकले
शेनच

दृष्टवानित्यादावस्मिचैवंविधानामवलानांचक्रवालेनपरिवृतांवो
धितंदृष्टवानितिसंबंधः लोहितंरक्तं पार्ष्णिः पादाधोदेशः २१
स्थाणुस्त्वाध्रुवः शंकुःस्थाणोरिमेस्थाणवाःवातखुडोगतिप्रतिघा
तलक्षणोवातव्याधिः पिच्छकंकेशकलापः शतावरीशतमूली
विदारीक्षीरशुक्ली ॥

केनचित्किसलयोपपादितातपत्रकृत्येन केन चित्कदलीदलव्यजनवाहिना केनचित्कम लिनीपलाशपुटगृहीतांभसा केनचित्पा थेयीकृतमृणालपूलिकेन केनचिच्चीनांशुकद शाशिक्यनिहितनारिकेलकोश कलशीकालि तसरलतैलेन कतिपयावशेषशोकविकल कलमूककुब्जवामनबधिर वर्वराविरलेना व लानां चक्रवालेनपरिवृतां आपत्कालेपिकुलो द्गतेनैवामुच्यमानां प्रभालेपिनालावण्येनप्र तिबिंबितै रासन्नवनलताकिसलयैः सरसैर्दुः खक्षतैरिवांतःपटलीक्रियमाणकायांकठोरदर्भा कुरक्षतक्षारिणाक्षतजेनानुसरणालक्तकेनेव रक्तचरणांउन्नालेनान्यतरनारीधृतेनारविंदि नीदलेन कृतच्छायमपिविच्छायं मुखमुद्वह न्तीं आकाशमपिशून्यतयातिशयानां मृण्म यीमिवनिश्चलनतयामरुन्मयीमिवनिःश्वास संपदा पावकमयीमिव संतापसंतानेन ॥

सरलादेवदारवः शोकेनविकलाविक्षिप्ताःकलामूका षंढकाः एवमादयोंतः पुररक्षिणः वर्वराएतद्देश्यजाः२२ सरसैः प्रत्यग्रैः सांद्रैश्चक्षतानिव्रणाः अरविंदिनीपद्मिनी छायाआतपप्रतिपक्ष जातिःछायाचकांतिःउक्तंच छायासूर्यप्रियाकांतिःप्रतिबिंबमना तपइतिशून्यतेन्द्रियरहितत्वमपि संतापसंतानोदुःखविच्छेदउौ

एषप्रबंधश्च

सलिलमयीमिवास्रुप्रस्रवणेन वियन्मयीमि
वनिरवलंवनतया तडिन्मयीमिव पारिप्लवत
या शब्दमयीमिव परिदेवितवाणीवाहुल्येन
मुक्तमुक्तांशुकरत्नकुसुमकनकपत्राभरणां क
ल्पलतामिव महावने पतितां परमेश्वरोत्तमां
गपातदुर्ललितांग।गंगामिव गांगतां वनकुसु
मधूलिधूसरितपादपल्लवानांप्रभातचन्द्रमूर्त्ति
मिवलोकांतरमभिलषन्तीं। निजजलमोक्षकद
र्थितदर्शितधवलायितनेत्रशोभ।मंदाकिनीम्
णालिनीमिव परिम्लायमानां दुःसहरविकि
रणसंस्पर्शखेदनिमीलित कुमुदिनीमिव दुः
खेनादिवसं नयंतीं दग्धदशाविसंवादिताम्॥

मुक्ताख्यमंशुकंमालवदेशजमुत्तरीयं मुक्ता मौक्तिकं च अल्पेंशवः
अंशुकाश्चमहावनंविस्तीर्णारण्यंविपुलजलंच परमेश्वरोत्तमांग
पातोराजशिरःछेदोहरमूर्ध्निपातश्चइष्टानिललितानिईप्सितानिये
षुतान्यंगानियस्याः दुर्ललितंचहेवाकः गांगतामितिवाहनाभावा
द्भूमिमवतीर्णांच वनकुसुमानिजलजातत्वात् कुमुदानिचपादर
श्मयोपि लोकांतरंपरलोकंमेरुद्वितीयपार्श्वंचजलमश्रुनेत्रमाक्षिम
ण्डल २१ दग्धदशादुरवस्थाःक्षुद्रदीपधामानश्च ॥

प्रत्यूषदीपशिखामिव क्षामक्षामां पांडुरव पुषं पार्श्ववर्त्तिवारणाभियोगरक्ष्यमाणां वन करिणीमिवमहाहृदे निमग्नांप्रविष्टां वनगह नेध्यानेचस्थितांतरुतलेमरणेचपतितांधात्र्य त्संगेमहत्यनर्थेच दूरीकृतांभर्त्रासुखेनचांबर चितांभ्रमणेनायुषाच आकुलांकेशकलापे नमरणोपायेन च विवर्णितामध्वधूलिभिरंग वेदनाभिश्च दग्धांचंडातपेन वैधव्येनचधृत मुखीं पाणिनामौनेनच गृहीतांप्रियसखीज नेन मन्युनाचतथा च भ्रष्टैर्बंधुभिर्विलासैश्च मुक्तेनश्रवणयुगलेनात्मनाच परित्यक्तैर्भूष णैः सर्वारंभैश्च भग्नैर्वलयैर्मनोरथैश्च चरण लग्नाभिः परिचारिकाभिर्दर्भांकुरसूचीभिश्च हृदयविनिहितेन चक्षुषाप्रियेणचदीर्घैःशोकै श्चश्वसितैःक्लेशैश्च क्षीणेनवपुषापुण्येनचपा दयोः पतंतीभिर्वृद्धाभिरस्रुधाराभिश्चस्वल्पा वशेषपरिजनेन जीवितेनचअलसामुन्मेषे

प्रत्यूषः कल्यं वारणानिषेधः हस्तीचवारणः महाहृदेनिमग्नांअनु सरणार्थं पुण्यजलाशयस्नातां विस्तीर्णसरस्यवसन्नांस्थितांकृत निश्चयांचविगतोधवोयस्याः तद्भावोवैधव्यं धवोभर्त्ता बंधुभिरि त्यादावित्थंभूतलक्षणेतृतीया मुक्तेननिरलंकारेण अलसांदृक्षांचे त्यादौविरोधोबोद्धव्यः २४

दक्षामस्त्रुमोक्षैसन्ततांचिंतामुविच्छिन्नाम शा
सुकृश।काये स्थूलांश्वसितेनपूरितांदु:खेनरि
क्तांसत्वेन अध्यासितामायासेन शून्यांहृदये
ननिश्चलांनिश्चयेन चलितांधैर्यात् अपिच
वसतिं व्यसनानां आधानमाधीनां अवस्था
नमनवस्थानां आधारमधृतीनां आवासम
वसादानामास्पदमापदांअभियोगमभाग्या
नामुद्वेगानांकारणंकरुणाया: पदंपरयत्नता
या:येभितंदृष्ट्वाचिन्तितवानस्मिचचित्रमीदृशी
म याकृतिमुपतापा: स्पृशंतीति सातुसमीप
गते मयि तदवस्थापिसबहुमानानतमौलि:
प्रणतवती अहंतु प्रबलकरुणाप्रेर्यमाण: ता
मालापितुकाम: पुन: कृतवान्मनसि कथमि
व महानुभावामेनामामंत्रये वत्सेइत्यतिप्रण
य: मातरितिचाटुर्भगिनीत्यात्मसंभावना दे
वीति परिजनालाप: राजपुत्रीत्यस्फुटं उपा
सिके इतिमनोरथ: स्वामिनीति भृत्यभावा
भ्युपपगम: भद्रेइति इतरस्त्रीसमुचितं आयु
ष्मतीत्यस्यामवस्थायामप्रियम् ॥

अनवस्थानांदु:खरूपक्रियाणां अभियोगमुद्योगं कथमिवेत्यादि
समान: प्रश्नइत्यर्थ: महानुभावांमनस्विनीं अतिप्रणयोमहतीप्री
ति: ॥ २९ ॥

कल्याणीति दशा विरुद्धं चन्द्रमुखीत्य
मुनिमतं बालेइत्यगौरवोपेतं आर्ये इतिजरा
रोपणं पुण्यवतीति फलविपरीतं भवतीतिस
र्वस्व.धारणं अपिचकासीत्यनभिजातं किमर्थं
रोदिषीतिदुःखकारणस्मरणकारि मारोदी
रितिशोकहेतुमपनीय नशोभते समाश्वसि
हीतिकिमाश्रित्य स्वागतमितियातयामंसुख
मास्यते इतिमिथ्या इत्येवंचिन्तयत्येवमभित
स्मात्स्त्रैणादुत्थायान्यतरायोषिदार्यरूपेवशो
कविक्लवासमुपसृत्यकतिपयपलितशारितंशि
रोनित्वामहीतलमतुलहृदयसंतापसूचकैरस्त्रु
विंदुभिश्चरणयुगलंदहंतीममातिकृपणैरक्षरै
श्चहृदयमभिहितवती भगवन् सर्वसत्त्वानुकं
पिनी प्रायः प्रव्रज्याप्रपन्नदुःखक्षपणदीक्षा
दक्षाश्च भवंति सौगताः करुणा कुलगृहंच
भगवतः शाक्यमुनेः शासनं सकलजनोपका
रसज्जा सज्जनता ॥

अनभिजातमनुचितं यातयामंजीर्णप्रायं शासनं शास्त्रं सज्जनता
साधुजनसमूहः ॥

परलोकसाधनंच धनं धर्मोमुनीनां प्राणरक्ष
णाच्चनपरंपुण्यजातं जगतिगीयतेजनेन अनु
कंपाभूमयः प्रकृत्यैव युवतयःकिंपुनर्विपदभि
भूताः साधुजनश्च सिद्धक्षेत्रमार्यवचसां यत
इयंनःस्वामिनी मरणेन पितुरभावेन भर्त्तुः प्र
वासेनचभ्रातुःभ्रंशेनच शेषस्यबांधववर्गस्य
अतिमृदुहृदयतयानपत्यतयाच निरवलंबना
परिभवेनच नीचारातिकृतेनप्रकृतिमनस्विनी
अमुनाचमहाटवीपर्यटनक्लेशेनकदर्थितसौकु
मार्या दग्धदैवदत्तैरेवंविधैर्बहुभिरपराधपरि
व्यसनैर्विक्लवीकृतहृदयादारुणंदुःखमपारयं
तीसोढुंनिवारयंतमनाक्रांतपूर्वं स्वप्रेष्यवग
णय्य गुरुजनमनुनयंतीखंडितप्रणयानर्म
स्वपिसमवधीर्य प्रियसखी विज्ञापयंत मशर
णमस्रुव्याकुलनयनमपरिभूतपूर्वमनसापि
परिभूय भृत्यवर्गमाग्निं प्रविशति परित्रायता
मार्योपितावदसह्यशोकापनयनोपायोपदेश
निपुणां व्यापारयतु वाणीमस्यामिति चाति
कृपणं व्याहरंती महमुत्थाप्योद्विग्नतरः श
नैरभिहितवान् ॥

सिद्धक्षेत्रंसिद्धायतनं यतइत्यादौ यतइयं नःस्वामिन्यग्निं प्रविशति
तदार्योपि तावदस्यां वाणीं व्यापारयत्विितिसम्बंधः ॥ २६ ॥

आर्ये यथाकथयासि तथास्मादृिरा मगोचरो समस्याः पुण्याशयायाः शोकः शक्यतेचेन्मु हूर्त्तमात्रमपित्रातुमुपरिष्टान्नव्यर्थैयमभ्यर्थना भविष्यति ममहिगुरुरपर इव भगवान्सुगतः समीपगतएवकथितेमयास्मिन्नुदंते नियतमा गमिष्यति परमदयालु र्दुःखांधकारपटलभि दुरैश्च सौगतैः सुभाषितैःस्वकैश्च दर्शितनिद र्शनै र्नानागमगुरुभिर्गिरांकौशलैः कुशलशी लामेनां प्रवोधपदवीमारोपयिष्यतीति तच्च श्रुत्वा त्वरतामार्य इत्यभिदधाना सा पुनरपि पादयोः पतितवती सोहमुपगत्य त्वरमाणो व्यतिकरमिममधृतिकरमशरणं कृपणवहुयु वतिमरणमतिकरुणमत्रभवते गुरवे निवेदित वानिति अथभूभृद्भैक्षवं समवधार्य तद्भाषित मस्रुमिश्रितमश्रुतापि स्वसुर्नाम्नि निम्नीकृत मनामन्युना सर्वाकारसंवादिन्या दशयेव दूरीकृतसंदेहो दग्धइव सोदर्यावस्थाश्रवणे श्रवणयोः श्रमणाचार्य मुवाच ॥

निदर्शनंदृष्टांतः २७ निम्नंसंकुचच्छाक्त ॥

आयं नियतं सैवेयमनार्यस्यास्य जनस्याति
कठिनहृदयस्यातिनृशंसस्य मंदभाग्यस्य
भगिनी अभागधेयैरेतामवस्थांनीतानिष्कार
णवैरिभि र्वराकि विदीर्यमाणं मे हृदयमेवंनि
वेदयतीत्युक्त्वातमपि श्रमणमभ्यधात् आर्यो
त्तिष्ठ दर्शय क्वासौ यतस्त्व प्रभूतप्राणिपरित्रा
णपुण्योपार्जनाय यामः यदि कथंचिज्जीवंतीं
संभावयामः इतिभाषमाण एवोत्तस्थौ अथ
समग्रशिष्यवर्गानुगतेनाचार्येण तुरगेभ्यश्चा
वतीर्य समस्तेन सामन्तलोकेनपश्चादाकृष्य
मानाश्वीयेनानुगम्यमानः पुरस्ताच्च तेन शा
क्यपुत्रीयेनप्रदिश्यमानवर्त्मापदम्यामिवतं प्र
देशंअविरलैःपदैःपिबन्निवप्रावर्त्तत क्रमेणच
समुपगतःशुश्रावलतावनांतरितस्य मुमूर्षोमह
तः स्त्रैणस्य तत्कालेचितानेकप्रकारानाला
पान् भगवन्धर्म धाव शीघ्रं क्वासि कुलदेवत
देविधरणि धीरयसिनो दुःखितां दुहितरंक्वनु
खलुप्रोषिता पुष्पभूतिकुटुंबिनी लक्ष्मीः ॥

यतस्वयत्नंकुरु अश्वीयमश्वसमूहः शाक्यपुत्रीयेनदिवाकरमित्र
शिष्येण २८ अविरलैर्दीर्घैः पदैश्चरणक्रमैः मुमूर्षोमरणोन्मु
खस्यस्त्रैणस्यस्त्रीसमूहस्यालापान् शुश्रावेत्यन्वयः ॥

अनाथांनाथ मुखरवंश्यविविधाधिविधुरां व
धूंविधवां विबोधयसि किमिति नेमांभगवन्
भक्तजने संज्वरिणिसुगत सुप्तोसि राजधर्म
पुष्पभूतिभवनपक्षपातिन्नुदासीनीभूतो ऽसि
कथं त्वय्यपि विपद्बांधवविंध्यवंध्योयमंजलि
वंधःमातर्महाटविरटंतींन शृणोषिमामापत्प
तितां पतंगप्रसीदपाहिपतिव्रतामशरणांत्रय
स्नरक्षितकृतघ्नचारित्रचंडाल न रक्षसिराजपु
त्रीम् किमवधृतंलक्षणैः हादेविदुहितृस्नेहम
पि यशोवति मुषितासि दग्धदैवदस्युना दे
वदुहितरि दह्यमानायांनापतसि प्रतापशी
ल शिथिलीभूत मपत्यप्रेम महाराजस्यरा
ज्यवर्धन धावसि मन्दीभूता भगिनीप्रीतिर
होनिष्ठुरः प्रेतभावः व्यपेहिपापपावक स्त्री
घातानिर्घृण ज्वलन्नलज्जसे भ्रातर्वातदासीत
वास्मिसंवादयद्भुतंदेवीदाहं देवायदुःखित
जनार्त्तिहराद्धर्षायानितांतानिःशूक शोकश्व
पाक सकामोसि दुःखदायिन्वियोगराक्षस
तुष्टोसिविजनेवनेकमाक्रन्दामिकस्मैकथया
मि कमुपयामि शरणं कां दिशं प्रतिपद्ये॥

संज्वरिणि संतापवति राजधर्मोंवुद्धः २९ ॥

करोमिकिमभागधेया गाधारिगृहीतोयं लतापाशः पिशाचिमोचनिकेमुंचशाखाग्रहणकलशं कलहंसिहंसि मुक्तगलं किमद्यापिरुध्यते सुन्दरि दूरीभवति सखीसार्थः स्थास्यसिकथामवाशिवेशवशिविरे शवरिके सुतनुतनूनपाति पतिष्यसि त्वमपि मृणालकोमलेमालावति म्लानासि मातर्मातंगिकेंगीकृतस्त्वयापि मृत्युः वेत्सिवात्स्निके वत्स्यासिकथमनभिप्रेते प्रेतनगरेनागारिके गरिमाणमागतासि अनयास्वमिभक्त्या विराजिके विराजितासि राजपुत्री विपदिजीवितव्ययव्यवसायेन भृगुपतनाभ्युद्यमभागाभिङ्गे भृंगारधारिणि धन्यासि केतकि कुतः पुनरीदृशीस्वप्नेपि स्वस्वामिनीमनके जन्मानि जन्मानिदेवीदास्यमेव ददातु देवोदेहंदहन्दहनः विजयेविजयकृशाणुं सानुमति नमतीन्दीवारिका दिवंगंतुकामा कामदासि देहि दहनप्रदाक्षिणावकाशं ॥

गांधारिमोचनिके कलहंसिइत्यादीनिसहगतसखीनांसंबोधनानितनूनपातिवह्नौ वत्स्यसिअवासिष्यति भृगुः प्रपातः उक्तंचप्रपातस्त्वतटोभृगुरित्यमरः ३० ॥

विचरिके विरचयवाह्लिं विकिरकिरातिकेकुसु
मप्रकरं कुररिके कुरु कुरवककोरकाचितां चि
तांचामरं चामरग्राहिणि गृहाण पुनरपि कं
ठे मर्षयितव्यानि नर्मदेन नर्निर्मितानि निर्म
यादहसितानिभद्रे सुभद्रे भद्रमस्तुते परलो
कगमनं अग्रामीणगुणानुरागिणि ग्रामेयके
गच्छसुगतिं वसंतिकेंतरंप्रयच्छआपृच्छेतछ
त्रधारिदेविदेहि दृष्टिमिष्टातवजहाति जीवितं
विजयसेनासेयं मुक्तिकामुक्तकंठमारटतिनि
कटे नाटसूत्रधारीपादयोः पतति ते तांबूलवा
हिनी वहुमताराजपुत्रि पत्रलता कालिंगसेने
यंपश्चिमः परिष्वंगः पीडयनिर्भरमुरसामां
असवःप्रवसंति वसन्तसेने मंजालिके मार्जय
सि कातिकृत्वःसुदुःसहदुःखसहस्रास्रुस्निग्धं
चक्षुरिदंरोदिषिकियदाश्लिष्यचमांनिर्माणमी
दृशं प्रायशोयशोधने धीरयस्यद्यापि किंमां
माधविकेकेयमवरुथासंस्थापनानांगतःकालः
कालिन्दिसखीजनानुनयांजलीनां उन्मत्तिके
मत्तपालिके कृताःपृष्ठतः प्रणयिनीप्रणिपाता
नुरोधाः॥

निर्माणं विधानं अर्थात् संसारस्य संस्थापनानां सांत्वनानां२१

ताडयासिकिमपरमुत्तमांगं मांगलिके शिथिल
य चकोरवर्ति चरणग्रहणं ग्रहिणि कमलिनि
किमनेन पुनःपुनर्दैवोपालंभेन नप्राप्तं चि
रंसखीजनसंगमं सुखंआर्ये महत्तरिके तरंग
सेने नमस्कारः सखिसौदामिनिदृष्टासिसमु
पनय हव्यवाहनार्चनकुसुमानि कुमुदिकेदे
हिचितारोहणायरोहिणि हस्तावलंबनं अंव
धात्रि धीराभवभवंत्येवंविधाएवकर्मणांविपा
काः पापकारिणीनां आर्यचरणानामयमंज
लिः परः परलोकप्रयाणप्रणामोयं मातर्मर
णसमये कस्माल्लवलिके हलहलकोवलीया
नानन्दमयोहृदयस्यमे हृष्यंत्युच्चरोमांचमु
चि किमंगीकृत्यांगानि वामानिके वामेनमे
स्फुरितमक्ष्णा वृथाविरमसि वयस्यवायस
वृक्षेक्षीरिणि क्षणेक्षणे क्षीणपुण्यायाः पुरः
हरिणिहेषितमिव हयानामुत्तरतःकस्येदमा
तपत्रमुच्चमत्र पादपांतरेणप्रभावातिविभाव्य
ते कुरंगिके केन सुगृहीतनाम्नोनामगृहीतम
यमार्यस्यदेवि दिष्ट्यावर्धसे देवस्यहर्षस्याग
मनमहोत्सवेनेत्येतच्च श्रुत्वासत्वरमुपससर्प

ग्रहोभिनिवेशः हलहलक उत्कंठा एवमादिना निमितेन हर्षा
गमनंसूच्यते ॥३२॥

ददर्शच मुह्यंतीमाग्निप्रवेशायोद्यतां राजा रा
ज्यश्रियंआललंबेचमूर्च्छामीलितलोचनाया
ललाटं हस्तेन तस्याः ससंभ्रमम् अथतेन
भ्रातुः प्रेयसः प्रकोष्ठबद्धाना मोषधानां रस
विसरमिव प्रत्युज्जीवनक्षमं क्षरता वमतेव
पारिहार्यमणीनामाचिंत्यं प्रभावममृतमिव
नखचन्द्ररश्मिभिरुद्गिरता वध्नतेव चंद्रो
दयच्युतशिशिरशीकरं चंद्रकांतचूडामणिमू
र्धनि मृणालमयांगुलेनेवातिशीतलेन नि
र्वापयतादह्यमानं हृदयं प्रत्यानयतेवकुतोपि
जीवितमाह्लादकेनहस्तसंस्पर्शेन सहसैव
समुन्मिमीलराज्यश्रीः तथाचासंभावितागम
नस्याचिन्तितदर्शनस्य सहसाप्राप्तस्य भ्रा
तुःस्वप्नदृष्टदर्शनस्येव कंठे समाश्लिष्यतत्का
लाविर्भावनिर्भरेणाभिभूतसर्वात्मनादुःखसं
भारेणनिर्दयं नदीमुखप्रणालाभ्यामिव मु
काभ्यांस्थूलप्रवाहमुत्सृजंती बाष्पवारिविलो
चनाभ्यां ॥ ॥

अथेत्यादौभ्रातुर्हस्तसंस्पर्शेन राज्यश्रीः सहसैवसमुन्मिमीलेति संबंधः पारिहार्यः कटकं तथाचेत्यादौसाकरोदितिसंबंधः २१

हातातहंत्रंव हासख्य इति व्याहरंती मुहु र्मुहुरुच्चैस्तरांच समुद्भूतभनिर्नोस्नेहसद्भाव भारभावितमन्युना मुक्तकंठमतिचिरं विक्रु श्य वत्सेव त्विदानींमितिभ्रात्राकरस्थगित मुखीसमाश्वास्यमानापिकल्याणिनिकुरुवच नमग्रजस्यगुरोरित्याचार्येणयाच्यमानापिदे विनपश्यसि देवस्यावस्थामलमतिरुदितेनेति राजलोकेनाभ्यर्थ्यमानापिस्वामिनिभ्रातरमवे क्षस्वेतिपरिजनेन विज्ञाप्यमानापिदुहितर्वि श्रम्यपुनरारटितव्यामितिनिवार्यमाणापिवा न्धववृद्धाभिःप्रियसखिकियद्रोदिषितूष्णींमा स्खहृदंदूयतदेवइतिसखिभिरनुनीयमानापि चिरमभावितानेकदुःसहदुःखनिर्वहणबाष्पो त्पीडयमान कंठभागा प्रभूतमन्युभार भरितान्तः करणाकरुणकाहलेन स्वरेण कालमतिदीर्घं रुरोद विगतेच मन्युवेगवह्नेः समीपादाक्षिप्यभ्रात्रानीतानिकटवर्त्तिनितरु तलेनिषसाद शनैराचार्यस्तु तथाहर्षइतिवि ज्ञायविवर्धितादरः सुतरां मुहूर्त्तमिवातिवाह्य निभृतसंज्ञाज्ञापितेन शिष्येणोपनीतंनलिनी दलैः स्वयमानम्रो मुखप्रक्षालनायोदक मुपनिन्ये॥

दुःखनिवहस्यनिर्वहणंप्रकटनंयस्माद्बाष्पोत्पीडादितिसमासःका हलेनमहता

नरेन्द्रोपि सादरं गृहीत्वा प्रथममनवरतरोद
नाताम्रं चिरप्रवृत्तास्रुजलजालं रत्नपंकजमि
व स्वसुश्चक्षुरक्षालयत् पश्चादात्मनःप्रक्षालि
तमुखशशिनिच महीपाले सर्वतोनिःशब्दः सं
वभूव सकलो लिखितइवलोकः ततोनरेन्द्रोम
न्दमन्दमब्रवीत्स्वसारंवत्सेवन्दस्वात्र भवंतंभ
दंतंएषतेभर्तुर्हृदयंद्वितीयमस्माकंच गुरुरिति रा
जवचनात्तुराजदुहितारिपतिपरिचयश्रवणोद्घा
तेनपुनरानीतनेत्रांभासि ननंत्यामाचार्यः प्रय
त्नरक्षितागतवाष्पांभः संभारभज्यमानधैर्यार्द्र
लोचनः किंचित्परावृत्तनयनोदीर्घं निःश्वास
स्थित्वाच क्षणमेकं प्रदर्शितप्रश्रयोमृदुवादी
मधुरयावाचाव्याजहारकल्याणराशेरुदित्वा
चिरमस्तराजलोकः नाद्यापि रोदनान्निवर्त्तते
क्रियतामवश्यकरणीयः स्नानविधिः स्नात्वा
चगम्यतां तामेव भूयोभुवं अथ भूपतिरनुव
र्त्तमानोलौकिकमाचारमाचार्यवचनं चोत्थाय
स्नात्वागिरिसरिति सहस्वस्रातामेवभूमिमया
सीत् तस्यांचसपरिजनांप्रथममाहितावधानः
पार्श्ववर्तीपरवर्ती शुचापातितपिंडप्रदर्शितभय
त्नप्रतिपन्नाभ्यवहारकारणांभगिनीमभोजयत्

उद्घातःप्रस्तावः यतोयंराजलोकश्चिरंरुदित्वानाद्यापि रोद
नान्निवर्त्ततेतत्स्नानविधिःक्रियतामिति परवर्ती परायत्तां३५

अनंतरं च स्वयमाहारस्थितिमकरोत् भुक्तवांश्च बंधनात्प्रभृति विस्तरतः स्वसुः कान्यकुब्जाद्गौडसंभ्रमं गुप्तितो गुप्तनाम्ना कुलपुत्रेण निष्कासनं निर्गतायाश्च राज्यवर्धनमरणश्रवणं श्रुत्वा चाहारनिराकरणमनाहारपराहतायाश्च विंध्याटवीपर्यटनखेदं जातनिर्वेदायाः पावकप्रवेशोपक्रमणं यावत्सर्वमशृणोद् व्यतिकरं परिजनतः ततः सुखासीनमेकत्र तरुतले विविक्तभुवि भगिनीद्वितीयं दूरस्थितानुजीविजनं राजानमाचार्यः समुपसृत्य शनैरासां चक्रे स्थित्वा च किंचित्कालं शैलशतो वक्तुमुपचक्रमे श्रीमन्नाकर्ण्यतामाख्येयमस्ति नः किंचित् अयं हि यौवनोन्मादात्परिभूयभूयसीं भार्यां यौवनावतारतरलतरः ताराराजो रजनिकर्णपूरः पुरुहूतपुरोधसो धिषणस्य पुरींध्रीं धर्मपत्नीं पत्नीयन्नतितरलस्तारां नामापजहार नाकतश्च पलायांचक्रे चकितचकोरलोचनया तया सहातिकामया सर्वाकाराभिरामया रममाणो रमणीयेषूद्देशेषु चचार

गुप्तितो बंधनात् धिषणस्य बृहस्पतेः पत्नीयन्नात्मनः पत्नीमिच्छन्॥२६

चिराच्च कथंचित्सर्वगीर्वाणवाणीगौरवाद्गिरां पत्युःपुनरपिप्रत्यर्पयामासतांहृदयेत्वानिंधन मदह्यत विरहाद्दरारोहाया :तस्याः सततम् एकदांतुशैलादुदयादुदयमानोविमलेवारिणि वरुणालयस्य संक्रांतमात्मनः प्रतिबिंब वि लोकितवान् दृष्ट्वा च तदा सस्मरः सस्मार स्मेरगंडस्थलस्यताराया मुखस्य मुमोचचम न्मथोन्मादमथ्यामानमानसःस्वःस्थोप्यस्व स्थःस्थवीयसः पीतसकलकुमुदवनप्रभाप्र वाहधवलताराभ्यामिव लोचनाभ्यांवाष्पवा रिबिंदून् अथ पतत स्तानुदन्वति समस्ताने वाचेमुर्मुक्ताशुक्तयः तासांचकुक्षिकोशेषुमुक्ता फलीभूतानवाप तान्कथमपि रसातलनिवा सीवासुकिर्नाम विषमुचामीशःसचतैर्मुक्ताफ लैःपातालतलेपि तारागणमिवदर्शयाद्भिरेका वलीमकल्पयच्चकारच मंदाकिनीनामतस्याः साचभगवतःसोमस्य सर्वासामोषधीनामधि पतेः प्रभावादत्यंताविषघ्नी हिमामृतसंभव त्वाच्चस्पर्शेन सर्वसत्त्वसंतापहारिणीवभूव॥

आरोहानितंव:उन्माद:खेद:स्व:स्थ:स्वर्गस्थ:अस्वस्थ:पीडित अपिर्विरोधस्यसूचकः३७

यतःसतः सर्वदाविषोष्मशांतयेवासुकिः पर्य धत्त समतिक्रामति चकियत्यपि कालेकदाचि न्न मैकावलीं तस्मान्नागराजान्नागार्जुनोना म नागैरेवानीतःपातालतलं भिक्षुरभिक्षतले भेचनिर्गत्यरसातलात्रिसमुद्राधिपतये सा तवाहननाम्नेनरेन्द्रायसुहृदेस ददौ तांसाचा स्माकंकालेन शिष्यपरंपरयाकथमपिहस्त मुपगता यद्यपि चपरिभवइव भवति भवादृ शां दात्रिम उपचारः तथाप्योषधिबुद्ध्यावुद्धि मता सर्वसत्त्वराशिरक्षाप्रवृत्तेन रक्षणीयश रीरेणायुष्मता विषरक्षापेक्षया गृह्यतामित्य भिधायभिक्षोरभ्याशवर्त्तिनश्चीवरपटांतसं यतांमुमोच तामेकावलींमंदाकिनींउन्मुच्यमा नायाएवयस्याः प्रभालिपिनि लब्धावकाशे विशदमहासि महीयसि विसर्पति रश्मिमंड लेयुगपद्धवलायमानेषुदिङ्मुखेषुमुकुलितल तावधूःकांठते रामूलाद्विकासितामिव तरुभिः अभिनवमृणाललुब्धैर्धावितमिव धुतपक्षपु टपटलधवालितगगनं वनसरसांहंसयूथैः स्फुटितामिव भरवशविशीर्यमाणधूलिधवलै र्गर्भभेदसूचितसूचीसंचयशुचिभिःकेतकीवाटैः

दानेनानिवृत्तोदात्रिमः अभ्याशोनिकटःमहःसरःसरसीकेतक्यो वृक्षभेदाः १८॥ ॥

उद्दलितदलदंतुराभिः प्रबुद्धमिव कुमुदिनी भिः विधुतासितसटाभारभरितदिक्कै श्चलि तमिव केसरिकुलैः प्रहसितमिव दशनांशुमा लालोकलिप्यमानवनदेवताभिः विकसित मिवशिथिलितकुसुमकोशकेसराट्टहासनिरं कुशं काशकाननैः भ्रांतमिव संभ्रमभ्रमित वालपल्लवपरिवेश श्वेतायमानैश्चमरीकदंब कैः प्रसृतमिव स्फायमानफेणिलतरलतरत रंगोद्गारिणा गिरिनदीपूरेण अपरताराग लोभमुदितेनोदितमिव विकचमरीचि चक्रा क्रांतककुभा पूर्णचंद्रेण प्रक्षालितइव दावा नलधूलिधूसरितदिगन्तोदिवसः पुनरिव धौ तान्यस्रुजलक्लिष्टानि नारीणांमुखानि राजा तु मांसलैस्तस्याः संमुखैर्मयूखैराकुलीक्रिय माणं मुहुर्मुहुरुन्मीलयन्निमीलयंश्चक्षुः कथ मपिप्रयत्नेनददर्शसर्वाशापूरिणीं पंक्तीकृता मिव दिङ्नागकरशीकरसंहतिं घनमुक्तांशा रदीमिव लेखीकृतां ज्योत्स्नां प्रकटपदकचि ह्नां संचारवीथीमिव बालेन्दोः निश्चलीभूतां सप्तर्षिमालामिव ॥

काशास्तृणभेदाः परिवेशः परिखलनं स्फायमानाबर्धमाणाआ शाआस्थादिशश्च घनमुक्तांनिरंतरमौक्तिकांमेघस्यक्तांच पदकंम ध्यमणिः पदमेवचपदकं

हस्तमुक्तामभिभूतसकलभुवनभूषणभूतिमि वैशानीं शशिकलां धवलतागुणगृहीतांकांतिमिव निर्गतांक्षीरराशेः अनेकमहामहीभृत्परंपरागतां गंगामिव दुर्गतिहरां अनवरतस्फुरिततरलांशुकां पुरःसरपताकामिव महेश्वरभावागमस्यघनसारशुक्लां दंतपंक्तिमिवाभिमुखस्येश्वरस्य वरमनोरथपूरणसमर्थां स्वयंवरस्रजमिव भुवनाश्रियः निजकरपल्लवावरणदुर्लक्ष्यांचक्षूरागविहसतिकामिव सुधायाः मंत्रकोशसाधनप्रवृत्तस्या क्षमालामिव राजधर्मस्य समुद्रालंकारभूतां संख्यालेख्यपट्टिकामिव कुबेरकोशस्य पश्यंश्चैतांविस्मयमाजगाम मनसा सुचिरम् ॥

हस्तमुक्तकां परिवर्त्तुलत्वाद्धस्तेयास्थितिन वध्नाति हस्तोहस्तसंज्ञावानक्षत्रंचहस्तः सकलभुवनभूषणंकौस्तुभादिहंरश्च भूतिः समृद्धिर्भस्मच गुणोधर्मस्तंतुश्च महीभृतोराजानःपर्वताश्च २९ दुर्गतिर्दारिद्यंनरकादिगतिश्च तरलोहारमध्यगतोमणिश्चंचलश्च अंशुकारश्मय उत्तरीयं चांशुकं घनसारवच्छुक्लां कर्पूरवच्छुभ्रांनिरंतरदृढधवलांच अभिमुखस्य प्रतिमुखमागच्छतोदंतपंक्तिश्चमुखस्याभितोभवति वरः श्रेष्ठोजामाताच निजाःकराःसहजारश्मयः स्वकश्च हस्तोनिजकरः चक्षूरागः प्रीतिस्तयाविहसतिकानर्महासः मंत्रः कर्त्तव्यावधारणं कोशोगंजः साधनं हस्तयश्वादि तेन प्रकृष्टाचरितस्यमंत्रसमूहाराधनप्रस्तुतस्यसमुद्रःसागरःसहमुद्रयाच योवर्त्तते ॥ ॐ ॥

आचार्यस्तुतामुद्धृत्य ववंधवंधुरेस्कंधभागेभू
पतेः अथनरपतिरपि प्रीतिमुपदर्शय न्प्रत्य
वादीत् आर्यरत्नानामीदृशानामनर्हाःप्राये
णपुरुषाः तपःसिद्धिरियमार्यस्यदेवताप्रसा
दोवावयमिदानीमात्मनोपि किमुतग्रहणस्य
प्रत्याख्यानस्य वा दर्शनात्प्रभृतिप्रभूतगुरु
गुणगणहृतेनहृदयेनपरवंतोवयं संकल्पितमा
मरणादिदमार्योपयोगायशरीरं अत्रकामच
रोवा कर्त्तव्यानामिति समतिक्रांतेचाकियत्य
पिकाले गते चैकावलीवर्णनालापे लोकरुया
नंतरंलब्धविस्रंभा राज्यश्रीस्तांबूलवाहिनीं
पत्रलतामाहूयोपांशु किमपि कर्णमूले शनैरा
दिदेश दर्शितविनयाचपत्रलता पार्थिवंव्य
ज्ञापयत् देवदेवीविज्ञपयतिन स्मराम्यार्यस्य
पुरः कदाचिदुच्चैर्वचनमपि कुतोविज्ञापनंइयं
हिशुचामसह्यतां व्यापारयंती हतदैवदत्ता
देशाशिथिलयतिविनयं अवलानांहिपतिर
पत्यंवाऽवलंवनंउभयविकलानांतुदुः खानलें
धनायमानं प्राणित्वमशालीनत्वमेवकेवलम्

बंधुरेहृद्येप्रत्याख्यानस्यप्रतिषेधस्यपरवंतोन्यायत्ताः ४० उपांशुगु
प्तंप्राणित्वंजीवितं अशालीनत्वंधाष्टर्यं ॥

आर्यागमनेनचकृतोपिप्रतिहतोमरणप्रयत्नः यतः काषायग्रहणाभ्यनुज्ञया गृह्यतामयम पुण्यभाजनंजनइति जनाधिपस्तु तदाकर्ण्य तूष्णीमेवावतिष्ठत अथाचार्यः सुधीरमभ्यधा त्आयुष्मति शोकोहि नाम पर्यायः पिशाच स्य रूपांतरमाक्षेपस्य तारुण्यंतमसः विशे षणंविषस्यअनंतकः प्रेतनगरनायकोयमनि र्वृतिधर्मादहनः अयमक्षयोराजयक्ष्माअयम लक्ष्मीनिवासोजनार्दनः अयमपुण्यप्रवृत्तः क्षपणकः अयमप्रातिबोधनिद्राप्रकारः अयम नलसधर्मासंनिपातः अयमशिवसहचरोवि नायकः अयमबुधसेवितोग्रहवर्गः ॥

आक्षेपस्यापस्मारस्य अनंतान्कायतिरावयतीत्यनंतकः अनिर्वृ तिरस्वास्थ्यंनिर्वाणाभावश्च अक्षयाश्चिरस्थायीक्षयरहितश्चजनान र्दयतिपीडयतीतिजनार्दनः कृष्णश्च अपुण्यंप्रवृत्तः पापप्रवृत्तःक्ष पणकोयः क्षपयतिनग्नाटकश्च प्रतिबोधोविवेकः स्वापादुत्थानं चनिद्रांप्रकिरति हिनस्तिनिद्राप्रकारः कर्मण्यणनिद्राविशेषश्च मोहरूपः अनलेनाग्निनासधर्मा सदृशः अलसलक्षणेधर्मेआ लस्यंयस्यसोनलसधर्मानालसधर्मा नलसधर्मासम्यक्निपातयति घातयति यस्त्रिदोषजोव्याधिश्चसंनिपातः शि.वः श्रेयोहरश्च शिवः ४१ विशेषेणनयतिमारयतीतिविनायकः विनायकोवि घ्नोवागणपतिश्च विनायकः बुधाः पंडिताः ग्रहभेदश्चबुधः ग्रहो व्यसनंमूर्यादिश्च ॥ ❁ ॥

अयमयोगसमुत्थोज्योतिष्प्रकारः अयंस्नेहा
द्वायुप्रकोपः मानसादग्निसंभवः आर्द्रभावा
द्रजः क्षोभः रसादतिशोषः रागात्कालपरि
णामः तदस्याजस्रास्रस्राविणोहृदयमहाव्रण
स्यवहलदोषांधकारलब्धप्रवेशप्रसरस्यप्रा
णतस्करस्य शून्यताहेतोःमहाभूतग्रामघात
कस्य सकलविग्रहक्षपणदक्षस्य दोषचक्रव
र्त्तिनः कार्श्यश्वासप्रलापोपद्रवबहलस्य ॥

अयोगोननुकूलंदैवं चित्तवृत्तिनिरोधाभावश्च ज्योतिष्प्रकारोभि
भेदः परंज्ञानंच स्नेहः प्रीतिःपुष्टिहेतुश्च घृतादिः वायुप्रकोपउ
न्मादोत्र मानसंचेतोदेवसरश्च आर्द्रभावोवत्सलत्वं सरसत्वंच
रजोगुणविशेषोधूलिश्चरसः प्रीतोरसायनंचरागो भिष्वंगोलौहि
त्यंचकालोंतकःकृष्णश्चतदस्येत्यादौ तत्तस्मादस्यशोकस्य पारं
विदुषामपिहृदयानिसोढुंनालंकिंपुनरबलानांहृदयमितिसंबंधः
अजस्रंसदाअस्रंवाष्पोरक्तंच व्रणंचरक्तंस्रवतिएवमुत्तरत्रापिज्ञेयं
वहलदोषाः वहवोपगुणाः कृष्णपक्षरात्र्यश्च अंधकारोमोहस्त
मश्च शून्यता किंकर्त्तव्यतामूढता महाभूतग्रामोजंतुसमूहः तद्
घातकस्य अयंचमहांतोभूताः प्राणिनोयस्मिन्ग्रामेजनपदसमू
हेतस्ययोघातकः सशून्यतायाजनरहितस्यहेतुर्भवति ।विग्रहः श
रीरंविरोधश्च दोषचक्रेमुख्यतयावर्त्ततेयः सदोषचक्रवर्त्तीचसा
र्वभौमः उपद्रवोवाधाव्याधेरुपर्यन्योव्याधिश्चउक्तंचव्याधेरुपरि
योव्याधिर्भवत्युत्तरकालजः उपक्रमविरोधित्वात्सह्युपद्रवउच्यते
इति ॥

दीर्घरोगस्य असद्ग्रहस्य सकललोकक्षयधूम
केतोः जीवितापहारदक्षस्य क्षणरुचेरनभ्रव
ज्रपातस्य स्फुरदनवद्यविद्याविद्युद्विद्योतमा
नानि गहनग्रथग्रंथिगूढगर्भग्रहणगंभीराणि
भूरिकाव्यकथाकठोराणि वहुशास्त्रोद्दहन
द्रुहंति विदुषामपि हृदयानि नालं सोढुमायातं
किमुत नवमालिकाकुसुमकोमलानां सरस
विसतंतुदुर्वलमवलानां हृदयम् एवं सति सत्य
व्रते वद किमत्राक्रियते कतम उपालभ्यते कस्य
पुरउच्चैराक्रंद्यते हृदयदाहि दुःखं वाख्याण्य
ते सर्वमाक्षिणी निर्माल्य सोढव्यममूढेन मर्त्य
धर्मणा पुण्यवति पुरातन्यः स्थितयः एताः
केन शक्यंतेन्यथाकर्तुं संसरंत्योनक्तंदिवंद्रा
घीयस्योजन्मजरामरणघटनघटीयंत्ररजिर
ज्जवः सर्वं पंचजनानां ॥

दीर्घरोगः क्षयादि असद्ग्रहोनर्थासक्तिः धूमकेतुश्चाशोभनोमूढः
नविद्यमानाक्षणमपि रुचिर्भोजनाभिलाषः क्षणरुचिस्तडिच्चत्र
स्फुरंत्याः प्रकाशमानाया अनवद्याया विद्याया विद्युत किंचिन्मा
त्रज्ञानेनविद्युदपिसकृदेवस्फुरति तथा ग्रहणानां दुरवग्रहाणां ग्रं
थानां ये विषमतमाः प्रदेशास्तेषां गूढतो योगर्भः तद्ग्रहणे
नगंभीराणि १२ पुण्यवति पुरातन्य इत्यादौ ध्वनिरुछाया जन्म
जरामरणघटनान्येव घटीयंत्ररज्या रज्जवः पंचजनामानुषाः मनु
ष्यामानुषा मर्त्या मनुजा मानवा नराः स्युः पुमांसः पंचजनाः पुरु
षाः पूरुषा नरा इति ॥

पंचमहाभूतपंचकुलाधिष्ठितांतःकरणव्यव
हारदर्शननिपुणाः सर्वकपाविषमाधर्मराज
स्थितयःक्षणमपिक्षममाणागलंत्यायुःकला
कलनकुशलानिलयेनिलयेकालनालिकाज
गतिसर्वजंतुजीवितेप्रहारपातिनीसंचरंतिज्ञ
टिति चंडिकायमाज्ञारटंत्यनवरतमखिलप्रा
णिप्रयाणप्रकटनपटवःप्रेतपतिपटहाः प्रति
दिशं पर्यटंति पेटकैःप्रतिपुरं प्रतप्तलोहलो
हिताक्षाःकालकूटकांतिकालकायाः कालपा
शपाणयः कालपुरुषाः प्रतिभवनंभ्रमंतिभी
षणाकिंकरकरघट्टितयमघंटापुटपटुटांकारभ
यंकराः सर्वसत्त्वसंघसंहरणायघोराघातघो
षणाः दिशिदिशिवहंतिवहुचिताधूमधूसरि
तप्रेतपतिपताकापटुपतितगृध्रदृष्टयःशोकक्र
तकोलाहलाकुलकुटुंबिनीविकीर्णकेशकला
पशवलशवाशिविकासहस्रसंकुलाःकिलकि
लायमानश्मशानशिविरशिवाशावकाःपरलो
कावसथपथिकसार्थप्रस्थानविशिखावीथयः

पंचकुलोध्यक्षःअंतःकरणं मनः कलाभागाः कलनंसंख्यानंना
लिकाहोराःचंडिकाभीषणारौद्रदेवताभेदश्च पेटकैःसमूहैःघो
षणाः राजाज्ञयापश्चादिसंवद्धः पटहादिशब्दोदिशिदिश्येवंवि
धारोतिविधेयेति विशिखावीथयोरथ्यामार्गावहंतीतिसंगतिः
कुटुंबिन्योपहेलाःशिविकावाहनं श्मशानमेवशिविरंयेषांते४३

सकललोककवलावलेहलंपटावहलावहंलि
हालेढिलोहिताचिता चितांगारकालीकाल
रात्रिजिह्वा जीवितानि जीविनाम् शि
क्षिताचभगवतःसर्वभूतभुजोवुभुक्षामृत्योःअ
तिद्रुतवाहिनीचानि त्यता नदा क्षणिकाश्चम
हाभूतग्रामगोष्ठ्यः रात्रिषु भंगुराणिगात्रयंत्र
पंजरदारूणि देहिनामशुभशुभावेशविवशा
विशरारवः शरीरनिर्माणपरमाणवः छिदुरा
जीववंधनपाशतंत्रीतंतवः सर्वमात्मनोनीश्व
रंविश्वंनश्वरंएवमवधृत्यनात्यर्थमेवार्हसि मे
धाविनिमृदुनिमनसितमसः प्रसरं दातुम् ए
कोहि प्रतिसंख्यानक्षण आधारीभवति धृतेः
अपिच दूरगतेपि हिशोके नन्विदानीमपेक्ष
णीयएवायंज्येष्ठः पितृकल्पोभ्राताभवत्यागु
रुः इतरथाकोनुवहुमन्येतकल्याणरूपमीदृ
शंसंकल्पमत्रभवत्याः काषायग्रहणकृतम ॥

वहलादीर्घंगौश्चउक्तंचवहलाः कृत्तिकागावश्चातिचवहंलिहाछि
द्रान्वेषिणीवहंलिहाचगौर्वत्सस्यभवतिदेहिनांशरीरवतांजीवाः
प्राणनएववंधनपाशतंत्रीतंतवः आत्मनोनीश्वरंनस्वायत्तंपरतं
त्रमित्यर्थः प्रतिसंख्यानंविवेककुशलामतिः दूरगतेपरधराधिरू
ढे ज्येष्ठः भ्रातेत्याद्युत्तरोत्तरंसाभिप्रायंव्याख्येयम् ४४

अखिलमनोज्वरप्रशमनकारणं हि भगवती प्रव्रज्या ज्यायःखल्विदं पदमात्मवतां महाभागस्तु भिनत्ति मनोरथमधुना यदयमादिशति तदेवानुष्ठेयं यदि भ्रातेति यदि ज्येष्ठइति यदिवत्सइतियदिगुणवानितियदिराजेति सर्वथास्थातव्यमस्यनियोगइत्युक्त्वा व्यरंसीत् उपरतवचसिच तस्मिन्निजगादनरपतिः आर्यमपहायकोन्यएवमभिदध्यात् अनभ्यर्थित दैवनिर्मिताहि विषमविपदवलंवनस्तंभा भवंति लोकस्य स्नेहार्द्रमूर्त्तयोमोहांधकारध्वंसिनश्च धर्मप्रदीपाः किंतु प्रणयप्रदानदुर्ललितादुर्लभमपिमनोरथमपि प्रीतिरभिलषति धीरस्यापिधार्ष्ट्यमारोपयति हृदयलघिमलंघितमतिवल्लभत्वं युक्तायुक्तविचारशून्यत्वाच्चशालीनमपि शिक्षयंति स्वार्थतृष्णाः प्रागल्भ्यमभ्यर्थनायारक्षंतिचजलनिधय इवमर्यादामार्याः दत्तमेवचशरीरमिदमभ्यर्थितेन प्रथममेवातिथ्याय माननीयेनभवतामहां अतःकिंचिदर्थये भदंत इयंनःस्वसावाला चवहुदुःखखेदिताच सर्वकार्यावधीरणोपरोधेनापि यावल्लालनीयानित्यं

अनभ्यर्थितेत्यादौध्वनिश्छायावगंतव्या धीरस्यगंभीरस्यलंघितमाक्रांतं शालीनमधृष्टत्वम् भदंतेतिबौद्धकर्मविशेषपूजावचनं अवधारणानुपेक्षणं ॥ ४५ ॥

अस्माभिश्च भ्रातृवधापकारिरिपुकुलप्रलय करणोद्यतस्य वाहोर्विधेयैर्भूत्वा सकललोकप्रत्यक्षं प्रतिज्ञाकृता पूर्वावमाननाभिभवम सहमानैरर्पित आत्मा कोपस्य यतोनियुक्तां कियंतमपि कालमात्मनामयोपि कार्ये मदीये दीयतामतिथये शरीरमिदं अद्यप्रभृति प्रतिज्ञाभारं आश्वासयति तातविनाशदुःख विक्लवाः प्रजाः तावदिमामत्र भवतः कथाभिश्च धर्म्याभिः कुशलप्रतिबोधविधायिभिरुपदेशैश्चारजोभिः शीलोपशमदायिनीभिश्च देशनाभिः क्लेशप्रहानहेतुभूतैश्च तथागतैर्दर्शनैरस्मत्पश्चोपयायिनीमिवप्रतिबोध्यमानामिच्छामिइयंतुग्रहीष्यतिमयैवसमंसमाप्तकृत्येन काषायाणि अर्थिजनेच किमिव नातिसृजंति महान्तः सुरनाथमात्मास्थिभिरपियावत्कृतार्थमकरोद्वैर्योदधिर्दधीचः मुनिनाथोप्यनपेक्षितात्मास्थातिरनुकंपेति कृत्वा कृपावानात्मानंवठरसत्त्वेभ्यःकतिकृत्वोनदत्तवान्

तथागतेर्वौद्धैः आत्मास्थिभिरपियावदित्यत्रयावच्छब्दोवधारणे मुनिनाथः सुगतः वठरसत्त्वाजडप्राणिनः सिंहाद्याः एवंकिल श्रूयते पुरा काचन सिंही प्रसवकालेबुभुक्षातुरास्वशावकान्भक्षयितुंप्रवृत्ता सौगतेनचसमालोक्यातिकारुण्यात्स्वमांसप्रदानेनतस्मान्निवारितेति ॥

अतःपरंभवंतएव वहुतरं जानंतीत्युक्तातूष्णीं वभूव भूपतिः भूयस्तुवभाषे भदंतः भव्यान्द्गिरुच्चारयंति वाचं चेतसा प्रथममेव प्रतिग्राहितागुणाः कायवलिमिमाम् अमुनाजनेनोपयोगस्तुनिरुपयोगस्यास्य लघुनि गुरूणि वाकृतेगुणवदायत्ताइति अथतथातस्मिन्नभिनन्दितप्रणये प्रीयमाणः पार्थिवस्तत्रता मुषित्वा विभावरी मुषसि वसनालंकारादिप्रदानपरितोषितं विसर्ज्यनिर्घात माचार्येण सहस्वसारमादाय प्रयाणकैः कतिपयैरेव कटकमनुजाह्नवि निविष्टंप्रत्याजगामतत्रच राज्यश्रीप्राप्तिव्यतिकरकथां कथयत एव प्रणयिभ्योरविरपिततारगगनतलम् वहलमधुपंकपिंगलः पंकजाकरइव संचुकोच चक्रवाकवल्लभोवासरः प्रकीर्णानि नवरुधिररसारुणवर्णानिलोकजूंषि यजूंषीव कुपितयाज्ञवल्क्यवक्रवांतानिनिजवपुषि पूषा पापमूंषि पुनरपिसंजहार जालकानिरोचिषाम् ॥

भव्याभाग्यवंतःकायएव वलिहेतुत्वाद्वलिरिवकायवलिस्तां ४६ पद्मखंडोपिचक्रवाकप्रियोमुकुलितोभवति रुधिररसवत्तनचारुणवर्णानीति यजूंषीति वेदोपलक्षणार्थः याज्ञवल्क्यः शाकल्यस्यमुनेर्वेदानधीत्याज्ञामकुर्वन् गुरुणोपालब्धः वेदान्परित्यजेतिततस्तेन चत्वारोपि वेदारक्तोपलिप्ता उद्वांतास्तेच शाकल्यमुनिनास्वेवपुषिसंक्रांताइतिश्रुतिः क्रमेणेत्यादावुष्णांशुमुंहूर्तमेवंविधोदस्यतइतिसंबंधः ॥

क्रमेणचसमुपोह्यमानमांसलरागरोचिष्णु रु ष्णांशुरुष्णीषवन्धसहजचूडामणिरिव वृको दरकरपुटोत्पाटितःप्रत्यग्रशोणितशोणांगरा गरौद्रो द्रौणायनस्य रुद्रभिक्षादानशौण्डपु रमथनमुक्तमुंडासिरानाडिरुधिरपूरण कपि लः कपालकर्पर इवच पैतामहः पितृवधरु षितरामरागरचितःपृथुविकटकार्त्तवीर्यांसकू टकुट्टाककुठारतुंडतष्टदुष्टक्षत्रियकंठकुहररु धिरकुल्याप्रणालसहस्रपूरितोहृदइव दूररो धीरौधिरः भयनिगूढकरचरणमुंडमंडलाकृ तिः गुरुगरुडनखपंजराक्षेपक्षपणक्षिप्तक्षत जोक्षितो व्यसुर्विभावसुकमठ इवच ॥

समुपोह्यमानोवर्धमानइत्यर्थः उष्णीषोवध्यतेयत्रसउष्णीषवंधो मस्तकः वृकोदरोभीमसेनःद्रौणायनोश्वत्थामा अत्रकथा अश्व त्थामासौप्तिकेहतपुत्रयाद्रौपद्याभीमसेनोभिधाय यद्यश्वत्थाम्नः शिरःछित्त्वानानीयते तदहंजीवितंत्यजामीति ततोहमेवंकरोमी ति प्रतिज्ञायायांतंभीमंदृष्ट्वाव्यासाश्रमस्थोरणश्रांतोघृताभ्यक्तो श्वत्थामाशस्त्राभावादिषीकाःसंमंत्र्यब्रह्मास्त्रंभीमवधायददौए काकिनश्चभ्रातुर्गमनाद्भीतेनार्जुनेनकृष्णसहितेन तमेवानुसरता ब्रह्मशिरोस्त्रंमुमुचेतदवसरागतैश्चनारदाद्यैर्मध्यस्थैर्भूत्वोक्तंद्रौणर स्त्रंरभिमंत्र्याप्रियायागर्भेपतत्विति अर्जुनेनाप्यात्मीयेस्त्रेसंहृतेभी मोश्वत्थाम्नःसहजं मूर्धमणिमुच्चीयनातिचिरेणाजगामेति मुक्त स्यकंमुंडाशिरःशिरानाड्यःरुधिरवाहिन्योनाड्यःकुट्टाकःछेदन शीलःकुठारतुंडं कुठारधारा ४७आक्षेपक्षपणमुत्क्षिप्यपरित्या गःक्षिप्तंनिःसृतम् ॥

लोठ्यमानेनभस्यरुणगर्भमांसपिंडांडइवच खंडिमानमानीतोनियतकालातिपातदूयमानदाक्षायणीक्षिप्तोधातुतट इवच सुमेरोः असुरवधाभिचारचरुपचनपिशुनःशोणितक्काथकषायितकुक्षिरतिविशंकटः कटाह इव च बार्हस्पत्यः सद्योगलितगजदानवदेहलोहितोपलेपभीषणोमुखमंडलाभोगइव महाभैरवस्य मुहूर्त्तमदृश्यत जलनिधिजलप्रतिविंबितरविबिंबराजिभास्वराभ्रावलंविनी गृहीतार्द्रमांसभारेवचावभासेवासरावसानवेलावेतालनिभाज्वलत्संध्यारागरज्यमानजलप्रवाहःपुनरिव पुराणपुरुषपीवरोरुसंपुटपिष्टमधुकैटभरुधिरपटलपाटलवपुरभवदधिपतिरर्णसाम् अवसितेसंध्यासमये

लोठ्यमानः परिभ्रमन् नियतकालातिपातः प्रलयागमः दाक्षायणी कालीपिशुनः सूचकः वेतालोपिगृहीतार्द्रमांसभरोभवति पटलंसमूहः अवसितेनिवृत्ते संध्यासमये निशया नरेन्द्रायश्वेतभानुरुपानीयतोपायनीकृतइतिसंवंधः ॥

समनंतर मपरिमितयशः पानतृषिताय मुक्ताशैलशिलाचषक इव निजकुलकीर्त्या कृतयुगकरणोद्यतायादिराजराजतशासन मुद्रानिवेश इव राज्यश्रिया सकलद्वी पजिगीषाचलिताय श्वेतद्वीपदूत इवचा यत्या श्वेतभानुरुपानीयत निशया नरेन्द्रे णेति भद्रमोम् ॥ इतिश्रीचित्रभानुसूनुम हाकविचक्रचूडामणिश्रीवाणभट्टकृतौ हर्षच रितेमहाकाव्येऽष्टमउच्छ्वासः ॥ ८ ॥

आदिराजस्यमनोर्वैन्यस्यवामुद्रानिवेशोराज्याधिकारमहामुद्रा चलिताय निर्गताय आयत्यागामिशुभदैवेनेति भद्रमों ॥ दुर्बो धेहर्षचरितेसंप्रदायानुरोधतः गूढार्थोन्मुद्रणंचक्रेशंकरोविदुषां कृते ४८ इतिश्रीमहाकविचूडामणिशंकरकविविरचितेहर्षच रितसंकेतेष्टमउच्छ्वासः ८ समाप्तोयंहर्षचरितसंकेतः ॥

---

समाप्तमिदं हर्षचरितं महाकाव्यम् ॥

शोधितमेतन्निधिपतिना

# अशुद्धिपत्रम्

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| ३ | ११ | योगे | योगो |
| ४ | ५ | शब्दौ | शब्दो |
| ७ | १२ | आश्लिष्टः | अक्लिष्टः |
| ९ | ५ | भाव्या | काव्या |
| १० | १५ | स्यायोसकः | चार्चिक्यः |
| ११ | ९ | टुदुरूढा | दुरूढ |
| १५ | २ | रंम | रमे |
| १६ | ४ | भाजे | भाञ्जि |
| १७ | ९ | स्तोर | तोर |
| २० | १ | ता | तां |
| २२ | १८ | वालयि | वालि |
| २३ | १० | नाचः | नीचः |
| २७ | ८ | काव | कवि |
| ३० | २ | राशु | राशु |
| ३० | ७ | सृत | सृत |
| ३० | ११ | रट | रद |
| ३२ | ११ | स्कंदा | स्कधा |
| ३४ | १५ | रढा | रठा |
| ३५ | १० | करि | कारे |
| ३७ | ९ | भूमयः | प्रभावानां |
| ३७ | १२ | हातः | हांतः |

# अशुद्धिपत्रम्

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| ३८ | १३ | क्तैः | क्ते |
| ४० | १२ | माम | मान |
| ४० | १५ | भहः | महः |
| ४२ | १४ | ङ्गागो | ङ्गागौ |
| ४३ | १५ | गमन | गगन |
| ५२ | १ | कुद | कुंद |
| ५२ | १० | हतै | हितै |
| ५३ | ८ | रुभा | रूभा |
| ५३ | १६ | रुभा | रूभा |
| ५६ | २१ | त्युक्त | त्युक्तं |
| ५७ | १३ | मैत | मेत |
| ६१ | २० | तव | तवं |
| ६५ | १२ | क्षिने | क्षिते |
| ६६ | १३ | रढः | रठः |
| ६९ | ६ | चं | तं |
| ७० | ७ | मभ | मभा |
| ७२ | १९ | विदु | विंदु |
| ७४ | १८ | करा | कार |
| ८० | १३ | नेह | नहे |
| ८१ | १२ | न्नः | न्न |
| ८१ | १३ | धात | धा |

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| ८२ | ३ | गग | ग |
| ८३ | ९ | जीन | जनी |
| ८३ | ९ | लापं | लापे |
| ८४ | १० | केषु | कोषु |
| ८४ | १० | भिर्गी | भिगं |
| ८४ | १३ | धवा | धवां |
| ८५ | ११ | वात्मा | चात्मा |
| ८५ | १८ | एव | एवं |
| ८६ | १२ | भाग | भागः |
| ८७ | ४ | स्याख्य | ताख्य |
| ८९ | १० | स्वयी | स्वयं |
| ८९ | १२ | स्वमा | ह्यमा |
| ८९ | १३ | रजाः | रज |
| ८९ | १४ | स्तैः | स्तै |
| ९१ | ११ | भुंजः | भुजः |
| ९२ | २ | इंश | इंशा |
| ९४ | ११ | भव | भवं |
| ९५ | १० | गा द्याः | गी द्यः |
| ९६ | १५ | यंत | स्तय |
| ९७ | ७ | मतो | मंति |
| १०१ | १५ | कमं | कामं |

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| १०३ | ४ | हांत | ह्यंत |
| १०३ | ५ | पने | पेने |
| १०३ | ७ | धर | धार |
| १०४ | ३ | रध | राध |
| १०७ | १३ | कुराः | रराः |
| १०८ | १६ | कटः | वाटः |
| ११० | ११ | त्रद्य | त्राद्य |
| ११४ | १५ | कचकचा | कचा |
| ११४ | १८ | प्रस | प्रसव |
| ११५ | ७ | कुन | कुनि |
| ११६ | १६ | भोमाः | भौमाः |
| ११९ | २० | स्तेः | स्ते |
| १२० | १२ | पात | पातः |
| १२१ | ३ | दुवृ | दुर्वृ |
| १२२ | ८ | षिभि | षिभिः |
| १३१ | १० | मस्क्रीं | मास्क्रि |
| १३२ | १ | श्वप | श्वाप |
| १३६ | ६ | संपं | तपं |
| १४० | १५ | यंते | यते |
| १४१ | ११ | च्चप | च्चय |
| १४५ | १५ | भदः | भेदः |

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| १५२ | १ | डय | डूय |
| १५२ | १० | जयगणना | जय |
| १५३ | ८ | काडं | कांडं |
| १५५ | ३ | भ्रम | भ्रम |
| १५७ | १ | यंत | यंतं |
| १६१ | ८ | शांत | शात |
| १७३ | ३ | ङ | ङ् |
| २०१ | ३ | सातू | सीतू |
| २०९ | १ | नहा | महा |
| २१० | १० | परि | पर |
| २११ | ४ | जिन्हा | जिव्हा |
| २११ | ७ | समं | स्यमं |
| २११ | १० | प्रति | प्रत्य |
| २१२ | ७ | पमे | यमे |
| २१३ | ३ | वढ | वठ |
| २१४ | ५ | क्षुरे | खुरे |
| २१४ | ७ | पृष्टो | पृष्ठो |
| २१५ | ५ | पुंद्रे | पुंड्रे |
| २१५ | १२ | चात | घात |
| २१६ | ३ | ष्टे ष्टि | ष्ठे ष्ठि |
| २१७ | ३ | ष्टः | ष्ठः |

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| २१७ | १ | व | व |
| २२० | ४ | यत्रः | ःयत्र |
| २२१ | ३ | द्रुव | द्रव |
| २२२ | ७ | णा | णां |
| २२३ | ३ | नामा | रामा |
| २२३ | ८ | वीज | वीर |
| २२३ | १३ | गोष्ठी | गोष्ठी |
| २२४ | ५ | श्यमाः | श्यामाः |
| २२४ | ७ | गम्यः | गम्याः |
| २२६ | ५ | वाह्ल | वाह्य |
| २२६ | ९ | विष्प्र | निष्प्र |
| २२६ | १० | निन्द | विन्द |
| २२७ | ३ | नीन्द्रो | नीन्द्र |
| २२७ | ५ | एश्व | ऐश्व |
| २२८ | ७ | स्वेरि | स्वैरि |
| २२९ | ४ | भव | भवे |
| २२९ | ४ | छिदि | च्छिदि |
| २३० | ६ | बिरे | विरे |
| २३० | ११ | पष्टी | यष्टि |
| २३१ | २ | रन्ध | रुध |

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| २३२ | ३ | देब | देव |
| २३२ | ५ | च्छुत्वा | च्श्रुत्वा |
| २३२ | ९ | तुंग | तूंग |
| २३३ | २ | कोपो | कौपी |
| २३३ | ९ | चैऽन | चैन |
| २३३ | १० | प्रछ | प्रच्छ |
| २३३ | ११ | व्राट | व्राट् |
| २३३ | १६ | रत्र | रत्न |
| २३४ | २ | सय | सम |
| २३४ | १५ | भ | भग |
| २३५ | २ | दात्त | दत्ता |
| २३५ | २ | ष्टिता | ष्ठिता |
| २३५ | ७ | क्रिय | क्रय |
| २३५ | ९ | ध्वंव | ध्वंव |
| २३५ | १४ | प्रदें | प्रदे |
| २३५ | १४ | तिर | तिरः |
| २३६ | १२ | गंछ | गच्छ |
| २३६ | १२ | स्थि | स्थित |
| २३६ | १३ | तौष्टं | तौष्ठं |
| २३७ | २ | कोष्ट | कोष्ठे |
| २३७ | ५ | दाक्षि | दक्षि |

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| २३७ | ५ | रसी | रसि |
| २३७ | १३ | तिहि | तिह |
| २३७ | १४ | द | दक्षि |
| २३८ | १ | ज्ञालि | क्षालि |
| २३८ | ६ | शत | सत |
| २३८ | ११ | छायं | च्छायं |
| २३९ | १२ | जन्ह | जन्हु |
| २३९ | १३ | ह्रंद | ह्राद |
| २३९ | १४ | शब्द | शब्द |
| २४० | ८ | गछा | गच्छा |
| २४० | ८ | मांत्मा | मांत्मी |
| २४० | १० | सूभ | सुभ |
| २४० | १३ | ल्वपं | ल्वयं |
| २४१ | १ | भग | भ |
| २४१ | ४ | न्णीयं | णीयं |
| २४१ | १० | नम्न | नम्र |
| २४१ | १४ | च्छूरी | च्छरी |
| २४३ | ५ | पचरां | पंचरा |
| २४३ | ८ | व | भव |
| २४४ | ११ | छद्म | च्छद्म |
| २४४ | १२ | च्छेद | श्छेद |

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| २४५ | ३ | च्छिदं | श्छिदं |
| २४५ | ७ | मार्ग | मार्गे |
| २४६ | २ | लसा | लसाः |
| २४६ | ३ | भब्या | भव्या |
| २४६ | ९ | पृवं | पूवं |
| २४६ | १३ | बंत | वंत |
| २४६ | १३ | तिष्ट | तिष्ठ |
| २४६ | १४ | ए | एवं |
| २४६ | १५ | मवि | मा वि |
| २४७ | २० | विकी | चिकी |
| २४८ | १ | छाया | च्छाया |
| २४८ | २ | बे बो | बे वो |
| २४८ | ५ | शव्दे | शब्दे |
| २४८ | १० | पृष्ट | पृष्ठ |
| २४८ | १२ | निश | निर |
| २४८ | १३ | त्यज | त्याज |
| २४९ | ६ | लव्धाः | लब्धाः |
| २४९ | ६ | स्वय | स्व |
| २४९ | ७ | लास | ल्लास |
| २४९ | ११ | शाय | शाया |
| २४९ | ११ | कृतेः | कृत्तेः |

# अशुद्धिपत्रम्

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| २४९ | १५ | पाताल | ० |
| २४९ | १५ | श्र | श्रा |
| २५० | २ | पृछ | पृच्छ |
| २५० | ३ | ग्गुज | गुग्गु |
| २५० | ५ | मिब | मिव |
| २५० | ६ | कप्लि | कल्पि |
| २५० | ८ | वल | वले |
| २५० | ८ | ड | डल |
| २५० | ११ | मन्दि | मन्द |
| २५० | १२ | चंद | चंदना |
| २५२ | १३ | तिष्ट | तिष्ठ |
| २५३ | १ | वला | वल्ग |
| २५३ | ८ | न ष्ट | ण ष्ठ |
| २५३ | १३ | दक्ष | दक्षि |
| २५४ | ४ | लषि | लष |
| २५४ | ७ | ग्रहं | ग्रंह |
| २५४ | ८ | गम | गग |
| २५४ | ११ | ष्टु ष्ट | ष्ठु ष्ठ |
| २५४ | १४ | छले | च्छले |
| २५५ | ७ | ह्राषि | ह्रेषि |
| २५६ | ५ | च्छेतु | श्छेत्तु |

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| २५६ | ७ | व्यापा | व्यापा |
| २५६ | ९ | त्युत्को | त्युत्को |
| २५६ | १२ | पूर | पुर |
| २५६ | १५ | रंती | रंती |
| २५६ | १५ | यमां | यामां |
| २५६ | १७ | लश्रा | लश्रा |
| २५७ | ७ | स्वछा | स्वच्छा |
| २५७ | १० | लग्रे | लग्ने |
| २५७ | १२ | दध | दधा |
| २५७ | १३ | लायि | लायि |
| २५७ | १४ | भव | भाव |
| २५८ | ९ | धिष्टि | धिष्ठि |
| २५९ | ३ | तत्वा | तवा |
| २५९ | ७ | स्तीर्णं | स्तीर्यं |
| २५९ | ८ | यर्यं | पर्यं |
| २५९ | ९ | सत्वो | सत्त्वो |
| २६० | २ | रव | रवा |
| २६० | ८ | स्वप्रे | स्वप्ने |
| २६० | १२ | एव | इय |
| २६० | १३ | लबो | लवो |
| २६० | १४ | मत्मा | मात्मा |

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| २६० | १६ | सम | समा |
| २६१ | २ | केना | केणा |
| २६१ | ८ | व्यो ष्टु | व्यो ष्ठु |
| २६१ | ११ | ह्युचि | द्युचि |
| २६१ | १३ | षरि | परि |
| २६२ | १ | यिष्टा | यिष्ठा |
| २६२ | ६ | लेषि | लेखि |
| २६२ | १० | र्रति | रति |
| २६२ | १६ | सुत | सु |
| २६३ | ६ | यीपपा | पपियसि |
| २६३ | ६ | लोपस | ० |
| २६३ | ६ | प्रक्षा | प्रक्षाल्यां |
| २६३ | ७ | न्यार्स्मि | न्यस्मि |
| २६३ | १० | नुक्तौ | नुरक्तौ |
| २६३ | १५ | ब तां | व त्तां |
| २६४ | १ | च्छासः | च्छ्वासः |
| २६४ | ३ | च्छास | च्छ्वासः |
| २६४ | ४ | पुर्णाः | पूर्णः |
| २६४ | ५ | नेछ | नेच्छ |
| २६५ | ५ | भर | भार |
| २६६ | ४ | रण | रणा |

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| २६७ | २ | छा | च्छा |
| २६७ | ५ | ह्न | हून |
| २६८ | १ | रिपु | रिपू |
| २७० | १ | यूथ | यूंथ |
| २७० | ५ | द्भूय | द्भूयं |
| २७० | ७ | मित्र | मित्र |
| २७१ | ८ | भवै | भवै |
| २७२ | ४ | धीम | धिम |
| २७२ | ५ | चट | च |
| २७२ | ८ | प्राणी | प्राणि |
| २७२ | ८ | हे | हणे |
| २७२ | ९ | :पु | पु |
| २७४ | १४ | सान | मान |
| २७३ | ५ | रांङ् | राङ् |
| २८० | ५ | नेषु | नेषू |
| २८० | ८ | लनै | लैनै |
| २८५ | १ | काल | कलि |
| २८५ | १० | स्नान | स्नानां |
| २८५ | १२ | वेषा | वेषां |
| २८८ | १५ | पूर | पुर |
| ३०५ | ८ | वध | वधं |
| ३०७ | १३ | स्थ | स्थल |

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| ३०८ | ८ | मूहू | मुहू |
| ३०९ | ९ | काले | कालः |
| ३१३ | १८ | वध | ध्रूव |
| ३१४ | ३ | जित | जिर |
| ३१४ | ७ | गाछा | गांछा |
| ३१४ | ९ | स्फु | स्फुर |
| ३१७ | ८ | ऐसा | असौ |
| ३१७ | १४ | सत | सत् |
| ३१८ | १५ | गम्र | गाम्र |
| ३१९ | ४ | विना | विनां |
| ३१९ | १६ | केने | केणे |
| ३२० | १४ | च्छेत्ति | च्छेति |
| ३२१ | १३ | स्कमु | स्कुमु |
| ३२३ | १२ | भि | भिरेव |
| ३२५ | १२ | वि | विस |
| ३२६ | १ | अथ | प्रथ |
| ३२७ | १ | गतं | गंत |
| ३२८ | १७ | कौत | कौतु |
| ३२९ | १३ | माधं | मांधं |
| ३३४ | १६ | स्यता | स्यतां |
| ३३८ | ७ | काना | काणा |
| ३३९ | ३ | सन्ति | सन्नि |

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| ३४८ | १२ | कः | • |
| ३५० | १५ | मान | मा!ण |
| ३५१ | ७ | टभी | टीभ |
| ३५१ | ८ | रची | रीच |
| ३५१ | १४ | दवे | देव |
| ३५१ | १६ | टलं | ° |
| ३५१ | १७ | प | पटलं |
| ३५२ | ८ | पृच्छचा | पृच्छय |
| ३५३ | ६ | काशु | कांशु |
| ३५४ | ५ | माम | मांम |
| ३७२ | १ | केवि | केचि |
| ३७२ | १८ | रागै | रागे |
| ३७४ | १४ | मच | माच |
| ३७७ | ६ | त्रषु | त्रेषु |
| ३९६ | १० | षण | पण |
| ३९६ | १८ | माया | मायां |
| ३९७ | २ | काडे | कांडे |
| ४०४ | १ | पाट | पाद |
| ४०६ | ७ | षणे | पाणे |
| ४०६ | १० | युक्तः | युक्ताः |
| ४०८ | ४ | लांक | लोक |
| ४१६ | १० | च्छाटा | च्छटा |

# अशुद्धिपत्रम्

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| ४१७ | ७ | णाना | णानां |
| ४२० | २ | रुढः | रूढः |
| ४२० | २ | वाध | वांध |
| ४२२ | ४ | सैन | सेन |
| ४२३ | १३ | वांशि | बेशि |
| ४२५ | १५ | मृत | सृत |
| ४३० | १९ | जैभ्य | जैभ्यः |
| ४३१ | २ | ध्वानि | ध्वान |
| ४३३ | १२ | लव | हंब |
| ४३६ | ५ | तागे | तग |
| ४४० | १२ | प्राणा | प्रणा |
| ४४० | २० | कालि | कालिं |
| ४४७ | १ | रण | रणा |
| ४४८ | ४ | चक्र | चक्र |
| ४५५ | १७ | काना | कानां |
| ४५७ | ४ | जंया | जैयां |
| ४५८ | ७ | काज | कांज |
| ४५८ | ७ | नाना | नानां |
| ४६० | २ | हस्म | हस्तु |
| ४६० | ४ | पत्रो | पुत्रो |
| ४६७ | ८ | शाप | शेप |
| ४७४ | १ | शष्क | शुष्क |

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| ४७४ | ९ | स्थणू | स्थाणू |
| ४७९ | ८ | टुवि | ट्ठवि |
| ४८३ | २ | धाना | थानां |
| ४८३ | १४ | स | सह |
| ४८४ | १ | षणं | षणें |
| ४८६ | ८ | दव | दंव |
| ४८९ | १२ | गेष | रांप |
| ४९३ | १० | मयं | मायं |
| ४९४ | १२ | गंत | गतं |
| ४९४ | १४ | कस्मा | स्मा |
| ४९५ | ३ | यवः | यवाः |
| ४९५ | ९ | चसा | घसां |
| ४९५ | ११ | यते | तं |
| ४९५ | १४ | यः | मयः |
| ४९६ | ८ | रयं | रयंट |
| ४९७ | ७ | सद | साद |
| ४९८ | १६ | णानां | णाना |
| ४९८ | १६ | नीना | नीनां |
| ४९८ | १७ | कर | कार |
| ४९९ | ९ | ठक्क | टक्क |
| ५०१ | ९ | शोभा | शोभां |

# अशुद्धिपत्रम्

| पृ० | पं० | अ० | श० |
|---|---|---|---|
| ५०२ | १७ | वेशेष | वशेषे |
| ५०३ | १ | मशा | माशा |
| ५०३ | २ | कृशा | कृशां |
| ५०३ | १० | मया | मय्या |
| ५०६ | १७ | वण | वणन |
| ५०७ | ४ | राकि | राकी |
| ५०० | ११ | मान | माण |
| ५०९ | १ | गाधा | गांधा |
| ५०९ | १० | स्त्रामि | स्वामि |
| ५१० | ५ | या | यांद |
| ५१२ | १४ | सम | समा |
| ५१३ | १ | हं | हा |
| ५१३ | २ | भनि | भागि |
| ५१५ | ११ | किचि | किंचि |
| ५१६ | १२ | तासा | तासां |
| ५२४ | ८ | पर्यं | पर्य्यं |
| ५३० | ३ | विब | विंब |

ज्ञातसारोपिखल्वेकस्तांद्विग्धेकार्यवस्तुनि

इत्यशुद्धिपत्रम्